University of Mysore

Oriental Research Institute Publications

SANSKRIT SERIES No. 95

GENERAL EDITOR:

SRI H. DEVEERAPPA, M.A.

*Superintendent in charge*
*Oriental Research Institute, Mysore*

श्री नीलकण्ठशिवाचार्यविरचितः

# क्रियासारः

(उपदेशाचतुष्टयात्मकः प्रथमो भागः)

# THE KRIYĀSĀRA

OF

SRI NĪLAKAṆṬA ŚIVĀCHĀRYA

Vol. I

(*1 to 4 Upadeshas*)

EDITED BY

VIDVAN R. RAMASASTRI

AND

VIDVAN N. S. VENKATANATHACHARYA



MYSORE:

PRINTED BY THE SENIOR ASST. DIRECTOR AT THE GOVT. BRANCH PRESS

1954

# अनुक्रमणिका

# उपोद्घातः

विदितमेवैतत्सर्वेषां यदखिलेऽस्मिन् विरिञ्चिप्रपञ्चे सर्वेऽपि जनाः निसर्गत एव स्वैः स्वैरपेक्ष्यमाणयोः सुखसंपत्तिदुःखनिवृत्त्योः कृते दिवानिशं प्रयतमानाः, यतनानुगुणां सिद्धिं विन्दन्तोऽपि उपर्युपरिदर्शनेन अगणयन्त एव तां अतुष्यन्तः, असम्भविन्यप्यर्थे कुण्ठितगतयोऽप्यकुण्ठिताशाः अन्ततोऽपि तयोः परं पारं प्रकृष्टोपायनिश्चयं वा अनासादयन्तः, तत्राप्यनुभूतप्रायात् तत्कालानुभाव्यमानदुःखात् भाविदुःखस्यैव भूयस्त्वभीकरत्वादीनप्यजानानाः भ्राम्यन्तः महति दुःखपङ्के निमग्नाः भृशं सीदन्तीति; एतेषामेव निरतिशयसुखात्यन्तिकदुःखनिवृत्तितदुपायबोधनेन समुद्धरणाय परमकारुणिकेन भगवता परमेश्वरेण मातापितृसहस्रेभ्योऽप्यधिकतरं वत्सलाः अनन्ताः निगमागमादयः प्रवर्तिताः इति; कालवशेन च आलस्यादिना संक्षेपरुचीनां लोकानां अतिविस्तृतेष्वेष्वादरशून्यतां, तथा चैषु दुरवबोधतां विलुप्तप्रचारतां अकार्यकरतां चावेक्ष्य अनेकैस्तत्तन्मताभिमानिभिः स्वस्वमतप्रतिष्ठापकाः सङ्ग्रहरूपाः बहवो ग्रन्थाः निरमायिषतेति च ॥

[प्रकृतग्रन्थपरिचयः मुद्रणोद्देशश्च]

एतादृशेष्वेव ग्रन्थेष्वन्यतमोऽयं प्रकृतः सकलनिगमागमसारललितसुग्रहसंग्रहरूपः वीरशैवमतानुयायी क्रियासारनामा प्रबन्धः, यः किलाद्यावधि सार्वजनीनैः नागराक्षरैस्संपूर्णतया अमुद्रितः, बहुतिथाद्वत्सरात्प्राक् क्वचिदान्ध्राक्षरैस्सकृन्निर्वृत्तमुद्रणोऽप्यशुद्धिभूयिष्ठः चिरादेव दुरधिगमतामवाप्तश्चेति विमनीभावमासेदुषां कृतधियां मुदे एतत्संशोधनशालाद्वारा मुद्रणायोपक्रान्तः, अनेन कालेन अवसितब्रह्मसूत्रव्याख्यारूपोपदेशचतुष्टयात्मकप्रथमभागमुद्रणश्च सन् इदानीं सहृदयानां श्रीमतां करकमलयोर्विनिवेश्यते ॥

[ग्रन्थकर्ता तत्पितरौ च]

ग्रन्थस्यास्य कर्ता श्रीमान् वीरशैवाग्रणीः नीलकण्ठशिवाचार्यः। अस्य च पिता मल्लयदेवः इति, माता चन्नमाम्बेति च आदितः चतुर्थपञ्चमाभ्यां पद्याभ्यां ज्ञायते। यथा ;—

वन्दे मल्लयदेवदेशिकवरं तातं शिवाराधने
बद्धोत्साहं अनादिवीरविलसच्छैवागमोक्तक्रमैः।
प्रातर्मध्यदिनेऽथ सायमुचितैः नालं दिवाशर्वरी
यत्स्वाभाविकभक्तियोगलहरीविस्तारणायाखिला ॥ इति ;

तां वन्दे चन्नमाम्बां अहरहरुदितैः भक्तिभावैरुदारैः
पातिव्रत्यं शिवार्चापरिचरणविधौ साधु संपादयन्तीम्।
मैत्रीमानन्दयन्तीं परशिवपदयोः पश्यतां पावयित्रीं
धात्रीशीलानुकर्त्रीं परकृतसहने सादरं मत्सवित्रीम् ॥

इति च ॥

[ग्रन्थकारजीवितसमयः]

अयं च ग्रन्थकारः कं देशं कां वा कालकलां अलञ्चकारेत्यस्मिन् विषये ग्रन्थकारेण न किञ्चित्प्रपञ्चितमपि एतद्ग्रन्थव्याख्यातृप्रमाणयितॄणां हस्तावलम्बनेनैव किञ्चिद्वक्तुं प्रयतामहे ;— तथाहि ;—

क्रियासारस्यास्य निर्वाणमन्त्रिराज (A.D. 1725) कृतं क्रियासारसर्वस्वभूषणाभिधानमेकं व्याख्यानं दृश्यते। अयं निर्वाणमन्त्रिराजश्च दोड्डनगरसीमाप्रान्त्यकेळदिनृपस्य सोमशेखर (A.D. 1714-1739) नाम्नः मन्त्री तस्यैव जामाता चेति तावत् प्रसिद्धमेव। सोऽयं व्याख्याकारः प्रथमोपदेशव्याख्यारम्भे—

"मौनप्प संख्यावदुदारभाव-
मोदाय भूयाल्लिखितं मयेदम्"

इति लिखति। अयं मौनप्पपण्डितश्च स्वविरचितवीरशैवाचारकौस्तुभस्यान्ते ग्रन्थसमाप्तिकालं एवं निर्दिशति—

प्रख्याते वरशालिवाहनशके व्योमारिषड्वर्गषट्-
चन्द्राख्ये गणनायिते प्रगुणितेऽब्दे कालयुक्ताक्षके।

नैजेऽष्टाश्वयुजे प्रवृद्धतिथिके पक्षे तृतीयादिने
मौनप्पाभिधधीरनिर्मितवरग्रन्थोऽगमत् पूर्णताम् ॥

इति । अनेनैकेन कारणेन व्याख्याकारः १६६० परिमिते शालिवाहन शकाब्दे (A.D. 1738) आसीदिति, ततः पूर्वमेव च एतद्ग्रन्थकारकालः इति वक्तुं शक्यते ॥

एवं कमलाकरभट्टोऽपि (विक्रमाब्दः १६६८, A.D. 1612) स्वकृतनिर्णयसिन्धुनाम्नि धर्मशास्त्रग्रन्थे पार्थिवपूजाप्रकरणे स्वोक्तार्थविशेषे प्रमाणत्वेन क्रियासारस्थं श्लोकद्वयं ग्रन्थनामनिर्देशपूर्वकं उपन्यस्यति—

"मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् ।
अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ॥
अपनीतं च निर्माल्यं चण्डेशाय निवेदयेत् ।
अशून्यमस्तकं लिङ्गं सदा कुर्वीत पूजकः ॥

इति क्रियासारे उक्तम्" इति ॥

कमलाकरभट्टोऽपि निर्णयसिन्धुग्रन्थान्त्यभागे 'वसुऋतुऋतुभूमिमिते विक्रमाब्दे (१६६८)' इति स्वकालं निर्दिशत ॥

एवं मल्लणार्य (A.D. 1513) विरचिते कर्णाटकभाषामये वीरशैवामृतमहापुराणे सप्तमकाण्डे द्वितीयाध्याये सप्तविंशतितमपद्ये क्रियासारग्रन्थोल्लेखपूर्वकं—

'अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम्'

इत्ययं खण्डः उद्धृतः । वीरशैवामृतमहापुराणं च A.D. 1530 तमे खिस्तशके समापितमिति तद्ग्रन्थस्य अष्टमे काण्डे द्वाविंशसन्धौ पञ्चाशात् पद्यात् सुस्पष्टं ज्ञायत इति ततोऽपि प्राचीन एवायं ग्रन्थकारः स्यादित्येवं विमर्शैः अन्ततः अयं ग्रन्थकारः प्रायशः खिस्ताब्दे (A.D. 1400) पञ्चदशशतकस्यादिभागे आसीदिति, नैव ततोऽर्वाचीन इति च निःसंशयं वक्तुं शक्यते इति । श्रीमान्. R. नरसिंहाचार्यः कर्णाटककविचरितकर्ताप्येवमेवाभिप्रैति ॥

[ग्रन्थप्रसिद्धिः]

अस्य च ग्रन्थस्य, शारदातिलके, पञ्चमनेपालमहाराजाधिराजप्रतापसिंहमहाराजबहद्दूर्वर्मविरचिते पुरश्चर्यार्णवे च तत्र तत्र प्रमाणत्वेन उद्धरणात् अयं ग्रन्थः चिरादेव दक्षिणोत्तरदेशयोः प्रसिद्धिं गतः इति ज्ञायते इत्यपि प्रमोदस्थानमेव ॥

[एतद्ग्रन्थकर्तृविरचितग्रन्थान्तरम्]

अनेनैव ग्रन्थकारेण कर्णाटकभाषामयः अपरोऽपि सकलागमार्थविवरणरूपः कश्चन ग्रन्थः विरचितः आसीदिति क्रियासारे एकोनविंशोपदेशान्त्यभागे लिखितया "अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीय इति मन्त्रेण कृतकलासन्निधानस्य लिङ्गस्य दीक्षापूर्वकं धारणमिति आगमोक्तप्रकारः भाषाप्रबन्धेऽस्मत्कृते अवलोकनीयः" इति पङ्क्त्या ; चतुर्विंशोपदेशे लिखितया "एकोत्तरशतस्थलानां भेदस्तु भाषाप्रबन्धादेवावगन्तव्यः" इति पङ्क्त्या च ज्ञायते। सोऽयं भाषामयः ग्रन्थश्च अद्यावधि केनाप्यनुपलब्धः इति महती विषादभूमिरेव ॥

[एतद्ग्रन्थरचने हेतुः]

अस्य च क्रियासारस्य रचने कारणं बुबोधयिषुः अयं ग्रन्थकारः, कदाचन निशावसानसमये स्वप्ने स्वयमेवागतेन भगवता कैलासनाथेन उपदिष्टमन्त्रविशेषः तत्फलतया चाधिगतसकलागमान्तार्थः, तेनैव सर्वार्थसारसंग्रहरूपक्रियासाराभिधानैतद्ग्रन्थरचने उद्योजितः च सन् प्रवृत्तः इति स्वयमेवाह ॥

यथा —

देवः कैलासनाथः कलितशशिकलः शर्वरीपश्चिमांशे
कारुण्याम्भोनिधिर्मामशिशिषदमलैः सूक्तिवृन्दैरमन्दैः।
सर्वेषामागमानां वचनसमुदयैः सङ्गृहीतैः प्रबन्धं
कुर्यास्त्वं वत्स बुद्धिः प्रसरति विमला ते क्रियासारनाम्ना ॥

इत्याज्ञप्तस्तु तेन स्वरसविकसितां बुद्धिमासाद्य सूक्ष्मां
भूयस्यै प्रीतयेऽहं जगति सुमनसां सत्क्रियासारमेनम्।

कुर्वे सर्वागमानां परशिववचसां सङ्ग्रहं नीलकण्ठः
स्मारंस्मारं स्मरारेः मनुमनुकलयन् स्वप्नलब्धोपदेशम् ॥

इति ॥ (पुटं २)

[ग्रन्थगतोपदेशसंख्यानिर्णयः]

अयं च ग्रन्थः द्वात्रिंशदुपदेशात्मकः इति उपोद्घातप्रकरण-स्थेन—

'प्रबन्धस्य क्रमादेवं उपोद्घातादनन्तरम् ।
द्वात्रिंशदुपदेशास्ते भवन्ति कथिता इमे ॥' (पुटं ४)

इति श्लोकेन स्फुटं ज्ञायते । परन्तु उपोद्घातप्रकरणवर्जं एक-त्रिंश एवोपदेशे "समाप्तोऽयं ग्रन्थः" इत्येव दृश्यते । न च उपोद्घात-प्रकरणसङ्कलनेनैवायं संख्यानिर्देश इति शङ्क्यम् । उपदेशार्थानां सङ्ग्रहप्रसङ्गे—

.......................... द्वात्रिंशदुपदेशके ।
शिवमाहात्म्यकथने श्रवणे भक्तिपूर्वकम् ।
श्रेयःपरम्परावाप्तिः .......................... ॥ (पुटं ६)

इति प्रत्येकविषयसङ्ग्रहदर्शनेन, 'उपोद्घातादनन्तरम्'इत्येव स्पष्टमुक्तत्वेन च तादृशशङ्कायाः अनवकाशात् । एवं च अन्त्योपदेशस्य कस्यामपि मातृकायामनुपलम्भात् अयं भागः लुप्त एवेति, यावदुपलब्धग्रन्थान्ते एव आधुनिकैः 'समाप्तोऽयं ग्रन्थः' इति लेखनेन ग्रन्थः समापित इति च वक्तुं शक्यते ॥

[उपोद्घातप्रकरणविषयसंग्रहः]

अस्मिंश्च ग्रन्थे आदिमं उपोद्घातप्रकरणम् । तत्र प्रतिपा-दितानां विषयाणां अयं सङ्ग्रहः ;—

मङ्गलाचरणपूर्वकं ग्रन्थरचनप्रवृत्तौ हेतुकथनम् ।

आगमानां द्विधा विभजनेन वीरशैवागमस्यैव वैदिकत्व-मिति अन्येषां अवैदिकत्वमिति च निरूपणम् ।

अनेकत्र वेदागमयोर्विरोधेऽपि, भगवन्निःश्वासरूपवेदा-पेक्षया तदुच्चरितागमानामेवाधिक्येन वेदविरोधस्य अप्रयोजकत्व-कथनम् ।

उपदेशार्थानां सङ्ग्रहः ।

साङ्गोपाङ्गवेदतदन्तस्मृत्युपस्मृतिपुराणोपपुराणशैवतन्त्राणां अवान्तरभेदनिर्देशपूर्वकं एतत्सर्वापेक्षया वीरशैवप्रबन्धानामेव उत्कृष्टतमत्वकथनं चेति ॥

[आदौ ब्रह्मसूत्रविवरणे बीजम्]

अनन्तरं पञ्चमादिभिः उपदेशजालैः वीरशैवमतीयानुष्ठेयानां कर्मणां क्रमादीन् वक्ष्यन्, प्रथमं उपदेशचतुष्टयेन, शक्तिविशिष्टाद्वैतब्रह्मरूपिणि परमशिवे निखिलजगत्कारणत्वसमर्थनेनैव शक्तिविशिष्टाद्वैतमतस्य निर्बाधतावाप्तिम्, तादृशसमर्थनस्य च प्रमाणत्वेन सकलजनपरिगृहीतानां ब्रह्मसूत्राणां तत्परत्वेन व्याख्यानं विना अनुपपन्नतां चानुसन्धाय तान्येव कारिकारूपेण वाक्यरूपेण च व्याख्यत् ॥

[एतद्ब्रह्मसूत्रविवरणस्य नीलकण्ठभाष्यमूलकत्वम्]

तत्र एतदुपदेशचतुष्टयपीठिकायां एवमुक्तम् । यथा ;—

"समुपेत्य तदा व्यासः प्रार्थयामास शङ्करम् ।<br>
मतानि विविधान्येव समुत्पन्नानि शङ्कर ॥<br>
मत्कृतानां च सूत्राणां अन्यथा नयनं कृतम् ॥<br>
एवमेवेति निश्चित्य कुर्वन्ति कलहं मिथः ॥<br>
तत्प्रसादैकलब्धस्य सूत्रजालस्य शङ्कर ।<br>
यथापूर्वं त्वया कार्यं मत्सूत्रार्थविवेचनम् ।<br>
इति तेन प्रार्थितः सन् दयालुः पार्वतीपतिः ।<br>
नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ।<br>
विशिष्टाद्वैतसिद्धान्तप्रतिपादनमुत्तमम् ।<br>
मयापि तस्य तात्पर्यं श्रोतृणां सुखबुद्धये ।<br>
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ॥ (पुटं १३)

इति । अनेन च एतन्मूलभूतं विस्तृतं ब्रह्मसूत्रभाष्यमेकमासीदिति, तस्य कर्ता च नीलकण्ठाचार्यनामा कश्चन पण्डितः इति च स्फुटं प्रतीयते ॥

[नीलकण्ठस्य श्रीकण्ठादन्यत्वम्]

अस्य च नीलकण्ठाचार्यस्य श्रीमदप्पयदीक्षितेन्द्रविरचित-शिवार्कमणिदीपिकामूलभूतब्रह्ममीमांसाभाष्यकर्तुः श्रीकण्ठाचार्यात् अनन्यत्वं तु नैव शङ्कनीयम् । श्रीकण्ठभाष्यस्य पाशुपत-मतानुसारित्वेन, अस्य च वीरशैवमतानुसारित्वेन अनयोः भेदस्य स्फुटत्वात् ॥

[तस्य श्रीशङ्कराचार्यसमानकालीनत्ववादः]

अभिज्ञास्तु ;—अयं क्रियासारमूलभूतभाष्यकर्ता नीलकण्ठा-चार्यः श्रीमद्भगवत्पादशङ्कराचार्यसमानकालीनः इति, श्रीशङ्करा-चार्यदिग्विजययात्रासमये श्रीमद्भिः शङ्कराचार्यैः साकं वादेषु प्रवृत्तः इति च वदन्ति । तदुक्तं माधवाचार्यविरचित शङ्कर-विजये पञ्चदशसर्गे ;—

"तदनन्तरमागमान्तविद्यां
प्रणतेभ्यः प्रतिपादयन्तमेनम् ।
हरदत्तसमाह्वयोऽधिगम्य
स्वगुरुं सङ्गिरते स्म नीलकण्ठम् ॥
भगवन्निह शङ्कराभिधानो
यतिरागत्य जिगीषुरार्यपादान् ।
स्ववशीकृतभट्टमण्डनादिः
सह शिष्यैः गिरिशालये समास्ते ॥
इति तद्वचनं निशम्य सम्यक्
ग्रथितानेकनिबन्धरत्नहारः ।
शिवतत्परसूत्रभाष्यकर्ता
प्रहसन् वाचमुवाच नीलकण्ठः ॥
सरितां पतिमेष शोषयेद्वा
सवितारं वियतः प्रपातयेद्वा ।
पटवत् सुरवर्त्म वेष्टयेद्वा
विजये नैव तथापि मे समर्थः ॥
परपक्षतमिस्रचञ्चदर्कैः
मम तर्कैः बहुधा विशीर्यमाणम् ।

अधुनैव मतं निजं स पश्यत्विति
जल्पन् निरगादनल्पकोपः ॥ ”

इत्यारभ्य, विवादसरणिं च प्रदर्श्य अन्ते ;—

“ इति युक्तिशतोपबृंहितार्थैः
वचनैः श्रुत्यवरोधसौविदल्लैः ।
यतिरात्ममतं प्रसाध्य शैवं
परकृद्दर्शनदारुणैरजैषीत् ॥
विजितो यतिभूभृता स शैवः
सह गर्वेण विसृज्य च स्वभाष्यम् ।
शरणं प्रतिपेदिवान् महर्षिं
हरदत्तप्रमुखैः सहात्मशिष्यैः ॥
यमिनामृषभेण नीलकण्ठं
जितमाकर्ण्य मनीषिधुर्यवर्यम् ।
सहसोदयनादयः कवीन्द्राः
परमद्वैतमुषः चकम्पिरे स्म ॥ ”

इति च उक्तम् ।

अथवा अन्य एव वा कोऽपि नीलकण्ठाचार्यनामा अव्याहत-सूत्रभाष्यकर्ता भवत्वित्यलमप्रकृतेन । प्रकृतमनुसरामः ;—

[उपदेशचतुष्टयविभागस्य सूत्रानुकारित्वम्]

एवं कृतः ब्रह्मसूत्रार्थसंग्रहः अध्यायचतुष्टयपरिमितब्रह्म-सूत्रानुसारेण उपदेशचतुष्टयात्मना विभक्तः सन् अपेक्षितार्थ-विशदीकरणेन समापितः ॥

[उपदेशार्थानां सङ्ग्रहः]

## तत्र प्रथमोपदेशे

वीरशैवशब्दनिर्वचनपूर्वकं विषयप्रयोजनसम्बन्धाधिकारिणां निरूपणम् ।

स्वग्रन्थस्य समूलत्वकथनम् ।

ब्रह्मणः लिङ्गरूपत्वस्थापनेन तत्पर्यायनाम्नां कथनम् ।

साधनचतुष्टयादीनां पूर्ववृत्तत्वनिरसनेन धर्मविचारस्यैव पूर्ववृत्तस्थापनम् ।

धर्मभेदाः ।

अद्वैते ब्रह्मणि शक्तिवैशिष्ट्योपपादनम् ।

आत्यन्तिकदुःखनिवृत्तेः शिवशरणैकलभ्यत्वम् ।

स्पष्टास्पष्टादिलिङ्गकानां निखिलवेदान्तवाक्यानां श्रुतिस्मृतीतिहासपुराणानां च तात्पर्येण ब्रह्मणि समन्वयः ।

व्याससूत्रशैवागमयोः समानतात्पर्यकत्ववर्णनम् ।

जीवेश्वरभेदाभेदनिरूपणेन अध्यासखण्डनम् ॥

## द्वितीयोपदेशे

कर्मकाण्डात् ज्ञानकाण्डस्यैव मुख्यत्वम् ।

लिङ्गाङ्गैक्यसमन्वयाविरोधः ।

प्रथमोपदेशनिरूपितस्य शक्तिविशिष्टेऽद्वैते ब्रह्मणि निखिलनिगमागमसमन्वयस्य सम्भावितस्मृतितर्कादिविरुद्धत्वाशङ्कानिरसनम् ।

ब्रह्मलिङ्गस्य हृदयदेशेऽवश्यधार्यत्वकथनेन उक्तार्थनिगमनम् ॥

## तृतीयोपदेशे

जीवानां नित्यत्वम् । गमनागमनोपपत्तिः ।

परावरयोः स्वरूपलक्षणादिः ।

पाशनिवृत्तिपूर्वकशिवप्राप्तिसाधनभूताः विद्याः ।

आश्रमधर्मनिरूपणम् । शैवधर्माणामेव मुक्त्यङ्गत्वम् ।

बन्धमोक्षकारणानि । शिवपूजाविधिः ।

मुक्तिभेदाः । अधिकारिभेदेन लिङ्गभेदाः ।

लिङ्गप्रतिष्ठादयः । भस्मधारणस्यावश्यकत्वम् ।

भस्मभेदाः । शिवपदार्थः ।

गुरुशिष्ययोः लक्षणम् । तयोः कर्तव्यानि ।

शिवपूजाविधिः । फलं च ॥

## चतुर्थोपदेशे

विद्यानां फलनिरूपणम्। उत्क्रान्तिदशाः।

अर्चिरादिमार्गः।

अन्ते जीवभावनिवृत्तिपरशिवत्वप्राप्तिरूपपरमपुरुषार्थावाप्तिवर्णनम्।

निगमनम्।

जगत्सृष्ट्यादिविवरणपूर्वकं शिवाधिक्यप्रतिपादनम्।

देवतालिङ्गस्यैवादरणीयत्वम्।

शिवभक्तेरावश्यकत्वं तन्महिमा च।

त्रिपुण्ड्रस्यैव भस्मना तिर्यक्धार्यत्वम्।

वैदिकतान्त्रिककर्मणां स्वरूपम्।

तत्तदधिकारिभेदाः।

अन्ते पुनः आदितः सकलसूत्राणां भाववर्णनपूर्वकं वादसरण्या परपक्षनिरसनम्।

एवं उपदेशचतुष्टयेन ब्रह्मसूत्रव्याख्यां परिसमाप्य, पञ्चमाद्युपदेशेन शय्योत्थायं कर्तव्याणि कर्माण्यारभ्य सकलाः शैवधर्माः सविस्तरं निरूपिताः॥

## तत्र पञ्चमोपदेशे

सदाचारस्यैव सर्वविधश्रेयस्करत्वम्।

तस्य च गुरुमूलत्वम्।

निर्विशेषसविशेषभेदेन आचारद्वैविध्यकथनेन नित्यनैमित्तिकादिनिर्विशेषाचारनिरूपणम्।

देशकालदिगादिनियमेन विण्मूत्रविसर्जनशौचयोः विधिः।

दन्तधावनविधिः।

स्नानविधिश्च॥

## षष्ठोपदेशे

भस्मोत्पत्तिः। भस्मनामानि।

भस्मप्रकृतिभूतद्रव्यनियमः। तत्संस्काराः।

विरजाहोमविधिः। तदनुष्ठाने विकल्पश्च॥

## सप्तमोपदेशे

भस्मजाबालोपनिषत् ।

सप्रमाणदर्शनं साङ्गोपाङ्गभस्मधारणविधिः ।

भूतिशब्दस्य भस्मार्थकत्वनिर्णयः ।

भस्मना त्रिपुण्ड्रधारणस्य सर्वपापहरत्वसर्वविधश्रेयस्कर-त्वादिकथनम् ।

शिवभस्मरुद्राक्षादिषु द्वेषस्य पापशापादिफलत्वोपपादनम् ॥

## अष्टमोपदेशे

सप्रमाणं सोपबृंहणं च भस्मस्नानधारणोद्धूलनादिमहिमानु-वर्णनम् ॥

## नवमोपदेशे

रुद्राक्षोत्पत्तिकथनम् ।

तत्प्रमाणतया रुद्राक्षजाबालोपनिषत्पाठः ।

ब्रह्मकैवर्त्तीयरुद्राक्षोत्पत्तिनिरूपकभागानुवादश्च ॥

## दशमोपदेशे

रुद्राक्षधारणमाहात्म्यम् ।

तदुपबृंहणतया महानन्दोपाख्यानम् ।

एतदर्थनिरूपकबृहज्जाबालोपनिषदनुवादः ॥

## एकादशोपदेशे

रुद्राक्षतद्धारणादीनां प्रशंसनम् । सौम्यवृत्तान्तः ।

सुप्रदीपवृत्तान्तः । यमशङ्करसंवादः ।

जामित्रवृत्तान्तः । यमं प्रति शङ्करानुशासनम् ।

सुगुप्तवृत्तान्तः ।

रुद्राक्षधारणफलस्य भस्ममात्रधारणाजन्यत्वम् ।

सिद्धसेनवृत्तान्तः । निगमनं च ॥

## द्वादशोपदेशे

ऋषिच्छन्दोदेवतादिविवरणपूर्वकं शिवपञ्चाक्षरीजपक्रमः ।
पञ्चाक्षरजाबालोपनिषत्पाठः ।
पञ्चब्रह्मविद्याशाकल्योपनिषत्पाठः ।
वायवीयसंहितोक्तपञ्चाक्षरमाहात्म्यम् ।
उमामहेश्वरसंवादः । पञ्चाक्षरविद्यास्वरूपम् ।
मन्त्रग्रहणक्रमः । मन्त्रजपसङ्ख्यादिगादिनियमाश्च ॥

## त्रयोदशोपदेशे

दीक्षापदार्थः । शाम्भव्यादिदीक्षास्वरूपनिरूपणम् ।
दीक्षादानपरिग्रहयोः क्रमानियमौ । पञ्चाक्षरमहिमा च ॥

## चतुर्दशोपदेशे

आत्मार्थशिवपूजाविधिः । स्नानविधिः ।
शैवसन्ध्याविधिः । संक्षिप्तशिवपूजाक्रमः ।
विस्तृतशिवपूजाक्रमः । आचमनभस्मधारणोद्धूलनानि ।
तद्भेदाः । रुद्राक्षधारणम् ।
सकलीकरणपद्धतिः । द्वारपालार्चनम् ।
पशुभूतानां द्वारपालानां अर्चनस्यायुक्तत्वाशङ्कापरिहारौ ।
आत्मशुद्धिः । भूतशुद्धितत्त्वशुद्ध्यात्मकोभयविधदेहशुद्धिः ।
स्थानशुद्धिः । द्रव्यशुद्धिः ।
पञ्चगव्यविधानम् । पञ्चामृतविधानम् ।
मन्त्रशुद्धिः । लिङ्गशुद्धिः ।
विस्तृतं शिवार्चनविधानम् । नैवेद्यविधिः ।
गुरुपूजा । कपिलपूजा । शिवसेवाक्रमः ।
अपराधानां परिगणनम् ।
वैश्वदेवचुल्लीहोमयोः क्रमः ।
निर्माल्यादिपरिग्रहविषये मतभेदाः । भोजनविधिः ।

पञ्चमोपदेशमारभ्य एतदवधि उक्तेषु तत्तदर्थेषु वेदादि-
विरुद्धत्वाशङ्कानिरासेन नित्यकर्मविधिपरिसमापनम् ॥

नैमित्तिककर्मणां विधिः। पञ्चावरणपूजा।
पञ्चावरणस्तोत्रम्। शिवपूजा माहात्म्यम्।
ज्वालालिङ्गोद्भवः। भृगुशापविमोचनम्।
दशावतारनिग्रहानुग्रहादिः। शिवमुनिकथा।
क्षुपदधीचिसंवादः। नरकासुरसंहारः।
शास्त्रोत्पत्तिः। ब्रह्मोत्पत्तिः। दुर्वासश्शापनिवृत्तिः।
चक्रप्रदानम्। मन्मथोत्पत्तिः।
कालनेमिसंहारः। विष्णवङ्गभूषणम्।
महेन्द्रशिवपूजा। अर्कादिशिवपूजा।
त्रिपुरविधिः। ऐहिकानेकफलप्रदपूजाविधिः।
महिषव्याघ्रासुरयोः वधः। लम्बासुरसंहारः।
व्यासभुजस्तम्भः।
उपमन्युकथोपबृंहणेन शिवपूजादिमहिमानुवर्णनम्।
निगमनम्॥

## पञ्चदशोपदेशे

पूजाकाले वर्जनीयाः मनोवाक्कायक्रियाः।
पूजोपकरणसामग्रीपूजागारादीनां लक्षणानि निकायाश्च॥

## षोडशोपदेशे

गुरोराधिक्यम्। तत्पूजाया अपि मुख्यत्वं च।
पूर्वोक्तशाम्भव्यादिदीक्षानां विस्तरेण निरूपणम्।
गुरुशिष्यपरस्परपरीक्षाविधिः। शिष्यनियमाः।
गुरुपूजाविधिश्च॥

## सप्तदशोपदेशे

जङ्गमस्थावरभेदेन शम्भोः स्वरूपद्वैविध्यम्, लक्षणं च।
शिवभक्तानां बाह्याभ्यान्तरलक्षणानि।
भक्तचिह्नानि।
शिवशैवभक्तानां ऐहिकामुष्मिकसर्वविधश्रेयःसिद्धिकथनेन तन्महिमानुवर्णनम्॥

## अष्टादशोपदेशे

शिवभक्तेभ्यः भस्मादिदानविधिः ।

स्वराडभिधाननृपवृत्तान्तकथनेन भस्मादिदानमहिमानुवर्णनम् ॥

## एकोनविंशोपदेशे

भूतपञ्चकप्रविलापनविधिविवरणेन लिङ्गाङ्गसामरस्योपपादनम् ।

लिङ्गलक्षणानि । लिङ्गधारणविधिः ।

"नमो ब्रह्मणे धारणं मे अस्तु" "युजेवां ब्रह्मपूर्व्यं" "युञ्जानः प्रथमम्" इत्येतेषां मन्त्राणां अर्थविवरणपूर्वकं "पृथिव्या अध्याभरत्" इति विधेः नियमविधित्वस्थापनम् ॥

## विंशोपदेशे

अजामिळोपाख्यानकथनेन लिङ्गधारणवैभववर्णनम् ॥

## एकविंशोपदेशे

विस्तरेण आद्यतत्त्वमहालिङ्गलक्षणमहिमादिकथनम् ।

पञ्चाक्षरोत्पत्तिः । तज्जपहोमादिविधि ।

शिवालयवर्णनम् ।

जपसङ्ख्यानुगुण्येन फलवैशिष्ट्यकथनम् ।

अधिकारभेदेन मन्त्रप्रतिपाद्यसगुणनिर्गुणोपासनयोरविरोधः ।

## द्वाविंशोपदेशे

शिवे शक्तिवैशिष्ट्योपपादनम् ।

विष्ण्वादीनामपि शिवशक्तिरूपत्वोपपादनपूर्वकं "एक एव रुद्रो न द्वितीयाय तस्थे" इति मन्त्रार्थविवरणम् ।

## त्रयोविंशोपदेशे

[गोलकादिस्खलनादिनिरूपणम्]

लिङ्गतत्पीठयोः अधःपातादिना भिन्नयोर्नष्टयोश्च तन्निष्कृतये प्राणत्यागविधानम् ।

अंशतो वैकल्ये तन्निषेधश्च ।

## चतुर्विंशोपदेशे

षट्स्थलानां निर्णयः। तत्र स्थलपदार्थः।

सामान्यतः लिङ्गस्थलाङ्गस्थलभेदेन स्थलद्वैविध्यम्।

लिङ्गस्थलस्य भावप्राणेष्टभेदेन, अङ्गस्थलस्य योगभोगत्याग-भेदेन च प्रत्येकं त्रैविध्योपपादनम्।

उक्तानां षण्णां प्रत्येकं द्वैविध्यस्य तत्स्वरूपलक्षणादीनां चोपपादनम्। तच्छक्तीनामुपपादनम्।

अङ्गतत्त्वस्य लिङ्गतत्त्वावान्तरभेदानां च स्थलशब्दवाच्यत्वो-पपत्तिः।

उमामहेश्वरसंवादेन उक्तार्थदृढीकरणम्॥

## पञ्चविंशोपदेशे

वीरशैवनियमस्यैव शैवदीक्षापदार्थत्वम्।

तस्याश्च दीक्षायाः वैदिकत्वम्। दीक्षाभेदाः।

आश्रमभेदोपपादनपूर्वकं आश्रमानुगुण्येन गुरुत्वे तारतम्यो पपादनम्॥

## षड्विंशोपदेशे

सकलध्यानम्॥

[सगुणोपासनप्रकारः]

## सप्तविंशोपदेशे

निष्कलध्यानम्॥

[निर्गुणोपासनप्रकारः]

## अष्टाविंशोपदेशे

प्रसादग्रहणपादोदकयोः क्रममहिमादिनिरूपणम्॥

## एकोनत्रिंशोपदेशे

आगमानां स्वतः प्रामाण्यम्॥

## त्रिंशोपदेशे

शिवधर्मप्रभावः ॥

## एकत्रिंशोपदेशे

शिवद्रोहाणां शैवद्रोहाणां च परिगणनम् ।

शिवद्रोहिभिः तैस्तैरनुभूतानां दुःखानां विवरणम् ।

भक्तिप्रीतस्य शिवस्यानुग्रहात् अवाप्तनिष्कृतीनां केषांचिदुपाख्यानवर्णनेन अध्यायार्थनिगमनम्; इत्येते विषयाः प्रतिपादिताः ॥

[निगमनम्]

एवं उक्तानां एषां विषयाणां सविस्तरं उपपादनेन अयं ग्रन्थः समापितः ।

तत्र उपदेशचतुष्टयभागस्यास्य संक्षिप्तशब्दत्वेन ब्रह्मसूत्रार्थविचाररूपत्वेन च कठिनतया, अयं भागः अवश्यं विस्तृततरामेकां व्याख्यामपेक्षत एवेति नापरोक्षमिदं सहृदयानाम् । उपलभ्यमानापि क्रियासारसर्वस्वभूषणाभिधाना निर्वाणमन्त्रिराजकृता व्याख्या द्वितीयाध्यायतृतीयपादान्तैवेति न सम्पूर्णोपकारिणीति च विषादस्थानमेव ।

अयं च क्रियासारग्रन्थः बहुषु स्थलेषु अक्षरस्खालित्यपङ्क्तिलोपपौर्वापर्यादिलेखकादिदोषकलुषितः एव प्रकृतोपलभ्यमानादर्शपुस्तकानुरेण दृश्यत इति, एतद्ग्रन्थसंशोधनं बह्वादर्शपुस्तकसापेक्षमेवेत्यालोच्य बहुधा मृग्यमाणमपि एकमपि वा पुस्तकान्तरं झटिति नालक्ष्यत । अनेन किंकर्तव्यताविमूढाः वयं यावत् पुस्तकान्तरान्वेषणोद्यताः अभूम तावदेव ग्रन्थोऽयं गीर्वाणकलाशालासु शक्तिविशिष्टाद्वैतवेदान्तविद्वत्परीक्षापाठ्यपुस्तकतया निर्धारित इति तदध्येतृणां सौकर्याय मुद्रणशैघ्र्यस्यावश्यकताऽपि समुपस्थिता । अस्यामवस्थायां—श्रीमद्भिः, बेंगळूरु श्रीचामराजेन्द्रसंस्कृतपाठशालाशक्तिविशिष्टाद्वैतवेदान्तप्राध्यापकैः, आस्थानमहाविद्वद्भिः, पण्डितरत्नं, सिरिसि, गुरुशान्तशास्त्रिभिः यत्रकुत्रचिल्लब्धेन आदर्शपुस्तकान्तरसाहाय्येन तत्र तत्र परिशोधितमिति स्वीयमेवैकं मुद्रितं पुस्तकं प्रेषयित्वा बह्वंशपरिशोधनानुकूल्यकल्प-

नेन महदुपकृतमिति तेऽमी शास्त्रिणः, एवं सम्पूर्णमिमं ग्रन्थं लेखनपुनरवलोकनादिना मुद्रणाय सज्जीकृतवन्तः एतच्छाला-पण्डिताः, श्रीमन्तः, न्याय वेदान्त मीमांसा विद्वांसः, विद्यालङ्काराः आर्. रामाशास्त्रिणश्च परं धन्यवादार्हाः इति ससन्तोषमावेदयामः।

अन्ते च सौकर्याय विषयवाक्याधिकरणार्थसंग्रहसहितानि ब्रह्मसूत्राणि प्रमाणाकरसूत्रसूचीप्रभृतयश्च अनुबन्धतया संयो-जिताः।

एवं यथामति परिशोधितेऽपि प्रमादात्पतिताः अशुद्धीः संशोध्य गुणैकदृशस्सहृदयास्समनुगृह्णीयुरिति विश्वसिति ;—

विदुषां वशंवदः,
न्याय व्याकरण साहित्य विद्वान्
प्राच्यविद्यातत्त्वसंशोधनशालापण्डितः,
एन्. एस्. वेङ्कटनाथाचार्यः
विश्वविद्यानिलयः,
मैसूरु.

(21-8-1954)
जयनामसंवत्सरश्रावण
कृष्णजन्माष्टमी
स्थिरवासरः.

# क्रियासारे

## उपदेशचतुष्टयात्मकप्रथमभागविषयसूचनी [1]

### उपोद्घातप्रकरणविषयसङ्ग्रहः



---

[1] अत्र निर्दिष्टेषु विषयेषु अधिकरणार्थरूपाः विषयाः प्रायशः विस्तृतव्याख्यानैकग्रन्थाः, न तु मूलत एव स्पष्टाः इति बोध्यम्.

अथ प्रथमोपदेशार्थसङ्ग्रहः

## अथ द्वितीयोपदेशार्थसङ्ग्रहः

## अथ चतुर्थोपदेशार्थसङ्ग्रहः

| विषयाः | पुटं. | पं. |
|---|---|---|
| मिथ्यात्वस्य साक्षात्सूत्रविरुद्धत्वोपपादनम् .... | 223 | 3 |
| कार्यकारणयोरत्यन्ताभेदवादिमतानुवादः निरासश्च .... | ,, | 7 |
| बाधितानां सूत्रव्याख्यानानां सूत्रकारनिरस्तमतान्तरतुल्यतया अनुपादेयत्वम्. | 224 | 6 |
| जीवस्य ज्ञानस्वरूपत्ववादिमतनिरासः .... | ,, | 11 |
| जीवस्य महत्परिमाणवादिमतनिरासः, अणुत्वेऽपि ज्ञानव्याप्त्यैव सकलदेहकार्यकारित्वोपपादनं च. | ,, | 12 |
| चैतन्यस्य जीवस्वरूपत्वनिरासेन गुणत्वसमर्थनम् .... | 225 | 14 |
| जीवब्रह्मणोः भेदाभेदप्रयुक्ताया अपि जीवे महत्त्वशङ्कायाः निरासः | 226 | 10 |
| ज्ञानस्य यावदात्मभावित्वनिरूपणेन आत्मनोऽणुत्वविचारोपसंहारः. | 227 | 7 |
| आत्मनोऽकर्तृत्वादिसाङ्ख्यमतनिरासः .... | ,, | 24 |
| निर्गुणब्रह्मवादिनां गुणोपसंहारबोधकसूत्रजालविरोधोपपादनम्, पूर्वोत्तरस्ववाक्यविरोधस्याप्युपपादनेन तन्मतखण्डनम्, सगुणत्वस्थापनं च. | 231 | 12 |
| कर्मनिरपेक्षकेवलज्ञानान्मोक्ष इति वादिनां मतखण्डनम् .... | 234 | 9 |
| मोक्षस्य कर्मसाध्यत्वे स्वर्गादिवदनित्यत्वाशङ्कापरिहारः .... | 236 | 17 |
| ज्ञानकर्मणोः विलक्षणकार्यकत्वप्रयुक्तैककार्योपयोगित्वानुपपत्तिशङ्कानिरासः. | 237 | 10 |
| आशुतरविनाशिन्याः क्रियायाः शाश्वतफलप्रयोजकत्वानुपपत्तिशङ्कानिरासः. | 238 | 13 |
| विद्वदविदुषोः उत्क्रान्तिसाम्याभाववादिमतखण्डनम् .... | 239 | 17 |
| ससूक्ष्मशरीरं देहादुत्क्रममाणजीवसंबन्धिनां सूक्ष्मशरीराणां पार्श्वस्थजनागोचरत्वे हेतुः. | 240 | 21 |
| विदुषां उत्क्रान्तिनिषेधनिरसनम् .... | 241 | 40 |
| अविदुषां उत्क्रान्तिनिषेधः .... | ,, | 14 |
| उच्छ्वयत्याध्मायतीत्यादिश्रुत्यर्थः .... | 242 | 15 |
| ब्रह्मैव सन् इति श्रुत्यर्थः .... | 243 | 10 |
| जीवस्य ब्रह्मसम्पत्तौ हेतुभूतदेशकालादिनिरूपणम् .... | ,, | 13 |
| ब्रह्मणि सम्पन्नः इत्यनुक्त्वा ब्रह्मैव सन् इत्युक्तौ बीजम् .... | 244 | 6 |

# उपोद्घातप्रकरणगतविद्याविभागसंग्रहः

सामान्यतः विद्या द्विविधा—वैदिकी तान्त्रिकी चेति। तत्र वैदिक्यः–शिक्षा, कल्पः, व्याकरणं, निरुक्तं, ज्योतिषं, छन्दः, ऋक्, यजुः, साम, अथर्वा, मीमांसा, न्यायः, पुराणं, धर्मशास्त्रमिति चतुर्दश। तत्र ऋगादयश्चत्वारः वेदाः, शिक्षादयः षट् अङ्गानि, मीमांसादीनि चत्वारि उपाङ्गानि। तत्र शिक्षाव्याकरणे पाणिनीयादिकृते, कल्पः आपस्तम्बादिकृतः, निरुक्तं यास्कादिकृतम्, ज्योतिषं वराहमिहिरादिकृतम्, छन्दः पैङ्गलादिकृतम्। मीमांसा कर्मब्रह्मकाण्डभेदेन द्विविधा, यथाक्रमं जैमिनिव्यासाभ्यां प्रवर्त्तिता। न्यायः आक्षपादकाणादभेदेन विविधः। पुराणानि ब्राह्मादीन्यष्टादश, उपपुराणानि स्कान्दादीन्यष्टादश। मनुप्रभृतयः अष्टादश स्मृतयः, जाबाल्यादयः अष्टादशोपस्मृतयश्चेति धर्मशास्त्रमिति वैदिकविद्याविभागः। कामिकादयः अष्टाविंशतिसंहिताः, महामायाशम्बरादयः अनन्ताः तन्त्रविद्याश्च तान्त्रिक्यो विद्याः इति विद्याविभागसंग्रहः॥

# उपदेशचतुष्टयनिर्दिष्ट ग्रन्थ-ग्रन्थकार-मत-मतीय ऋषि-देवतानां नामानि [1]

## ग्रन्थाः

| नामानि | | पुटसं. | नामानि | | पुटसं. |
|---|---|---|---|---|---|
| अथर्ववेदः | .... | 42 | प्राचीनभाष्यम् | .... | 254 |
| अथर्वशिखोपनिषत् | .... | 26 | बृहज्जाबालोपनिषत् | .... | 17 |
| अष्टादशपुराणानि | .... | 180 | बृहदारण्यकम् | .... | 154 |
| आगमाः | .... | 2 | ब्रह्मोत्तरखण्डः | .... | 254 |
| आग्नेयपुराणम् | .... | 189 | ब्राह्मणम् | .... | 28 |
| उपनिषदः | .... | 22 | भारतम् | .... | 175 |
| उद्गातृशाखा | .... | 142 | भाषाप्रबन्धः | .... | 253 |
| उपनिषद्भाष्यवार्तिकम् | .... | 230 | महेश्वरपुराणानि | .... | 189 |
| ऋग्वेदः | .... | 42 | माध्यन्दिनशाखा | .... | 241 |
| कठोपनिषत् | .... | 26 | मीमांसा | .... | 252 |
| कामिकाद्यागमाः | .... | 12 | यजुर्वेदः | .... | 42 |
| कालाग्न्युपनिषत् | .... | 17 | योगस्मृतिः | .... | 71 |
| कैवल्योपनिषत् | .... | 26 | रहस्योपनिषत् | .... | 20 |
| कौषीतक्युपनिषत् | .... | 140 | वज्रसूच्युपनिषत् | .... | 26 |
| छान्दोग्योपनिषत् | .... | 107 | विद्यासारसंहिता | .... | 183 |
| ताण्डिनां ब्राह्मणम् | ... | 140 | वेदाङ्गानि | .... | 178 |
| तैत्तिरीयोपनिषत् | .... | 16 | वेदान्ताः | .... | 14 |
| तैत्तिरीयारण्यकम् | ... | 210 | वेदान्तसारः | .... | 26 |
| नाचिकेतकम् | .... | 124 | वैष्णवपुराणानि | .... | 189 |
| निगमाः | .... | 2 | व्याससूत्राणि | .... | 3 |
| नीलकण्ठभाष्यम् | .... | 13 | शैवागमाः | .... | 3 |
| पाञ्चरात्रम् (आगमग्रन्थः) | .... | 105 | सामवेदः | .... | 42 |
| पुराणानि | .... | 3 | साङ्ख्यस्मृतिः | .... | 71 |
| पूर्वकाण्डः | .... | 15 | सौरपुराणम् | .... | 189 |
| प्रणवोपनिषत् | .... | 26 | स्मृतयः | .... | 3 |
| प्रश्नोपनिषत् | .... | 26 | | | |

[1] अत्र निर्दिष्टानां तत्तन्नाम्नां निर्दिष्टपुटेभ्योऽन्यत्रापि सत्त्वेऽपि, विस्तरभिया एकस्य नाम्नः एकैव पुटसंख्या दत्तेति ध्येयम्.

## ग्रन्थकाराः ऋषयश्च



## मतानि मतीयाश्च

# देवताः



———

## क्रियासारोपदेशचतुष्टयगतानि हृदयङ्गमानि कानिचिद्वाक्यानि

---

[१. विद्याप्रदातुः गुरोरत्यन्तादरणीयत्वोपदेशः]

न गुरोः सदृशी माता न गुरोः सदृशः पिता।
संसाराद्दुद्धरेद्यो हि परमार्थोपदेशतः॥

(पुट. ११)

निमज्जयति वै पुत्रं संसारे जनकः पिता।
सन्तारयति संस्कारात् गुरुर्वै बोधकः पिता॥

(पुट. १६३)

[२. परिदृश्यमानानन्तवैमत्यस्य सद्गुर्वदर्शनैकमूलकता]

कलिकल्मषनिर्धूततत्त्वबुद्धिभिरन्यथा।
नीतं यथामतं शास्त्रं सद्गुरोरप्यदर्शनात्॥

(पुट. १५)

[३. एवं सद्गुरुसकाशलब्धज्ञानस्यैव श्रेयोहेतुत्वम्]

पाकस्य वह्निवत्, ज्ञानं विना मोक्षो न सिद्ध्यति।

(पुट. १४९)

[४. ज्ञानस्य भक्तिसहकारावश्यकता]

यतः पापार्णवात् त्रातुं भक्तिर्नौरिव निर्मिता।
तस्मात् भक्त्युपपन्नस्य रजसा तमसा च किम्॥

(पुट. ४९)

[५. उक्तज्ञानभक्तिहेतुभूतविद्यासु तैस्तैः स्वस्वशक्त्यनुगुणांशविशेषपरिग्रहणमात्रेण तदितरभागेषु अप्रामाण्यवैयर्थ्याभावयोरुपदेशः]

रत्नापणे निविष्टानां विविधानां क्रमेण हि।
काचमुक्तामकरकतप्रभृतीनां यथा पुनः॥

ग्रहीतारः स्वसामर्थ्यानुगुण्येनैव केवलम् ।
गृह्णन्ति तावता नान्यत् दूषणाय प्रकल्पते ॥
एवं सर्वस्य वेदस्य प्रामाण्यस्य स्थितावपि ।
स्वाधिकारानुसारेण जनस्तत्र प्रवर्तते ॥

(पुट. ६२)

क्रमसोपानमार्गेषु त्रयाणामथ वा द्वयोः ।
अतिक्रमेणारोहेऽपि सोपानोत्पाटनं न हि ॥
कुर्वन्ति तद्वत् सर्वेषां प्रामाण्यस्य न भञ्जनम् ॥

(पुट. ६३)

[६. शक्तेन केनचित् सर्वविद्यापरिग्रहेऽपि दोषाभावः]

सर्वं कर्मानुतिष्ठेच्चेत् यदि कश्चित्प्रयत्नतः ।
यथा राजा धनी लोके सत्सु रत्नेषु भूरिशः ।
अल्पमूल्यं मणिं धत्ते तथैवैतन्न दुष्यति ॥

(पुट. ६३)

[७. परमतानामपि सर्वांशेऽनादरणीयताखण्डनेन औदार्योपदेशः]

तण्डुलान् सिकतैर्मिश्रान् पृथक्कृत्य यथा हरेत् ।
यथा च दोषघातज्ञः शाणोल्लीढं मणिं तथा ॥
विज्ञानरत्नं गृह्णीयात् (बाधितार्थान् परित्यजन्) ॥

(पुट. ८७)

[८. साङ्ख्यमतसिद्धांशविशेषानुवादरीतिः]

कश्चित् दृक्छक्तिसम्पन्नः प्रवृत्तौ शक्तिवर्जितः ।
पङ्गुं दृक्छक्तिहीनं तु प्रवृत्तौ शक्तिमन्नरम् ॥
प्रवर्तयत्यधिष्ठाय यथा कान्तो मणिः स्वयम् ।
प्रवृत्तिरहितोऽपि स्यादयसस्तु प्रवर्तकः ॥
एवं दृक्छक्तिसम्पन्नः पुरुषस्तु प्रवर्तयेत् ।
प्रवृत्तिशक्तिसम्पन्नं प्रधानमिति ते जगुः ॥

(पुट. ७९)

[९. अचेतनस्यापि स्वयंप्रवृत्तौ तन्मतोक्तं दृष्टान्तद्वयम्]

अचेतनमपि क्षीरं वत्सवृद्ध्यै प्रवर्तते।
स्वयं लोकोपकाराय स्यन्दते च नदीजलम्॥

(पुट. ७८)

[१०. जगन्मिथ्यात्ववादिनं प्रति प्रश्नः]

सर्वेषामपि बाधोक्तौ प्रपञ्चे बाध्यता कथम्।
कथं मज्जननी वन्ध्या मम जिह्वा न चेति च॥

(पुट. ५५)

[११. वीरशैववंशजनेः परमदुर्लभत्वकथनेन तज्जन्म-
सार्थकीकरणोपदेशः]

किमत्र बहुनोक्तेन मानुषं जन्म दुर्लभम्।
तत्रापि दुर्लभं जन्म कुले शैवस्य कस्यचित्॥
वीरशैवान्वये जन्म परमं दुर्लभं मतम्॥

(पुट. २३)

[१२. नास्तिक्यस्य महापातकैकफलत्वकथनम्]

धनी ह्युदररोगस्थो न भुङ्क्ते ह्यन्नमुत्तमम्।
तद्वत्तात्त्विकशास्त्रार्थे मतिर्नोदेति कस्यचित्॥

(पुट. २०)

[१३. लिङ्गधारणस्यावश्यकत्वोक्तिरीतयः]

तल्लिङ्गधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान्।
विषपानेन नित्यत्वं कुरुते स्वात्मनो हि सः।
यो लिङ्गधारणं मुक्त्वा पशुशास्त्ररतो भवेत्।
करस्थं पायसं त्यक्त्वा कूर्परं लेढि चात्मनः॥

(पुट. २३)

अलं शङ्करभक्तानां अन्यशास्त्रावलोकनैः।
अगन्तव्याग्रहारस्य पदवीश्रवणेन किम्॥

(पुट. ३८)

[१४. काम्यनिष्कामकर्मणोः परस्परवैलक्षण्यकथन-
प्रणालिका]

अनुतिष्ठन् पशोर्धर्मान् पतिधर्मान् स चार्हति ।
यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम् ॥
आरुह्य लभते तद्वत्; पतिधर्मैकतत्परः ।
यथा विहङ्गः पक्षाभ्यां फलितं वृक्षमागतः ॥
पश्यन् फलमवाप्नोति तद्वच्छीघ्रं तदर्हति ॥

(पुट. १७)

[१५. वादद्दष्ट्या वेदान्ताध्ययननिषेधेन तस्यानुष्ठान-
पर्यवसायितकारणस्य श्रेयस्त्वोपदेशः]

वागद्वैतं न कार्यं हि कार्यमाचरणेऽपि च ।

(पुट. १४९)

[१६. सर्वत्र शिवदृष्टौ अनुभवसिद्धदृष्टान्तप्रदर्शनम्]

शिवदृष्टिस्तु सर्वत्र कर्तव्या सर्वजन्तुभिः ।
राजदृष्टिः यथामात्ये क्रियते सर्वजन्तुभिः ॥

(पुट. १८७)

[१७. परदोषप्रदर्शनात् प्राक् स्वदोषपरिमार्जनस्य युक्तत्वे कस्याश्चन
प्राचीनकारिकाया अनुवादः]

यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे ॥

(पुट. ७४)

[१८. वीरशैवानां अत्यन्तादरणीयत्वोपदेशः]

ते वीरशैवाः लोकानां नित्यं क्षेमाभिलाषिणः ।
त्रिपुण्ड्रावलिभिर्दीप्ताः रुद्राक्षस्रगलङ्कृताः ।
शिवलिङ्गार्चनपरा शिवभक्तिप्रपूजकाः ॥
पञ्चाक्षररता नित्यं गुर्वाराधनतत्पराः ॥
कीर्तनीयाश्च वन्द्याश्च दर्शनीयाः प्रयत्नतः ॥ इति ।

(पुट. २३)

———

# शुद्धिपत्रम्

| शुद्धः पाठः | | पुटम् | पंक्तिः |
|---|---|---|---|
| कलानिधिकलाम् | .... | 1 | 5 |
| शुभ्रैरदभ्रैः | .... | 1 | 9 |
| रुदितैर्भक्ति | .... | 2 | 1 |
| शीलानुकर्त्रीम् | .... | 2 | 4 |
| तदैवाङ्गभाक् | .... | 2 | 13 |
| पूर्वाचार्यैरखिल | .... | 2 | 19 |
| क्रमादेव | .... | 4 | 21 |
| मुपोद्घाता | .... | 4 | 21 |
| रारुण्यामृत | .... | 7 | 13 |
| ब्रह्मवैवर्त | .... | 8 | 1 |
| एवमन्यानि | .... | 10 | 1 |
| स्यैकोत्तरशतस्थला | .... | 10 | 21 |
| श्रीनीलकण्ठशिवाचार्यकृते | .... | 10 | 22 |
| सूत्रार्थ तत्तात्पर्या | .... | 11 | 2 |
| धारणवैभवे | .... | 11 | 9 |
| जैमिनिश्चैव | .... | 12 | 5 |
| तेषामत्र | .... | 12 | 9 |
| मिथ्यात्वम् | .... | 13 | 21 |
| पूजयेद्दृढ | .... | 14 | 15 |
| काटञ्जनिम | .... | 15 | 6 |
| ब्रह्मजिज्ञासे | .... | 15 | 15 |
| तस्मान्माङ्गलिका | .... | 15 | 22 |
| प्रसिद्धतैत्तिरीयो | .... | 16 | 3 |
| काण्डाविरुद्धो | .... | 16 | 13 |
| जीवब्रह्मैक्य | .... | 19 | 19 |
| रणीयान् | .... | 22 | 2 |
| विषयो ब्रह्म | .... | 22 | 15 |
| तत्सूत्राद्दृढी | .... | 25 | 1 |

| शुद्धः पाठः | | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| हेतुत्वं कदाचन | .... | 27 | 22 |
| लिङ्गान्नेति च | .... | 30 | 17 |
| पुरुषो ब्रह्म | .... | 34 | 22 |
| साक्षान्मूर्तिश्च | .... | 43 | 6 |
| तत्पूरुषं तथेशानं | .... | 43 | 14 |
| तथाह्येके | .... | 47 | 23 |
| भेदाभेद इति (?) | .... | 52 | 15 |
| तत्स्वाभाव्या | .... | 53 | 9 |
| भेदाभेदयोः | .... | 53 | 11 |
| अप्रतिष्ठित एव | .... | 53 | 22 |
| रम्भणमित्यादि | .... | 54 | 24 |
| चाप्यथ । | .... | 57 | 3 |
| सर्वात्मना | .... | 57 | 17 |
| अनारब्धव्यमेव | .... | 59 | 25 |
| सावादित्यो | .... | 60 | 14 |
| यथा पुनः | .... | 62 | 25 |
| बन्धः कामौ | .... | 67 | 22 |
| सौम्यो घोरस्तथा | .... | 68 | 26 |
| प्रतिद्वन्द्वं सुख | .... | 69 | 11 |
| बहुधोल्लेखिताः | .... | 71 | 6 |
| योग इत्युच्यते | .... | 71 | 25 |
| पदेशान्नेति चेन्न वा | .... | 75 | 6 |
| स्मृत्युपबृंहणैः | .... | 77 | 6 |
| विवरणम् | .... | 81 | 9 |
| निरन्वयो | .... | 92 | 25 |
| र्व्यतिरेकाद्यैः क | .... | 98 | 19 |
| मपरमिम | .... | 101 | 3 |
| परमात्माधिकारा | .... | 111 | 2 |
| शयत्वस्यासिद्धे | .... | 114 | 1 |
| परात्तु तच्छ्रुतेः | .... | 115 | 3 |

| शुद्धः पाठः | | पृष्टम् | पंक्तिः |
|---|---|---|---|
| प्राणोत्पत्तेरसं | .... | 117 | 18 |
| व्याकरणम् | .... | 119 | 13 |
| भवति स्वयम् | .... | 130 | 19 |
| ब्रह्मसंस्थोऽमृत | .... | 148 | 11 |
| तथैतीति च | .... | 148 | 11 |
| नैवं विदीति | .... | 151 | 23 |
| एवं वृष्टौ पञ्च | ... | 153 | 21 |
| दग्ध्वा सारतरं | .... | 162 | 4 |
| प्रपञ्चस्य दग्ध्वा | .... | 162 | 6 |
| पूजयेद्गुरुम् | ... | 163 | 25 |
| मुपास्स इत्यादौ | .... | 169 | 6 |
| अनावृत्तीति | .... | 170 | 1 |
| तस्माल्लिङ्गं | .... | 170 | 19 |
| आसीनस्संभवा | .... | 172 | 22 |
| स च प्राणेन | .... | 175 | 4 |
| पक्रमात्पूर्वं स | .... | 175 | 8 |
| तथोपलब्धे | .... | 175 | 14 |
| तस्य हैतस्यादिक | .... | 176 | 16 |
| नामरूपादि वा | .... | 180 | 16 |
| ह्यहमेक इति श्रुतिः। | .... | 180 | 23 |
| तिर्यक् त्रिपुण्ड्रकम्। | .... | 192 | 4 |
| तीश्वरत्वस्यौ | .... | 206 | 15 |
| प्रकृतिश्च | .... | 207 | 9 |
| अप्रामाण्ये प्र | .... | 224 | 9 |
| तेति नन्वसिद्धो | .... | 230 | 1 |
| रत्वा चरित्वा | .... | 230 | 12 |
| गुणत्वनेति वाच्यम् | ... | 233 | 9 |
| लोकः क्षीयते | .... | 238 | 6 |
| करोत्ययम् " इति | .... | 238 | 19 |
| " स्तेनः प्रकीर्ण | .... | 239 | 1 |

| शुद्धः पाठः | | पुटम् | पंक्तिः |
|---|---|---|---|
| विद्य व्रजन्ति " इति | .... | 239 | 10 |
| मुक्त्वा इति नु | .... | 239 | 23 |
| निर्विशेष | .... | 240 | 5 |
| ' इति नु काम | .... | 241 | 14 |
| विद्याकर्मणी | .... | 241 | 19 |
| (अत्र आदौ 'त्या' इत्यधिकम्) | .... | 242 | 11 |
| मुत्क्रमणाभा | .... | 242 | 21 |
| पन्थाः । | .... | 245 | 3 |
| विशेषण | .... | 247 | 2 |
| मपि सार्थ | .... | 247 | 3 |
| रित्यौडुलोमि | .... | 248 | 1 |
| रीरात् स | .... | 248 | 10 |
| ' स स्वराड् भ | .... | 248 | 17 |
| 'भावं जैमि | .... | 248 | 25 |
| विद्याभेदेन | .... | 249 | 8 |
| व्यतिरेक | .... | 250 | 24 |
| प्रकरणा | .... | 250 | 25 |
| द्वारत्वोपपत्तेः | .... | 251 | 11 |
| षार्थपर्यवसा | .... | 251 | 14 |
| र्योऽप्यध्ययन | .... | 251 | 16 |
| कर्मानुष्ठान | .... | 252 | 24 |
| शेषत्वात् पुरुषा | .... | 253 | 4 |
| इत्येवमादिषु | .... | 253 | 8 |
| गुरुकारुण्या | .... | 254 | 20 |
| तस्य मुक्तिः करे | .... | 254 | 21 |

———

॥ श्रीः ॥

नीलकण्ठशिवाचार्यविरचितः

# क्रियासारः

---

आद्यन्तमङ्गलमजातसमानभाव-

माद्यन्तविश्वमजरामय[1]मात्मदेवम् ।

पञ्चाननं प्रबलपञ्चविनोदशीलं

सम्भावये मनसि शङ्कर[2]मम्बिकेशम् ॥ १

कैलासे वसते कलानिधिकलां सानन्दमुत्तंसते

सद्योन्मीलितशैलराजतनयापुम्भावमिश्रायते ।

कस्तूरीकलितार्धकल्पितकनत्कर्पूरलेपोल्लस-

द्देहायामितकिङ्करैर्विलसते तस्मै नमः शम्भवे ॥ २

रुद्राक्षस्रगलङ्कृताननितरां शुभ्रैरदभ्रैः शुभै-

र्दिग्धाङ्गान् भसितैरमन्दहसितैर्मान्यान् परानन्दतः ।

तान् वन्दे शिवकिङ्कराञ्छिवकृपालब्धाणिमाद्यष्टकान्

प्रत्यूहाद्रिविभेदने पटुतरान् दम्भोलिकल्पानहम् ॥ ३

वन्दे मल्लयदेवदेशिकवरं तातं शिवाराधने

बद्धोत्साहमनादिवीरविलसच्छैवागमोक्तक्रमैः ।

प्रातर्मध्यदिनेऽथ सायमुचितैर्नालं दिवाशर्वरी

यत्स्वाभाविकभक्तियोगलहरीविस्तारणायाखिलम् ॥ ४

---

[1] मात्मदेहम्—पा. [2] माम्बिकेयम्—पा.

तां वन्दे चन्नमाम्बामहरहरुदितभक्तिभावैरुदारैः
  पातिव्रत्यं शिवाचार्यपरिचरणविधौ साधु सम्पादयन्तीम् ।
मैत्रीमानन्दयन्तीं परशिवपदयोः पश्यतां पात्रयित्रीं
  धात्रीशीलानुकर्त्रीं परकृतसहने सादरं मत्सवित्रीम् ॥ ५

देवः कैलासनाथः कलितशशिकलः शर्वरीपाश्चिमांशे
  कारुण्याम्भोनिधिर्मामशिशिषदमलैः सूक्तिबृन्दैरमन्दैः ।
सर्वेषामागमानां वचनसमुदयैः सङ्गृहीतैः प्रबन्धं
  कुर्यास्त्वं वत्स बुद्धिः प्रसरति विमला ते क्रियासारनाम्ना ॥ ६

इत्याज्ञप्तस्तु तेन स्वरसविकसितां बुद्धिमासाद्य सूक्ष्मां
  भूयस्यै प्रीतयेऽहं जगति सुमनसां सत्क्रियासारमेनम् ।
कुर्वे सर्वागमानां परशिववचसां सङ्ग्रहं नीलकण्ठः
  स्मारं स्मारं स्मरारेर्मनुमनुकलयन् स्वप्नलब्धोपदेशम् ॥ ७

लिङ्गाङ्गी मनुजो भवेद्यदि पुनर्नाङ्गी यदैवाङ्गभाक्
  सारङ्गीपदसङ्गिपाणिकमलोऽनङ्गीकृतानङ्गधृत् ।
अङ्गासङ्गिभुजङ्गभूषणपरो गङ्गातरङ्गावली-
  राजद्रम्यकुरङ्गलिङ्गशकलोत्तंसोत्तमाङ्गो भवेत् ॥ ८

नीलकण्ठमुखाम्भोधेर्निगमागमवर्त्मना ।
निर्गतेनैव राद्धान्तं नीलकण्ठस्तनोत्यसौ ॥ ९

पूर्वाचार्यैरखिलनिगमैरागमैरुक्तमार्गा
  क्षुण्णा तीक्ष्णैः प्रबलमतिभिर्लब्धतत्त्वावबोधैः ।
संक्षिप्योक्ता ह्यकृतकवचोगुम्फनैर्जङ्गमानां
  भूयो भूयादमलमनसां भूयसी भक्तिवृद्धिः ॥ १०

शैवानागमबोधितान् श्रुतिवचोनिन्द्यान् रटन्तोऽवदन्
  व्यासीयाखिलसूत्रबोधितमतप्रत्यार्थितादार्शिनः ।
वेदोदीरितकर्ममार्गचरतामेतेषु वैमुख्यमप्य-
  न्येषामाधिकारितां श्रुतिमताचारच्युताचारिणाम् ॥ ११

शैवेऽस्मिन् श्रुतिमूलत्वं व्याससूत्रानुकूलताम् ।
वैदिकाचरणीयत्वं तान्निरस्यन् प्रदर्शये ॥ १२

आगमानामशेषाणामुपदेष्टा महेश्वरः ।
वेदानामपि नैतेषु युक्तः प्रामाण्यसंशयः ॥ १३

प्रामाण्यमविशेषेण निगमागमवर्त्मनाम् ।
आगमा द्विविधा ज्ञेया वेदानामविरोधिनः ॥ १४

विरोधिनश्च तत्रैते श्रुतिमार्गानुरोधिनः ।
कर्षणादिप्रतिष्ठान्ता वैदिकानुष्ठिता यथा ॥ १५

तथैव वीरशैवानामागमा वैदिका मताः ।
वेदाविरुद्धरूपेण वैदिकत्वमुदाहृतम् ॥ १६

यदि वेदोक्तमेव स्याद्वैदिकं परमार्थतः ।
एकादशीव्रतादीनां [1] श्रुत्यबोधितकर्मणाम् ॥ १७

अवैदिकत्वात्सर्वेषामननुष्ठेयता भवेत् ।
वेदाविरुद्धानुष्ठानात् पातित्यं चापतेत्तदा ॥ १८

यद्यनुष्ठेयमेव स्यादेकादश्यादिकं बुधैः ।
शैवागमास्तदाचारा वैदिका नेति का प्रमा ॥ १९

स्मृतिभिश्च पुराणैश्च विहिता एव वैदिकाः ।
शैवागमेषु विहिता नैव स्युर्वैदिका यदि ॥ २०

स्मृत्युक्ता वैदिका नेति कुतस्त्वं नैव भाषसे ।
वैदिकास्ते भवेयुश्चेदागमोक्ताश्च वैदिकाः ॥ २१

अत एवाचरन्त्येतान् वैदिकाः सकला बुधाः ।
आलयोत्सवकर्मादीन् मुक्तये शास्त्रवित्तमाः ॥ २२

कापालादिमतान्याहुः शैवान्यन्यानि यानि च ।
अवैदिकानि सर्वाणि नाचरेत्तानि वैदिकः ॥ २३

---

[1] श्रुत्यचोदित- पा.

शैवान् पाशुपतांश्चैव जटिलान् मुण्डिनस्तथा ।
लिङ्गिनो व्रतिनश्चैव पाषण्डान् परिवर्जयेत् ॥ २४
इत्यनेन निषिद्धानि कापालादीनि वै पुनः ।
वीरशैवक्रमगता न निन्द्या इति तत्कथम् ॥ २५
न हिंस्यादिति वाक्येन हिंसामात्रे निषेधिते ।
यागीयपशुबन्धादौ न निषेधो भवेत्तथा ॥ २६
सर्वशब्दस्य सङ्कोचो धर्मतोऽन्यत्र युक्तिमान् ।
यजेतेति विधिस्तत्र नियामक उदाहृतः ॥ २७
वीरशैवेतरे शैवे शैवानित्यादिनिन्दितम् ।
शैवशब्दस्य सङ्कोचः सर्वशब्दादिके यथा ॥ २८
नियामिका श्रुतिस्तत्र श्रूयते बहुशः पुनः ।
वेदान्तसारमुख्यासु [1] चामृताख्यादिके तथा ॥ २९
अथवा शिवनिश्वासश्रुतिभ्यस्ते शिवागमाः ।
अधिकाः शिववक्त्रेभ्यः साक्षादेव विनिर्गताः ॥ ३०
परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः ।
अल्पबुद्धिभिरन्योन्यविरोधः परिकल्प्यते ॥ ३१
निगमानामागमानां परमाप्तोपदेशतः ।
प्रामाण्यमविशेषेण ज्ञातव्यं तत्त्वदर्शिभिः ॥ ३२
बहुभिर्युक्तिभिः स्पष्टं विरोधः परिहार्यते ।
ग्रन्थविस्तरभीत्याहं प्रकृतार्थमुपक्रमे ॥ ३३
प्रबन्धस्य [2] क्रमादवमुपोद्घातादनन्तरम् ।
द्वात्रिंशदुपदेशास्ते भवन्ति कथिता इमे ॥ ३४
उपदेशे प्राथमिके व्याससूत्रानुरोधतः ।
सर्वज्ञे सर्वशक्तौ च निमित्ते जगतस्तथा ॥ ३५

---

[1] चामृतस्यादिके–पा. [2] क्रमस्त्वेवमु–पा.

उपादाने च वेदान्तवाक्यानां सम्यगन्वयः ।
सर्ववेदान्तवाक्यानामुपदेशे द्वितीयके ॥ ३६

स्मृत्यादिबाधे सम्प्राप्ते परिहारः प्रदर्श्यते ।
परपक्षानपेक्षत्वं प्रपञ्चेनोपपादितम् ॥ ३७

श्रुतिवाक्यनिषेधस्य परिहारः प्रपञ्चितः ।
जीवस्याजन्यता तस्या हेतवश्च प्रदर्शिताः ॥ ३८

तृतीये चोपदेशे तु जीवे करणबृंहिते ।
उपसंहरणं प्रोक्तं तदवस्थान्तराणि च ॥ ३९

ब्रह्मत्वं च तथा विद्याभेदाभेदाविति क्रमात् ।
गुणोपसंहृतिश्चापि तद्गुणानुप[1]संहृतिः ॥ ४०

विद्यातः पुरुषार्थस्य सिद्धिस्तत्रोपवर्णिता ।
विद्यातदङ्गभूत्यादिधारणासहकारिणः ॥ ४१

विधिप्रभेदा मुक्तेश्च फलस्य नियमाः क्रमात् ।
साधनं च विचारश्च वर्णिताः क्रमशस्तथा ॥ ४२

उपदेशे चतुर्थे तु कृतं फलविचारणम् ।
दन्तधावनमुख्यानि कर्माणि कथितानि हि ॥ ४३

उपदेशे पञ्चमके षष्ठे भस्मजनिस्ततः ।
धारणं सप्तमे भूतेरष्टमे तत्प्रशंसनम् ॥ ४४

रुद्राक्षोत्पत्तिरुदिता नवमे दशमे पुनः ।
धारणं तत्प्रशंसा तु कथितैकादशे क्रमात् ॥ ४५

उपदेशे द्वादशे तु पञ्चाक्षरजपक्रमः ।
त्रयोदशे तत्प्रशंसा शिवपूजाविधिस्ततः ॥ ४६

चतुर्दशोपदेशे स्यात्पुष्पपात्रादिलक्षणम् ।
उपदेशे पञ्चदशे षोडशे तूच्यते क्रमात् ॥ ४७

---

[1] संहतिः—पा.

गुरुपूजाविधिस्तस्य प्रशंसा भक्तिपूर्वकम् ।
[1]भक्तिप्रशंसा कथिता तथा सप्तदशे ततः ॥ ४८
अष्टादशे तेषु दानमेकोने विंशके पुनः ।
लिङ्गाङ्गसामरस्यं च लिङ्गधारणमेव च ॥ ४९
विंशोपदेशे कथिता तत्प्रशंसा समासतः ।
आद्यतत्त्वमहालिङ्गलक्षणं त्वेकविंशतौ ॥ ५०
शक्तिवैशिष्ट्यमुदितं द्वाविंशे सप्रमाणकम् ।
त्रयोविंशे गोलकादिस्खलनादिनिरूपणम् ॥ ५१
चतुर्विंशे षट्स्थलोक्तिरथ दीक्षा विशेषतः ।
पञ्चविंशेऽथ षड्विंशे सकलध्यानमीरितम् ॥ ५२
सप्तविंशे निष्कलस्य ध्यानरीतिरुदाहृता ।
अष्टाविंशोपदेशे तु प्रसादग्रहणं गुरोः ॥ ५३
पादोदकाभिषेकश्चाप्येकोनत्रिंशके पुनः ।
स्वतः प्रामाण्यमुदितमागमानामनुक्रमात् ॥ ५४
शिवधर्मप्रभावस्तु त्रिंशतीरित आदरात् ।
एकात्रिंशे समाख्याता शिवद्रोहे समागते ॥ ५५
निष्कृतिः प्रायशस्तत्र द्वात्रिंशदुपदेशके ।
शिवमाहात्म्यकथने श्रवणे भक्तिपूर्वकम् ॥ ५६
श्रेयःपरम्परावाप्तिः कथितोऽयमनुक्रमः ।
द्वात्रिंशदुपदेशास्ते सङ्गृहीताः शिवागमैः ॥ ५७
निरूपणीयमन्योन्यनिगमागमवर्त्मनाम् ।
ऐकरूप्यं विरोधस्य परिहारः प्रमाणतः ॥ ५८
वीरशैवागमानां तु विशेषेणैकरूपता ।
विद्याश्चतुर्दश ख्याता वाच्या तत्सम्मतिः पुरा ॥ ५९

---

[1] भक्तम–पा

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ६०
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।
च्छन्दोविचितिरित्येतैष्षडङ्गो वेद उच्यते ॥ ६१
आदिवक्ता शिवः साक्षादेतासां परमेश्वरः ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ ६२
ऋगेकविंशभेदा स्याद्यजु[र]ष्येकोत्तरं शतम् ।
सहस्रधा सामवेदो नवधाथर्वणः स्मृतः ॥ ६३
तत्रैते वेदपुरुषशिरांस्युपनिषद्गणाः ।
श्रीरुद्रबृहदारण्यश्वेताश्वतरमुण्डकाः ॥ ६४
कैवल्यकालाग्निरुद्रौ कठवल्ली च बाष्कलः ।
हंसः परमहंसश्च ब्रह्मनारायणावपि ॥ ६५
कात्यायनो ब्रह्मबिन्दुरारुण्यमृतबिन्दुकौ ।
पञ्चब्रह्म च जाबालस्तेजोबिन्दुश्च मौद्गलः ॥ ६६
बोधायनीयचर्चे च श्रवणं च पराक्रमः ।
[1] प्राच्यश्च शौनकीयं च शिवसङ्कल्पमेव च ॥ ६७
आसुरायणमैत्रायणीयवाजसनेयकम् ।
वेदान्तसारप्रणववज्रसूच्यम्बकास्तथा ॥ ६८
साङ्ख्यायनीयमित्याद्यास्सर्व[2] विद्योत्तमोत्तमाः ।
अष्टादश पुराणानि परिगीतानि तानि तु ॥ ६९
आदौ ब्राह्मं ततः पाद्मं तृतीयं वैष्णवं विदुः ।
शैवं चतुर्थमाख्यातं पञ्चमं भगवत्परम् ॥ ७०
षष्ठं तु नारदीयं स्यान्मार्कण्डेयं तु सप्तमम् ।
आग्नेयमष्टमं ज्ञेयं भविष्यं नवमं विदुः ॥ ७१

---

[1] प्रोच्यश्च—पा. [2] वेदोत्त—पा.

दशमं ब्रह्मकैवर्तं लैङ्गमेकादशं मतम् ।
वाराहं द्वादशं विद्यात्स्कान्दं चैव त्रयोदशम् ॥ ७२
चतुर्दशं वामनं तु कौर्मं पञ्चदशं मतम् ।
मात्स्यं षोडशमाख्यातं गारुडं तु ततः परम् ॥ ७३
अष्टादशं स्याद्ब्रह्माण्डमुपपूर्वाण्यतः परम् ।
सनत्कुमारकथितं [1] नारदीयं ततः परम् ॥ ७४
स्कान्दं सनत्कुमारेण कथितं तु ततः परम् ।
चतुर्थं शिवधर्माख्यं पुराणं नन्दिनिर्मितम् ॥ ७५
तथा दुर्वाससा प्रोक्तं नारदीयं ततः परम् ।
कापिलं मानवं चैव तथैवोशनसा कृतम् ॥ ७६
ब्रह्माण्डं तु ततः पुण्यं वारुणं तु ततः परम् ।
पुराणं कालिकाख्यं स्यात्कालकण्ठाभिधानकम् ॥ ७७
ततो वासिष्ठलैङ्गाख्यं नाम्ना माहेश्वरं च तत् ।
ततः साम्बपुराणाख्यं सुसूक्ष्ममिमिति चरितम् ॥ ७८
पाराशरं च मारीचं भार्गवाख्यं ततः परम् ।
एतान्युपपुराणानि ब्रह्मज्ञानप्रदानि हि ॥ ७९
मीमांसा न्यायशास्त्रं च पुराणं स्मृतयस्तथा ।
वेदोपाङ्गानि मुनिभिः परिगीतानि तत्र तु ॥ ८०
पूर्वोत्तरविभेदेन मीमांसा द्विविधा स्मृता ।
न्यायकाणादभेदेन तर्कोऽपि द्विविधः स्मृतः ॥ ८१
स्मृतयोऽष्टादश प्रोक्ता मुनिभिर्निर्मिताः पृथक् ।
तेषु पूर्वो मनुः प्रोक्तो बृहस्पतिरनन्तरः ॥ ८२
दक्षनामा तृतीयः स्याद्गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥ ८३

---

[1] नारसिंह—पा.

संवर्तोशनसौ शङ्खलिखितावात्रिरेव च ।
विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥ ८४
अष्टादशापि स्मृतयस्तन्नामपरिचिह्निताः ।
जाबालिर्नाचिकेतश्च स्कन्दो [1] लोकाक्षिकाश्यपौ ॥ ८५
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ।
क्रतुः कात्यायनश्चैव जातुकर्णिः कपिञ्जलः ॥ ८६
बोधायनश्च काणादो विश्वामित्रस्तथैव च ।
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥ ८७
अष्टादशोपस्मृतयस्तत्तन्नामाभिरङ्किताः ।
एवं चतुर्दश ख्याता वेदमार्गानुरोधतः ॥ ८८
ताल्वोष्ठपुटानिष्पन्दपूर्वकं शिवभाषिताः ।
अष्टाविंशतिसङ्ख्याकाः शिवोक्तास्ते शिवागमाः ॥ ८९
[2] त्रिपादार्धं चतुष्पादं प्राह तन्त्रं जगत्पतिः ।
सूत्रेणैकेन सङ्गृह्य प्राह विस्तरतः प्रभुः ॥ ९०
कामिकादिप्रभेदेन तद्भिन्नं बहुधैव हि ।
कामिकाद्या वातुलान्ताः शिवेनोक्ताः शिवागमाः ॥ ९१
सिद्धान्ता इति विज्ञेया उपभेदसमन्विताः ।
कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा ॥ ९२
दीप्तं सूक्ष्मं सहस्रं चाप्यंशुमान् सुप्रभेदकः ।
विजयश्चैव निश्वासः स्वायम्भुवमथानलम् ॥ ९३
वीरं च रौरवं चेति मुकुटं विमलं तथा ।
चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ॥ ९४
सिद्धसन्तानशर्वोक्तं पारमेश्वरमेव च ।
किरणं वातुलं चैता अष्टाविंशतिसंहिताः ॥ ९५

---

[1] लौगाक्षि-पा. [2] त्रिपदार्थ—पा.

एवमन्यनि तन्त्राणि शिवेनोक्तान्यनेकशः ।
महामायाशम्बरं च योगिनी[1] बालशम्बरम् ॥ ९६
तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ।
बहुरूपाष्टकं चैव यामलाष्टकमेव च ॥ ९७
चन्द्रज्ञानं वासुकं च महासम्मोहनं तथा ।
[2] महोच्छुष्मं महादेवं वातुलं वातुलोत्तरम् ॥ ९८
हृद्भेदं मातृभेदं च गुह्यतन्त्रं च कामिकम् ।
कलापादं कलासारं तथान्यत्कुब्जिकामतम् ॥ ९९
मायोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ॥ १००
कुलासारं [3]कुलोद्देशं कुलचूडामणिस्तथा ।
सर्वज्ञानोत्तमं चैव महाशिवमतं तथा ॥ १०१
महालक्ष्मीमतं चैव सिद्धयोगीश्वरीमतम् ।
कुरूपिकामतं चैव रूपिकामतमेव च ॥ १०२
सर्ववीरमतं चैव विमलामतमुत्तमम् ।
पूर्वपश्चिमदाक्षिण्यमुत्तरं च निरुत्तरम् ॥ १०३
तन्त्रं वैशेयकं ज्ञानं वीरयोगं तथापरम् ।
अरुणेशं मोहनेशं विशुद्धेश्वरमेव च ॥ १०४
एवमेतानि तन्त्राणि कथितान्यपि कोटिशः ।
सर्वासामपि विद्यानां वीरशैवं विशिष्यते ॥ १०५

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरस्थलाभिज्ञ-
नीलकण्ठकृते निगमागमसारभूते क्रियासारे
उपोद्धातप्रकरणम् ॥

---

[1] जाल–पा. [2] महोच्छुष्कं–पा. [3] कुलोड्डीशं–पा.

## प्रथमोपदेशप्रारम्भः।

---

अथाभिधास्ये वीराणां शैवानां वेदमूलताम्।
व्यासनिर्मितसूत्रार्थं तत्तात्पर्यानुसारतः॥ १

विशब्देनोच्यते विद्या शिवजीवैक्यबोधिनी।
तस्यां रमन्ते ये शैवा वीरशैवाः प्रकीर्तिताः॥ २

विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः।
विकल्परहितं शैवं वीरशैवं प्रचक्षते॥ ३

विरोधार्थो विशब्दः स्याद्रशब्दो रहितार्थकः।
विरोधरहितं शैवं वीरशैवं विदुर्बुधाः॥ ४

तत्रामृतस्य वाक्योक्तलिङ्गधारणवैभवे।
लिङ्गाङ्गसामरस्ये च फलं मोक्षं प्रचक्षते॥ ५

पिण्डादिज्ञानशून्यान्तमेकोत्तरशतस्थलम्।
षट्स्थलं लिङ्गभेदं च जिज्ञासुर्भक्तिपूर्वकम्॥ ६

अधिकारी स विज्ञेयस्त्यक्तसर्वैषणः स्वयम्।
अष्टाङ्गयोगवान् ज्ञानी पञ्चाचारपरायणः॥ ७

भक्तमाहात्म्यशुश्रूषुश्चिकीर्षुर्मोक्षसाधनम्।
गुरुशुश्रूषणरतः श्रुतवान् वीतकल्मषः॥ ८

न गुरोः सदृशी माता न गुरोः सदृशः पिता।
संसारादुद्धरेद्यो हि परमार्थोपदेशतः॥ ९

गुरूपसदनादेव ब्रह्मविष्ण्वादयः सुराः।
लिङ्गाङ्गसामरस्यं च प्रापुर्विगतज्वराः॥ १०

सनत्कुमारप्रमुखा ज्ञाननिष्ठा यशस्विनः।
धृतलिङ्गाङ्गभावाश्च विराजन्तेऽनिशं मुदा॥ ११

ढुण्डिनन्दिमहाकालप्रमुखा गणनायकाः ।
चतुर्दशसहस्रं हि कैलासावरणाधिपाः ॥ १२
मतप्रवर्तकाः सर्वे गुरुपीठाधिरोहिणः ।
महेश्वरसमीपे ते वर्तन्ते शूलपाणयः ॥ १३
अगस्त्यो जामिनिश्चैव विश्वामित्रोऽथ काश्यपः ।
भरद्वाजोऽङ्गिरा अत्रिर्वसिष्ठो रोमहर्षणः ॥ १४
एते सर्वे महाभागा अतिवर्णाश्रमे रताः ।
वीरशैवाः समाख्याता जीवन्मुक्ता न संशयः ॥ १५
येषां तु जन्म चरमं तेषामत्र मतिर्भवेत् ।
ते धन्यास्ते कुलीनाश्च शिवज्ञानप्रवर्तकाः ॥ १६
एतैः सर्वेषु लोकेषु सर्वे धर्माः प्रवर्तिताः ।
शिव एव हि सर्वेषां गुरुराद्यः परात्परः ॥ १७
कालेन चानवच्छेदात्स पूर्वेषां गुरुः शिवः ।
तन्मुखाद्गालिता वेदाः कामिकाद्याश्च संहिताः ॥ १८
अन्याश्च विविधा विद्यास्तत्तत्कर्मप्रदर्शिकाः ।
तत्र दीक्षां गतो व्यासस्तत्त्वज्ञानैकतत्परः ॥ १९
पशुपाशपतिज्ञानं लब्धवाञ्छिवभक्तितः ।
शिवज्ञानानि दिव्यानि मोक्षैकफलदान्यपि ॥ २०
शिवेनैवोपदिष्टानि तेन तानि धृतानि च ।
ततः कृतानि सूत्राणि तेन तत्त्वपराणि हि ॥ २१
तेषामर्थाश्च न स्पष्टाः सद्गुरोरप्यदर्शनात् ।
बहुधोल्लेखिता अर्थास्तर्कैः कर्कशभाषणैः ॥ २२
यद्यैक्यं ज्ञानशब्दार्थो जीवात्मपरमात्मनोः ।
मिथ्यात्वं जगतो रज्जुसर्पभ्रान्तिवदिष्यते ॥ २३
अविद्यावद्विषयतां शास्त्राणामिति केचन ।
ब्रह्मज्ञानैकनाश्यं हि प्रारब्धं कर्मजं फलम् ॥ २४

इति केचिद्वर्णयन्ति केचिदन्यत्प्रचक्षते ।
जीवात्मा परमात्मा च द्वौ पदार्थौ व्यवस्थितौ ॥ २५
सत्यत्वं ब्रह्मणः साक्षादनित्यत्वं विकारजम् ।
प्रपञ्चस्य तथा सर्वसाक्षित्वं परमेशितुः ॥ २६
प्रधानतोपासनस्य मुक्तिः सालोक्यनामिका ।
दिव्यमङ्गलरूपं च परस्य ब्रह्मणोऽस्ति हि ॥ २७
एवं मतानि बहुशो भुवि विस्तरितान्यपि ।
समुपेत्य तदा व्यासः प्रार्थयामास शङ्करम् ॥ २८
मतानि विविधान्येव समुत्पन्नानि शङ्कर ।
मत्कृतानां च सूत्राणामयथानयनं कृतम् ॥ २९
[1]परमेवेति निश्चित्य कुर्वन्ति कलहं मिथः ।
त्वत्प्रमादैकलब्धस्य सूत्रजालस्य शङ्कर ॥ ३०
यथापूर्वं त्वया कार्यं मत्सूत्रार्थविवेचनम् ।
इति तेन प्रार्थितः सन् दयालुः पार्वतीपतिः ॥ ३१
नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ।
विशिष्टाद्वैतसिद्धान्तप्रतिपादनमुत्तमम् ॥ ३२
मयापि तस्य तात्पर्यं श्रोतॄणां सुखबुद्धये ।
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ॥ ३३
लिङ्गाङ्गसामरस्यैकलभ्यं पाशविमोचनम् ।
शिव एव परं तत्त्वं शिव एव परं महः ॥ ३४
शिव एव परं ज्योतिः शिव एव परात्परः ।
व्यासोक्तं यत्परं ब्रह्म स्वसूत्रेषु शिवः स्वयम् ॥ ३५
शिव एव हि लिङ्गं च लिङ्गरूपी शिवः स्वयम् ।
सर्ववेदान्तवाक्यानां प्रतिपाद्यः शिवः स्वयम् ॥ ३६

---

[1] एवमेवेति–पा.

सर्वतत्त्वावलम्बश्च जगत्कारणमव्ययः ।
तत्त्वमस्यादिवाक्यार्थस्वरूपी निष्कलः स्वयम् ॥ ३७

एवं ब्रह्माद्वितीयं च सत्यं ज्ञानं सुखात्मकम् ।
निर्गुणं [1] निष्कलं शुद्धं जनिमाख्यं निरञ्जनम् ॥ ३८

देवानामादिभूतश्च रुद्रो [2] विश्वाधिकः प्रभुः ।
सर्वज्ञः सर्वकर्ता च सर्वकारणमीश्वरः ॥ ३९

अनादिनिधनं वस्तु परापरविहीनकम् ।
परमात्मस्वरूपं च परब्रह्मस्वरूपकम् ॥ ४०

निष्ठाप्राप्यं परं तत्त्वमप्रमेयमनूपमम् ।
कथयन्तीति वेदान्ताः शिवं परमकारणम् ॥ ४१

महालिङ्गस्वरूपोऽयं शङ्करः स सदाशिवः ।
इति जानन्ति ये [3] भक्त्या गुरोः कारुण्यतः शिवम् ॥ ४२

शोकं तरन्ति ते सर्वे महादेवप्रसादतः ।
सर्ववेदान्तसारं हि चिदम्बरसमन्वितम् ॥ ४३

पूजये[4]द्दहमाकाशे स्वात्मनो हितमाचरन् ।
प्रकारा बहवः सन्ति दहरोपासनादयः ॥ ४४

सा तु कार्या वीरशैवैर्गर्भदीक्षादिसंस्कृतैः ।
लिङ्गाङ्गसामरस्येन शिवभावसमन्वितैः ॥ ४५

कालयोरागमार्थानुसारेणातिसमाहितैः ।
स्फुटीभविष्यति स्थूलसूक्ष्ममध्यमभेदतः ॥ ४६

त्रिविधा शिवपूजापि चोपदेशे चतुर्दशे ।
सा च पूजा हस्तपीठे मुख्यान्यत्रापि केचन ॥ ४७

तन्मात्रेणैव सन्तुष्टः शम्भुर्निश्रेयसप्रदः ।
तस्यापि मूर्तयः सन्ति पञ्चविंशतिसङ्ख्यया ॥ ४८

---

[1] निर्मलं—पा. [2] विश्वाधिपः -पा. [3] भक्त्या—पा. [4] हृदयाकाशे—पा.

ताश्च कुर्वन्ति लिङ्गस्य पूजनं भक्तिपूर्वकम् ।
विष्ण्वाद्यः सुरगणा यक्षरक्षोगणास्तथा ॥ ४९
जन्मकर्मनिवृत्त्यर्थं मुनयो धृतनिश्चयाः ।
उपासते महालिङ्गं बहवो मोक्षणार्थिनः ॥ ५०
नित्यापरोक्षविज्ञानं चिद्घनानन्दरूपिणम् ।
लिङ्गं च कारज्ञानिममृतं ब्रह्मोडितं परम् ॥ ५१
सत्यं ज्ञानं सुखं नित्यं बाधकं शरणं श्रुतम् ।
एवमादीनि नामानि सन्ति लिङ्गस्य भूरिशः ॥ ५२
तल्लिङ्गमेव सूत्रेषु व्यासेनापि विचारितम् ।
नीलकण्ठशिवाचार्यैस्तत्तात्पर्यं प्रकाशितम् ॥ ५३
कलिकल्मषनिर्धूततत्त्वबुद्धिभिरन्यथा ।
नीतं यथायथं शास्त्रं सद्गुरोरप्यदर्शनात् ॥ ५४
अमात्सर्यपरिप्राप्तमतिकौशलशालिभिः ।
[1]विभावनीय एवार्थः कथ्यतेऽथ यथातथम् ॥ ५५
अथातो ब्रह्मजिज्ञासेत्यस्मिन्सूत्रे यदीरितम् ।
तद्ब्रह्म केवलं लिङ्गं ज्ञातव्यं च मुमुक्षुभिः ॥ ५६
समनन्तरसूत्रेषु तद्गुणा एव वर्णिताः ।
आनन्तर्येऽथशब्दः स्यात्पूर्वकाण्डानुरोधतः ॥ ५७
किमनन्तरमित्युक्ते वाच्यं धर्मविचारतः ।
आनन्तर्यं [2]विचार्यस्य ब्रह्मणो लिङ्गरूपिणः ॥ ५८
ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्मङ्गलिकावुभौ ॥ ५९
इति प्रमाणतस्तत्र मङ्गलार्थे न युज्यते ।
पूर्वकाण्डविरोधेनाप्यङ्गाङ्गित्वनिरूपणात् ॥ ६०

---

[1] विश्रामणीय–पा. [2] विचारस्य-पा.

ब्रह्मणो लिङ्गरूपित्वं न युक्तमिति चेच्छृणु ।
आत्माय नम आरभ्य लिङ्गशब्दपरम्परा ॥ ६१

प्रसिद्धतैत्तरीयोपनिषद्येव प्रदृश्यते ।
लिङ्गशब्दस्य नान्योऽर्थः कल्प्यः स्वरसतः श्रुतेः ॥ ६२

आत्मत्वेन नमस्कारस्तदुत्कृष्टनमस्कृतिः ।
तत इत्यर्थसाङ्गत्यं ब्रह्मणो लिङ्गरूपतः ॥ ६३

अनन्तरनमस्कारः कथं सङ्गच्छतेऽन्यथा ।
तस्माल्लिङ्गपदस्यार्थो ब्रह्म नित्यं निरञ्जनम् ॥ ६४

पूर्वकाण्डप्रसिद्धस्तु धर्मोऽग्निष्टोमपूर्वकः ।
वीरशैवादिनैवेति चानन्तर्यं कथं भवेत् ॥ ६५

वेदोक्तभूतिरुद्राक्षालिङ्गधारणकर्मठैः ।
विचार्यं ब्रह्म लिङ्गाख्यं नानन्तर्यं विरुध्यते ॥ ६६

पूर्वकाण्डविरुद्धोऽर्थः पूर्वकाण्डोक्त उच्यते ।
पूर्वकाण्डीयधर्मश्च यावद्यत्किञ्चिदेव वा ॥ ६७

कृतोपनयनस्याशु वेदान्तेषु प्रवेशनात् ।
यावतां कर्मणां केनाप्यनुष्ठानं न शक्यते ॥ ६८

अतो यत्किञ्चिदेवात्र विवक्षितमुदीर्यते ।
चतुर्णां साधनानां तु सम्पत्तेः समनन्तरम् ॥ ६९

इति केचिद्वर्णयन्ति तन्नातीवोपयुज्यते ।
इहामुत्र फले भोगविरागः शमशालिता ॥ ७०

वेदान्तार्थविचारैकलभ्यत्वादधिकारिताम् ।
न सम्पादयतीत्यत्र धर्मानन्तर्यमुच्यते ॥ ७१

चतुस्साधनसम्पत्तिसमनन्तरमेव चेत् ।
वृत्तत्वाच्छास्त्रलब्धस्य जिज्ञासा न भवेत्क्वचित् ॥ ७२

धर्मानन्तर्यमेवातो वाच्यं धर्मो द्विधा मतः ।
पशुधर्मः प्राथमिकः पतिधर्मो द्वितीयकः ॥ ७३

अनुतिष्ठन् पशोर्धर्मान् पतिधर्मान् स चार्हति ।
यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम् ॥ ७४
आरुह्य लभते तद्वत्पतिधर्मैकतत्परः ।
यथा विहङ्गः पक्षाभ्यां फलितं वृक्षमागतः ॥ ७५
पश्यन् फलमवाप्नोति तद्वच्छीघ्रं तदर्हति ।
यन्नित्यमपरोक्षं च ज्ञानं मोक्षैकसाधनम् ॥ ७६
पशुधर्म इति प्राहुर्यस्तु काम्यफलप्रदः ।
निष्कामेन स्वपापस्य विच्छित्त्यै समनुष्ठितः ॥ ७७
यो धर्मस्तं तु शास्त्रेषु पतिधर्मं प्रचक्षते ।
दग्धेन्द्रियाणि विहितो धर्मः काम्यः स एव हि ॥ ७८
निष्कामसमनुष्ठानात्पतिधर्मत्वमप्ययेत् ।
तत्रापि सर्वकर्मादावधिकारप्रदायकम् ॥ ७९
भस्मधारणमुख्यं हि कालाग्न्युपनिषन्मुखैः ।
बृहज्जाबालमुख्यैश्च विहितं तत् पदे पदे ॥ ८०
रुद्राक्षधारणं चैव दहरोपासनादिकम् ।
कालयोः शिवपूजा च त्रिषु कालेषु वा सदा ॥ ८१
विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरो मन्त्रः शिव इत्यक्षरद्वयम् ॥ ८२
इति श्रुतिशिरोरत्नशिरोरत्नमनोर्जपः ।
आचार्यदेव इत्युक्तमन्त्रदेशिकपूजनम् ॥ ८३
प्रसादग्रहणं तस्येत्याद्याः पाशविमोचकाः ।
पतिधर्मा इमे ज्ञेयास्तदानन्तर्यमत्र च ॥ ८४
अतः शब्दोऽत्र हेत्वर्थः सर्वेषां न विशिष्यते ।
विषयस्तु द्वयोरैक्यं जीवस्य ब्रह्मणस्तथा ॥ ८५
विरुद्धयोः स्वभावेन तमस्तेजस्समानयोः ।
युष्मदस्मद्गोचरयोः कथमन्योन्यता भवेत् ॥ ८६

किञ्चिज्ज्ञत्वं च जीवत्वं सर्वज्ञत्वं तदन्यता।
अनित्यत्वं च नित्यत्वं कथमेकत्र युज्यते॥ ८७

इति चेद्दीयतां दृष्टिस्तत्त्वार्थे सावधानतः।
इदं रजतमित्येतज्ज्ञाने शुक्तौ भ्रमात्मके॥ ८८

इदन्त्वांशेन शुक्तित्वं रजतत्वमनन्तरम्।
उभयं च यथात्रास्ते विरुद्धं च परस्परम्॥ ८९

शुक्तित्वे च प्रकारे तु रजतत्वं निवर्तते।
तद्वदेवात्र सर्वज्ञे किञ्चिज्ज्ञत्वं विशिष्यते॥ ९०

सर्वज्ञत्वे प्रकारे तु किञ्चिज्ज्ञत्वं निवर्तते।
तज्जीवब्रह्मणोरैक्यं शास्त्रस्य विषयं विदुः॥ ९१

मुक्तिः साधारणत्वेन प्रयोजनमुदीर्यते।
न जीवब्रह्मणोरैक्यं सूत्रस्वरसतः स्फुरेत्॥ ९२

इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति।
यथा घट इति ज्ञाने घटत्वं स्याद्विशेषणम्॥ ९३

तथा ब्रह्मणि वैशिष्टयं शक्तेरित्यवधार्यताम्।
अग्निस्फुलिङ्गयोर्नास्ति यथा भेदः स्वरूपतः॥ ९४

अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित्।
यथाहिकुण्डलमिति भेदाभेदौ तथात्र च॥ ९५

तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम्।
षट्स्थलज्ञानमप्यत्र मोक्षसाधनमुच्यते॥ ९६

लिङ्गमेव यतः शास्त्रे ब्रह्मेति सुविचार्यते।
सर्वत्र लिङ्गसम्बन्धं कुर्वन्ति प्रतिपत्तये॥ ९७

सर्वं ब्रह्मेति वेदार्थमनुसन्धाय शाम्भवाः।
ब्रह्म लिङ्गं जनिम चेत्याद्या येन समार्थकाः॥ ९८

माध्वबौद्धादिचार्वाकमताध्वाध्वन्यतामयत्।
गणाचारविरुद्धं स्यान्न [1]स्मार्तमिति तन्मतम्॥ ९९

---

[1] नास्मार्त—पा.

नीलकण्ठशिवाचार्यभाष्यार्थमनुसन्दधन् ।
वीरशैवैरभिमतमभिधास्ये श्रुतेर्मतम् ॥ १००

तस्माद्धर्मविचारस्य पश्चाद्ब्रह्मैव केवलम् ।
विचार्यं श्रवणाद्यैश्च शान्तिमद्भिर्जनैः सदा ॥ १०१

अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
नराणां क्षीणपापानां शिवे भक्तिः प्रजायते ॥ १०२

अग्निष्टोमादयो यज्ञा अश्वमेधावसानकाः ।
सर्वे ते शिवभक्त्यर्थं निश्चिता वेदशास्त्रयोः ॥ १०३

कृतपुण्यजनाः सर्वे भक्तिं प्राप्य महेश्वरे ।
प्राप्नुवन्ति परं धाम जीवन्मुक्ताश्च ते बुधाः ॥ १०४

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ १०५

शिव एव परं ब्रह्म सच्चिदानन्दलक्षणम् ।
तदन्यन्न परं किञ्चित्तदतो ध्येयमास्तिकैः ॥ १०६

सर्वमन्यत्परित्यज्य शिवादन्यत्तु दैवतम् ।
शिव एव सदा पूज्यो मुमुक्षुभिरहर्निशम् ॥ १०७

अयमेव हि सिद्धान्तः सर्ववेदेषु नान्यथा ।
तस्माल्लिङ्गं ब्रह्म शैवमुपास्यं च मुमुक्षुभिः ॥ १०८

लिङ्गाङ्गसामरस्येन जीव ह्यैक्यलक्षणम् ।
कैवल्यमेव सर्वेषां जायते न पुनर्भवः ॥ १०९

ततो ह्युपनिषच्छास्त्रं विचार्यं शुद्धमानसैः ।
लिङ्गं सुषुप्तिरित्येतैः सुखं लिङ्गवतां परम् ॥ ११०

आलस्यादि तथान्यत्र प्रतिपादितमित्यथ ।
नमो ब्रह्मण इत्याद्यैस्तदेव हि दृढीकृतम् ॥ १११

लिङ्गस्थापनमित्यादौ शतशः प्रतिपादितम् ।

सर्वं ह्युपनिषच्छास्त्रं प्रवृत्तं वर्णितुं शिवम् ॥ १११२

तथापि मानवा मूर्खास्तत्यजुर्लिङ्गधारणम् ।
आचारो विपरीतो हि युगधर्मानुसारतः ॥ ११३

धनी ह्युदररोगस्थो न भुङ्क्ते ह्यन्नमुत्तमम् ।
तद्वत्ताच्चिकशास्त्रार्थे मतिर्नोदेति कस्य चित् ॥ ११४

शिवप्रसादसिद्धार्थाः कृतकृत्यास्तु ये नराः ।
धृतलिङ्गाङ्गभावाश्च भविष्यन्ति गतज्वराः ॥ ११५

अथातो ब्रह्मजिज्ञासेत्यारभ्य व्याससूत्रके ।
अनावृत्तिरिति ह्येतदन्तं ब्रह्म विचारितम् ॥ ११६

धार्यं निश्चित्य विद्वाद्भिर्गुरुविश्वासतत्परैः ।
रहस्योपनिषद्वाक्यैर्वर्णितं ब्रह्म केवलम् ॥ ११७

अपरिच्छिन्नविभवमवाङ्मनसगोचरम् ।
निष्कलं निर्मलं शुद्धं निर्विकल्पं निरञ्जनम् ॥ ११८

ज्ञात्वा कथमुपास्यं हि निरस्तद्वैतलक्षणम् ।
लक्षणेन प्रमाणेन वस्तुसिद्धिरुदाहृता ॥ ११९

जन्मादिकारणत्वं हि जगतां ब्रह्मलक्षणम् ।
सर्ववेदान्तवाक्यानि प्रमाणानि न संशयः ॥ १२०

एतैरापाततो ब्रह्म निश्चित्य श्रवणादिभिः ।
ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद मानवः ॥ १२१

[जन्माद्यस्य यत इति सूत्रार्थविचारः]

द्वितीयसूत्रं व्यासेन ह्यस्मिन्नर्थे समर्थितम् ।
जन्माद्यस्य यतः सूत्रं विष्णोराद्यस्य जन्म यत् ॥ १२२

तच्छम्भोर्ब्रह्मणः साक्षाज्जगत्कर्तृत्व [1]मिष्यते ।
अथ वाऽकारवाच्यस्य विष्णोर्जन्मादि यच्छिवात् ॥ १२३

सर्वप्रपञ्चहेतुत्वं लक्षणं ब्रह्मणो विदुः ।

---

[1] मुच्यते—पा.

यतो वेत्यादिवाक्यानां विषयत्वमुदाहृतम् ॥ १२४
वाक्यस्वारस्ययोगेन निश्चितं ब्रह्मधारणम् ।
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ॥ १२५
सह भूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयते ।
एष देवो महादेवो विज्ञेयः स महेश्वरः ॥ १२६
न तस्य परमं किञ्चित्पदं समधिगम्यते ।
अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् ॥ १२७
अन्त्यकाले [1] पुनश्चैतदस्मिन् प्रलयमेष्यति ।
कारणानां च यो ध्याता धाता परमकारणम् ॥ १२८
न सम्प्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ।
स सर्वैश्वर्यसम्पूर्णो नाम्ना सर्वेश्वरः स्वयम् ॥ १२९
सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ।
अयमेव शिवः कर्ता पुरुषः कारणं परम् ॥ १३०
विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ।
सृज्यते ग्रस्यते चैव तमोभूतमिदं जगत् ॥ १३१
[2] अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः ।
यदा तमस्तदा देवमध्यास्ते परमेश्वरः ॥ १३२
ब्रह्मविष्ण्वादिकान् सर्वान् सृष्ट्वादौ परमेश्वरः ।
चकार दीक्षां तेषां च वीरशै[3]वक्रमाच्छिवः ॥ १३३
लिङ्गाङ्गसामरस्येन कृतकृत्याश्च ते बभुः ।
तदा प्रभृति विष्ण्वाद्याः शिवस्य परमात्मनः ॥ १३४
आज्ञया शक्तिमन्तश्च लोकेषु ख्यातिमाप्नुयुः ।
यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः ॥ १३५
संहर्ता कालरुद्राख्यः शिवः साम्बः सनातनः ।

---

[1] पुनश्चेदमस्मिन्–पा. [2] अप्रज्ञानं–पा. [3] वागमा–पा.

घृतरीतिघनीभूतः सच्चिदानन्दलक्षणः ॥ १३६
अणोरणीयान् सर्वात्मा महीयान् महतः प्रभुः ।
कर्ता पाता च संहर्ता ब्रह्मा विष्णुर्हरः प्रभुः ॥ १३७
अविनाभूतचिच्छक्तिर्विस्फुलिङ्गाग्निवत्स्मृतः ।
नात्यन्तभेदभावो हि न चाभेदो न चोभयम् ॥ १३८
भेदाभेदौ किन्तु जीवब्रह्मणोर्मिश्रितौ पुरा ।
श्रुतिस्मृतिपुराणानि कामिकाद्यास्तथागमाः ॥ १३९
उपासनाभिगम्यं हि भेदाभेदस्वरूपकम् ।
शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ॥ १४०

[शास्त्रयोनित्वादिति सूत्रार्थविचारः]

एतज्जगत्कारणत्वे हेतुः शास्त्रं प्रधानतः ।
शास्त्रं योनिर्यस्य तस्य शास्त्रयोनित्वमिष्यते ॥ १४१
शास्त्राणामथवा योनिरिति तत्त्वविदां स्थितिः ।
ब्रह्मणः शास्त्रयोनित्वात्तत्रोपनिषदां गणः ॥ १४२
विषयत्वेन निर्णीतो विषयो ह्यधारणम् ।

[तत्तुसमन्वयादिति सूत्रार्थविचारः]

एतेषां ब्रह्मवाक्यानामन्वयो ब्रह्मणि स्मृतः ॥ १४३
समन्वयात्तु ब्रह्मैव धार्यं पूज्यं मुमुक्षुभिः ।
वैषम्यद्योतनार्थाय तुशब्दोऽयं प्रकाशितः ॥ १४४
तस्माद्विषयवाक्यानि बह्वर्थानि न संशयः ।
तत्रैकार्थमुदाहृत्य स्वस्वबुद्ध्यनुसारतः ॥ १४५
लोका मुह्यन्ति सततं विवदन्तः परस्परम् ।
पुनः संसारचक्रेऽस्मिन् भ्रमन्ति परिमोहिताः ॥ १४६
कण्वादिकृतशापाश्च परतन्त्रा जना भुवि ।
साधुमार्गं परित्यज्य मार्गान्तरमुपासते ॥ १४७
ते सर्वे तप्तनरके पतन्ति सततं ध्रुवम् ।

किमस्ति बहुनोक्तेन मानुषं जन्म दुर्लभम् ॥ १४८
तत्रापि दुर्लभं जन्म कुले शैवस्य कस्यचित् ।
वीरशैवान्वये जन्म परमं दुर्लभं स्मृतम् ॥ १४९
तत्र जाता नराः सर्वे वीरशैवा नरोत्तमाः ।
विष्ण्वादिदेवसङ्घानां रक्षकत्वात्सदाशिवः ॥ १५०
वीरः स तु समाख्यातस्ताल्लिङ्गं शिव उच्यते ।
वीरलिङ्गं समभ्यर्च्य तत्स्वरूपं प्रयान्ति ये ॥ १५१
ते वीरशैवा लोकानां नित्यं क्षेमाभिलाषिणः ।
त्रिपुण्ड्रावलिभिर्दीप्ता रुद्राक्षस्रगलङ्कृताः ॥ १५२
शिवलिङ्गार्चनपराः शिवभक्तप्रपूजकाः ।
पञ्चाक्षररता नित्यं गुर्वाराधनतत्पराः ॥ १५३
कीर्तनीयाश्च वन्द्याश्च दर्शनीयाः प्रयत्नतः ।
शिवलोकाच्च गलितास्ते शिवा नात्र संशयः ॥ १५४
लिङ्गाङ्गसामरस्येन जीवन्मुक्ताः समाहिताः ।
तस्मात्सर्वप्रयत्नेन लिङ्गं धार्यं मनीषिभिः ॥ १५५
शिवस्वरूपलाभाय पशुपाशनिवृत्तये ।
तल्लिङ्गधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ॥ १५६
विषपानेन नित्यत्वं कुरुते स्वात्मनो हि सः ।
यो लिङ्गधारणं मुक्त्वा पशुशास्त्ररतो भवेत् ॥ १५७
करस्थं पायसं त्यक्त्वा कूर्परं लेढि चात्मनः ।
अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यतः शिवात् ॥ १५८
तस्मात्तच्छास्त्रयोनित्वाद्भूयस्तत्तु समन्वयात् ।
वेदान्तप्रत्ययन्यायमंशांशित्वमधात्स्वयम् ॥ १५९
अंशो नानेति न्यायेन तदेव परिकीर्त्यते ।
शिवांशाद्ब्रह्मविष्ण्वाद्या अंशी देवः शिवः स्मृतः ॥ १६०
सर्वोपास्यो महादेवः सर्वे चोपासकाः स्मृताः ।

कथं तयोः प्रभेदो हि जीवात्मपरमात्मनोः ॥ १६१
सर्वज्ञत्वादयो धर्माः शिवस्य परमात्मनः ।
किञ्चिज्ज्ञत्वादयो धर्मा जीवानामिति निश्चितम् ॥ १६२
अभेदः कथमत्यन्तं भेदाभेदौ व्यवस्थितौ ।
ब्रह्मणः शास्त्रयोनित्वं कथं तन्न भवेन्निजम् ॥ १६३
आम्नायस्य क्रियार्थत्वादक्रियत्वाच्छिवस्य तत् ।
बृहिक्रियायाः कर्त्रादिप्रकाशनमतो न च ॥ १६४
इति चेत्तत्र वक्ष्यामः समन्वयनिरूपणम् ।
वेदान्तैरवगम्यन्ते सर्वज्ञत्वादयो गुणाः ॥ १६५
वेदान्तेषु च वाक्यानि समन्वयदृढानि हि ।
एतेन शास्त्रयोनित्वं ब्रह्मणो दृढमिष्यते ॥ १६६

[ईक्षतेर्नाशब्दमित्यादिसूत्रार्थविचारः]

ईक्षतेर्नाशब्दमिति ह्येतदारभ्य केवलम् ।
प्रथमाध्यायपर्यन्तं समन्वय इहोच्यते ॥ १६७
सदेवेत्यादिवाक्यानि श्रूयन्ते तत्र तत्र तु ।
तच्छब्देन च किं ब्रह्म प्रधानं वेति संशयः ॥ १६८
किं तावत्प्राप्तमधुना प्रधानमिति कश्चन ।
अचेतनस्य जगत उपादानमचेतनम् ॥ १६९
मृद्दृष्टान्तानुसाराच्च चेतनं न विलक्षणम् ।
तच्छब्देन परं ब्रह्म गृह्यते ह्यात्मशब्दवत् ॥ १७०
ईक्षतेर्ब्रह्मधर्मत्वान्न प्रधानस्य युज्यते ।
अशब्दं हि प्रधानं तन्नहि तद्वाचकः श्रुतः ॥ १७१
उक्तो मृदादिदृष्टा[1]न्तो विषमो नैव युक्तिमान् ।
तत्तेज ऐक्षतेत्यादौ तेज इत्यौपचारिकम् ॥ १७२
एवं गौणं प्रधानेऽपि चेक्षणं हि तदोच्यते ।

---

[1] न्तोपक्षयो, त्रिषयो—पा.

गौणश्चेन्नात्मशब्दादित्येतत्सूत्राङ्कढीकृतम् ॥ १७३
अप्तेजसोरीक्षणं हि गौणं युक्तं न चेतरत् ।
इह सच्छब्दवाच्यस्य चेक्षितुर्मुख्यमीक्षणम् ॥ १७४
आत्मशब्दपरामर्शात्स आत्मेत्यादिवाक्यतः ।
अप्तेजसोरपि तथा मुख्यमेवेक्षणं भवेत् ॥ १७५
तदीक्षणाभिधानं हि चेश्वरस्याभिमानिनः ।
यथा राज्ञो ह्यात्मशब्दो भृत्ये सर्वार्थकारिणि ॥ १७६
तथा प्रधाने सच्छब्दो युज्यते वीक्षणं च तत् ।
तन्निष्ठस्य च मोक्षोऽत्र ह्युपदेशाद्विधीयते ॥ १७७
तन्निष्ठा ब्रह्मनिष्ठा हि ते वै मोक्षाधिकारिणः ।
तस्मात्प्रधानमिति च यदुक्तं तन्मृषा भवेत् ॥ १७८
जगतः कारणं ब्रह्म चोपास्यं हि मुमुक्षुभिः ।
नायमात्मेति वाक्येन शिवस्य वरणं तनोः ॥ १७९
वरणं नाम तद्रूपधारणं विधिमार्गतः ।
लिङ्गाङ्गेत्यादिवाक्येन मोक्षमार्गैकतत्पराः ॥ १८०
अमृतस्येति वाक्येन धारणं प्रतिपादितम् ।
तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः ॥ १८१
त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृताः ।
लिङ्गाङ्गसामरस्येन ब्रह्मभावमुपाश्रिताः ॥ १८२
सारूप्यरूपिणीं मुक्तिं संप्राप्य परदुर्लभाम् ।
कृतकृत्या भवन्त्येव शिवानन्दभुजोऽनिशम् ॥ १८३
अथोमित्यादिवाक्येन निश्चितं लिङ्गधारणम् ।
तन्मोक्षसाधनं पुण्यं तद्धार्यं हृदयाम्बुजे ॥ १८४
ततः सच्छब्दवाच्यं हि ब्रह्मैव तु न संशयः ।
तच्चिच्छक्त्यविनाभूतं जलशैत्यमिवोदितम् ॥ १८५
मायाप्रधानमित्येतद्युक्तियुक्तं न चाभवत् ।

अजामन्त्रेण चिच्छक्तियुक्तस्य परमात्मनः ॥ १८६
लीलया जगदुत्पत्तिस्तिरोधानं पुनः प्रभोः ।
कठकैवल्यमाण्डूक्यप्रश्नाद्युपनिषत्सु च ॥ १८७
वेदान्तसारप्रणववज्रसूच्यादिकासु च ।
प्रकाशितार्थाः सर्वे च विस्मृताः कैश्चिदप्यहो ॥ १८८
अतदर्था निश्चिताश्च मोहादन्यायतत्परैः ।
अनेन किं बहूक्तेन सूत्रार्थो ह्ययमेव हि ॥ १८९
अत्रायमवधेयोऽर्थः सूत्रस्वरसतस्ततः ।
ब्रह्म जिज्ञासितं लिङ्गं शिवतत्त्वं श्रुतीरितम् ॥ १९०
समनन्तरसूत्राणां त्रयाणां सौत्रशब्दतः ।
तात्पर्यं वीरशैवोक्तपदार्थेष्वेव दृश्यते ॥ १९१
तथाहि जन्म लोकानां स्थेमसंहारकर्मणी ।
यतो हि ब्रह्मणस्तस्य ब्रह्मत्वमिति लक्षणम् ॥ १९२
यतो वेत्यादिविषयवाक्येन तदलङ्कृतम् ।
तत्र तावदियान् भेदः सूत्रीयपदभञ्जने ॥ १९३
जन्माद्यस्य यतश्चेति पदद्वयमिदं ततः ।
पिण्डादिज्ञानशून्यान्तस्थलस्यैकशतस्य तु ॥ १९४
यतः सकाशादित्येतद्ब्रह्मलक्षणमुच्यते ।
सृष्टिवाक्यविरोधोऽपि पूर्वमेव निराकृतः ॥ १९५
यतश्च स्थलशब्देन प्रोच्येते स्थितिसंहृती ।
स्थीयन्ते सर्वतत्त्वानि लीयन्ते यत्र तत्स्थलम् ॥ १९६
स्थितिसंहारसापेक्षं जन्म चेति त्रयं स्थलम् ।
यतो वेत्यादिविषयवाक्यार्थानुगुणेन हि ॥ १९७
विस्तार्य स्थलशब्देन कामिकादौ विचार्यते ।
अथवाकारवाच्यस्य विष्णोर्जन्म यतः शिवात् ॥ १९८
अथर्वशिखया चोपनिषदा यः समर्थितः ।

शास्त्रशासनकर्तृत्वाद्योनित्वात्तु ततः परम् ॥ १९९
अकारवाच्यो विष्णुस्तद्योनित्वं कारणात्मकम् ।
लिङ्गं नियामकं तत्त्वं सूत्रतात्पर्यतः श्रुतम् ॥ २००
शास्त्रं योनिर्यस्य तस्य शास्त्रयोनित्वमेव वा ।
शास्त्राणां योनिरित्येवमस्माकं तत्समञ्जसम् ॥ २०१
सर्वार्थसाधनोपायाः सन्ति सर्वागमेषु च ।
तथापि विवशा मर्त्या यच्च किञ्चिद्वदन्ति हि ॥ २०२
एषा रीतिः सर्वसूत्रसम्मता च व्यवस्थिता ।
अन्याश्च रीतयः सर्वा न सूत्रानुगुणाः कृताः ॥ २०३
ब्रह्मण्यध्यास इति यज्जगतामिष्यते परैः ।
असूत्रितं तु तत्सर्वमज्ञानपरिकल्पितम् ॥ २०४
मूढा मुह्यन्ति सततं यं विना मार्गमुत्तमम् ।
ननु तर्ह्युच्यते ब्रह्म वेदेत्यादिविधानतः ॥ २०५
एकं ब्र[1]ह्म च ब्रह्मैव स्याविद्येत्यादिवाक्यतः ।
अभेद एव कथितो भेदाभेदः कथं भवेत् ॥ २०६
इति चेन्न ब्रह्म वेद ब्रह्मैव भवतीति यत् ।
उपासनाङ्गं तदिति निर्णीतं श्रुतिसूत्रयोः ॥ २०७
तन्निष्ठस्यैव मोक्षोऽत्र ह्युपदेशाद्ध्रुवं परम् ।
ब्रह्मैव सच्छब्दवाच्यं तस्मादन्यन्न चाभवत् ॥ २०८
हेयत्वावचनाच्चैव स्वाप्ययादपि नेतरत् ।
[2] अप्ययो गतिसामान्यं ब्रह्मण्येवेति निश्चितम् ॥ २०९
श्रुतत्वाच्च प्रधानादेर्न हेयत्वं कदाचन ।

[आनन्दमयोऽभ्यासादित्यादिसूत्रार्थविचारः]

आनन्दमयशब्दः किमभ्यासात्तैत्तिरीयके ॥ २१०
आत्मानमथ जीवं वा गृह्णातीत्यत्र संशयः ।

---

[1] ब्रह्म विद्ब्रह्मैव–पा. [2] आप्ययो–पा.

प्रियाद्यवयवादीनां योगाज्जीवो न [1] चेश्वरः ॥ २११
इति चेद्भृगुवल्ल्यां च परमात्मैव निश्चितः ।
आनन्दमयो ब्रह्मैव ह्यभ्यासात्पक्षरूपकम् ॥ २१२
प्रियाद्यङ्गत्वयोगो हि वास्तवो न विवक्षितः ।
आनन्दवल्ल्यां तद्योगो बुद्धिदार्ढ्याय कल्पितः ॥ २१३
विकारार्थे मयट् स्वार्थे प्राचुर्यार्थेऽथवा पुनः ।
नायं मयड्विकारार्थे पूर्वोत्तरविरोधतः ॥ २१४
तूष्णीं प्राणादिशब्देन ह्युपक्रम इहोदितः ।
उपसंहारवाक्येषु मयडन्तः प्रकीर्तितः ॥ २१५
तस्मात्स्वार्थे मयट् प्रायो भृगुवल्ल्यां च निश्चितः ।
विकारशब्दान्नेति चेन्न प्राचुर्याद्ब्रह्म केवलम् ॥ २१६
अन्नप्राणादिशब्दैश्च प्राचुर्याद्वा न चेतरः ।
तस्मान्मात्सर्यमुत्सार्य विचार्य लिङ्गधारणम् ॥ २१७
इतश्च न विकारार्थे स्वार्थ एवेति निश्चितम् ।
सत्यज्ञानादिमन्त्रैश्च सूत्रब्राह्मणवाक्यतः ॥ २१८
मन्त्रब्राह्मणयोरैक्यादन्यस्यानुपदेशतः ।
ब्रह्मैवानन्दशब्दस्य वाच्यं नान्यदिति ध्रुवम् ॥ २१९
मान्त्रवर्णिकमेवात्र गीयते तैत्तिरीयके ।
तद्धेतुव्यपदेशाच्च मान्त्रवर्णिकगानतः ॥ २२०
तदेवानन्दयातीति तद्धेतोस्तत्कथं भवेत् ।
इतश्च परमेवात्र ब्रह्मानन्दमयः श्रुतः ॥ २२१
अन्योऽन्तरात्मानन्दमय इति वाक्येन केवलम् ।
अन्यस्य चान्तरस्यात्र नोपदेशात्परं श्रुतम् ॥ २२२
प्राप्यस्यान्यस्याश्रवणाच्छ्रुतहानिः श्रुतौ भवेत् ।

[1] संशयः--पा.

नेतरोऽनुपपत्तेश्च श्लोकत्वप्रतिपादनात् ॥ २२३
परं ब्रह्मानन्दमयो जीवो नेति व्यवस्थितः ।
तद्भेदव्यपदेशाच्च ब्रह्मानन्दमयः परम् ॥ २२४
तस्माद्वा इति वाक्येन विज्ञानाद्भिन्न ईश्वरः ।
अन्योऽन्तरादिवाक्येन ह्यानन्दमय इष्यते ॥ २२५
कामाच्च नानुमानं च प्रधानं भवतीति यत् ।
तदपेक्षा नास्ति वाक्ये कामनाश्रवणाज्जडे ॥ २२६
अस्मिन्नस्य च तद्योगं शास्त्यानन्दमयः परः ।
न संसारी प्रधानं वा कुतोऽस्मिन् योगशासनात् ॥ २२७
यदा ह्येवैष एतस्मिन्निति वाक्येन निश्चितम् ।
अभयं परमो मोक्षस्तज्ज्ञाने [1] सावधानता ॥ २२८
परं ब्रह्मानन्दमयः प्राप्यं धार्यं हृदम्बुजे ।

[अन्तस्तद्धर्मोपदेशादित्यादिसूत्रार्थविचारः]

अन्तस्तद्धर्मोपदेशादितः पूर्वं विचारितम् ॥ २२९
जीवानामिति तत्सर्वं निश्चितं ब्रह्मधारणम् ।
इतः परं तु देवानां विचार्यं ब्रह्म धारणम् ॥ २३०
आदित्यमण्डले तिष्ठन् जगदीशः प्रचोदयात् ।
तथाक्षिण्यपि देवेश उपास्यो नेतरो भवेत् ॥ २३१
भेदव्यपदेशाच्चान्यः परमात्मेति निश्चितम् ।
य आदित्येति वाक्येनाप्युपास्यः परमेश्वरः ॥ २३२

[आकाशस्तल्लिङ्गादित्यादिसूत्रार्थविचारः]

तथाकाशस्य लिङ्गाच्च ह्याकाशो ब्रह्म केवलम् ।
तथात एव प्राणश्च ब्रह्मैव भवति श्रुतम् ॥ २३३

[ज्योतिश्चरणाभिधानादित्यादिसूत्रर्थविचारः]

ज्योतिश्चरणाभिधानाज्ज्योतिर्ब्रह्म न भौतिकम् ।

---

[1] साधनात्तथा — प।

छन्दोभिधानान्नेति चेत्यादिसूत्रेण शाश्वतम् ॥ २३४
गायत्र्याख्यं परं ब्रह्म धार्यं ध्येयं हृदम्बुजे ।
तथा चेतोर्पणगदाच्छ्रुतिर्दर्शयतीति हि ॥ २३५
चेतोऽर्पणं धारणं च हृदयाम्भोजमध्यमे ।
बहुषु श्रुतिजालेषु सम्यगेवोपपादितम् ॥ २३६
स्थानानामुत्तमं स्थानं हृदब्जमिति निश्चितम् ।
एवं भूतादिपादेति सूत्रेण प्रतिपादितम् ॥ २३७
उपदेशेति सूत्रेण ज्योतिश्शब्दो निरूपितः ।

[प्राणस्तथानुगमादित्यादिसूत्रार्थविचारः]

प्राणस्तथानुगमाद्धि नानालिङ्गाच्च संशयः ॥ २३८
परं ब्रह्म प्राणशब्दान्मुख्यप्राणो न चाभवत् ।
वक्तुरात्मोपदेशाद्धि प्राणशब्दो न च स्मृतः ॥ २३९
अध्यायेऽस्मिन्नीश्वरस्य बाहुल्यात्परमेश्वरः ।
अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति दृढीकृतम् ॥ २४०
शास्त्रदृष्ट्या तूपदेशो वामदेववदास्ति च ।
स्वात्मनो भेददृष्ट्या तु सोपदेशो निरूपितः ॥ २४१
जीवमुख्यप्राणलिङ्गान्नेति चेदिति सूत्रतः ।
उपक्रान्तार्थजालं हि सुदृढं प्रतिपादितम् ॥ २४२
उपसंहारैकरूप्यं शास्त्रदृष्ट्या न संशयः ।
जीवमुख्यप्राणलिङ्गान्नेति चेद्धारणं तदा ॥ २४३
इहाश्रितत्वात्तद्योगात्त्रिविधोपासनाबलात् ।
हृदब्जे वा द्वादशान्ते भ्रूमध्ये वाथवा शिरे ॥ २४४
ध्यायेन्मुक्त्यै सदा देवं त्रिविधोपासनं स्मृतम् ।
अहंसंज्ञाविनिर्दिष्टं हृदब्जमतिदुर्लभम् ॥ २४५
[1]तस्माद्धृदम्बुजे धार्यं ब्रह्मलिङ्गं परात्परम् ।

---

[1] तस्माद्धृदब्जे धार्यं च—पा.

प्राणादप्यधिकं लिङ्गं यस्माच्छ्रेयः परं भवेत् ॥ २४६
तत्प्राणलिङ्गं मोक्षार्थी विदध्याद्धृदयाम्बुजे ।

इति प्रथमाध्याये प्रथमपादः

---

प्रथमाध्याये द्वितीयपादः ।

[सर्वत्र प्रसिद्धोपदेशादित्यादिसूत्रार्थविचारः]

अस्मिन् पादे शिवस्यैव परस्यामिततेजसः ॥ २४७
सदा सर्वैरुपास्यत्वं प्रधानादेर्न युज्यते ।
अत एव ऋषीणां च वाक्यानि प्रसरन्ति हि ॥ २४८
किं कारणं ब्रह्मवाक्ये ह्युपास्यत्वं सुनिश्चितम् ।
किं कारणं कुतो जाता जीवामः केन वा वयम् ॥ २४९
क्व चास्माकं सम्प्रतिष्ठा वर्धिताः केन वा वयम् ।
केन वर्तामहे शश्वत्सुखेष्वन्येषु वानिशम् ॥ २५०
अविलङ्घ्या च विश्वस्य व्यवस्था केन वा कृता ।
कालस्वभावो नियतिर्यदृच्छा वात्र विद्यते ॥ २५१
भूतानि योनिः पुरुषो योगो वैषां पुरोऽथवा ।
अचेतनत्वात्कालादेश्चेतनत्वेन चात्मनः ॥ २५२
सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते ।
ते ध्यानयोगानुगताः प्रापश्यञ्छक्तिमैश्वरीम् ॥ २५३
पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ।
तया विच्छिन्नपाशास्ते सर्वकारणकारणम् ॥ २५४
शक्तिमन्तं महादेवमपश्यन् दिव्यचक्षुषा ।
यः कारणान्यशेषाणि कालात्मसहितान्यपि ॥ २५५
अप्रमेयोऽनया शक्त्या [1] साकमेकोऽधितिष्ठति ।

---

[1] नाकाये को. पा.

निर्द्वन्द्वं निर्विकल्पं च तारकाकारमीश्वरम् ॥ २५६
हृदयाकाशसंशोभि लिङ्गमत्यन्तसुन्दरम् ।
प्राधान्येनोपासनं च ह्यस्मिन्नेव विचार्यते ॥ २५७
यद्ब्रह्म गीयते वेदैस्तद्ब्रह्म परिकीर्त्यते ।
ब्रह्मोपासनमित्येव वदन्ति विबुधा अपि ॥ २५८
लिङ्गोपासनमित्येवं वक्तुं त्रुटयद्गला जनाः ।
ब्रह्माद्याः सर्वगीर्वाणा ऋषयश्च तपस्विनः ॥ २५९
शिवलिङ्गं मुदा दृष्ट्वा हृदयाब्जखमध्यमे ।
वेदान्तेषु च सर्वत्र शिवलिङ्गं निगद्यते ॥ २६०
कैश्चित्स्वात्मानन्द इति प्रोच्यते लिङ्गवैभवम् ।
तथापि मानवा मूर्खा मुधाऽन्यत्प्रत्यवीवदन् ॥ २६१
प्रत्यक्षमोक्षलाभो हि सर्वेषां दुर्लभः स्मृतः ।
वेदान्तेषु च सर्वत्र प्रसिद्धो ह्युपदेशतः ॥ २६२
तज्ञत्वादिगुणोपेतः स्यादुपास्यः परात्परः ।
अप्राणो ह्यमना वाक्यात्सम्बद्धो मनआदिभिः ॥ २६३
सर्वं खल्विति वाक्येन जीव एव परो न च ।
लक्ष्ये बुद्धेः स्थितिः साक्षादुपासनमिहोच्यते ॥ २६४
जीवमुख्येति सूत्रेण यत्पुरा प्रतिपादितम् ।
तद्ब्रह्मैव जगत्कर्तृ [1] मुमुक्षूपास्यमादरात् ॥ २६५
तज्ञत्वादपि तल्लत्वात्सर्वं ब्रह्मेत्युपासनम् ।
प्राणाः शरीरमस्येति सन्निधानार्थवाचिना ॥ २६६
इदंशब्देनेश्वरस्य परामर्शात्परो ध्रुवम् ।
व्यत्यासान्नीयमानोऽपि सर्वैरङ्गीकृतः श्रुतौ ॥ २६७
अर्थतोऽप्यसमर्थानामानन्तर्येऽप्यनादरः ।

---

[1] मुमुक्षुः पश्यमाघटेत्—पा.

इदं पूर्वमिदं पश्चात्पदं वाक्ये भवेदिति ॥ २६८
नियमो नैव वेदेऽस्ति पदसाङ्गत्यमर्थतः ।
विवक्षितगुणादीनामुपपत्त्या च केवलम् ॥ २६९
ब्रह्मोपास्यं परं नान्यदिति सम्यक् सुनिश्चितम् ।
इतश्चानुपपत्तेस्तु न शारीरः कदाचन ॥ २७०
सत्यकामः सत्य इति गुणानां च शिवः परः ।
कर्तृत्वेन च जीवस्य कर्मत्वेन परस्य च ॥ २७१
[1]उपदेशादेकमितः [2]प्रेत्येत्यस्मिन्नुपासनम् ।
शरीरपरयोर्भेदः स्मृतेरप्यवगम्यते ॥ २७२
मनोमयत्वादिधर्मविशिष्टस्यैव केवलम् ।
इतः शब्दविशेषाच्च तयोर्भेदोऽवगम्यते ॥ २७३
उपास्यं तत्परं ब्रह्म न जीव इति निश्चितम् ।
परस्य यदुपास्यत्वमुक्तं [3]तन्नोपपद्यते ॥ २७४
अर्भकौकस्त्वादिधर्मव्यपदेशान्न चेश्वरः ।
इति चेन्न निचाय्यत्वादेवं सर्वगतः शिवः ॥ २७५
अणीयस्त्वं हृदाकाशापेक्षया ह्युपपद्यते ।
यथा सर्वगताकाशः सूचीपाशाद्यपेक्षया ॥ २७६
पर एव तथोपास्यो हृदयाकाशमध्यमे ।
सम्भोगप्राप्तिरिति चेन्न वैशेष्याद्धृदम्बुजे ॥ २७७
तस्यापहतपाप्मत्वात्सुखदुःखादयो न हि ।

[अत्ता चराचरग्रहणादित्यादिसूत्रार्थविचारः]

चराचरस्य ग्रहणादत्ता पर इहोच्यते ॥ २७८
तस्मात्प्रकरणाच्चापि सङ्ग्राह्यः पर एव सः ।

---

[1] उपदेशादेशमितः—पा. [2] प्रत्येत्यस्मिन्नुपासनम्—पा. [3] नार्थ्योपपद्यते—पा.

[गुहां प्रविष्टावित्यादिसूत्रार्थविचारः]

गुहां प्रविष्टावात्मानौ बुद्धिजीवौ हि यद्यपि ॥ २७९
जीवात्मपरमात्मानौ निश्चितौ श्रुतिसूत्रयोः ।
विशेषणाच्च तौ ग्राह्यावृतमित्यादिवाक्यतः ॥ २८०

[अन्तर उपपत्तेरित्यादिसूत्रार्थविचारः]

तथान्तरोपपत्तेश्च छायात्मा नैव गृह्यते ।
परमेश्वर एवाक्षिण्यन्तरः पुरुषः स्मृतः ॥ २८१
य एषोऽक्षीति वाक्येन संशयाद्वाम इत्यतः ।
अमृतत्वादयो धर्मा न जीवस्येति निश्चिताः ॥ २८२
स्थानादिव्यपदेशाच्च प्रसिद्धिः स्थानतो विदुः ।
[1] सुखविशिष्टाभिधानादत्रोपास्यः परः शिवः ॥ २८३
प्राणो ब्रह्म कमित्यत्र कं खं शब्दौ पराश्रयौ ।
यच्छ्रुतोपनिषत्केति सूत्रेण परमेश्वरम् ॥ २८४
संश्रुताश्चोपनिषदो ब्रह्मविद्या च येन सः ।
निषीदन्त्युपशीर्यन्ते संसारग्रन्थयस्तथा ॥ २८५
तत्तद्धत्यभिधानाच्च ग्रन्थोऽप्युपनिषत्स्मृता ।
या गतिर्देवयानाख्या प्रसिद्धा सा हृदम्बुजे ॥ २८६
अथोत्तरेण तपसा ब्रह्मचर्येण वाक्यतः ।
तया प्रसिद्धया ब्रह्मनिर्देशो निश्चितः श्रुतौ ॥ २८७
अक्षिस्थः पुरुषो जीव इति तन्नोपपद्यते ।
तत्रानवस्थितो ब्रह्म सम्भवान्नेतरो विभोः ॥ २८८
चक्षुष्यन्तरः पुरुषो ब्रह्मैवेति व्यवस्थितः ।

[अन्तर्याम्यधिदैवादिष्वित्यादिसूत्रार्थविचारः]

अन्तर्याम्यधिदैवादौ तद्धर्मव्यपदेशतः ॥ २८९
नियन्तृत्वादयो धर्माः सम्भवन्ति परस्य हि ।

---

[1] सुखं विशिष्टा—पा.

अन्तर्यामी परस्तस्मात्सर्वशक्तित्वसम्भवात् ॥ २९०
प्रधानमन्तर्यामीति यदुक्तं तन्न गृह्यते ।
न च स्मार्तं प्रधानं हि तत्तद्धर्माभिधानतः ॥ २९१
[1]अदृष्ट[श्य]त्वादयो धर्माः प्रधाने सम्भवन्त्यपि ।
द्रष्टृत्वाद्या न प्रधानेऽचेतने सम्भवन्ति च ॥ २९२
उभयेऽपि हि भेदेन परमेनमधीयते ।
न[2]शारीरोऽन्तर्यामीति काण्वा माध्यन्दिना विदुः ॥ २९३

[अदृश्यत्वादिगुणक इत्यादिसूत्रार्थविचारः]

अदृश्यत्वादिगुणको धर्मोक्तेः पर एव सः ।
न जीवो वा प्रधानं वा तद्धर्माणामभावतः ॥ २९४
परमेश्वरलिङ्गस्य सर्वज्ञत्वस्य शासनात् ।
दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥ २९५
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ।
[3]तद्विशेषणभेदाभ्यां व्यपदेशाच्च नेतरौ ॥ २९६
तथा रूपोपन्यासाच्चादृश्यत्वादिगुणः परः ।

[वैश्वानर इत्यादिसूत्रार्थविचारः]

वैश्वानरः परं ब्रह्म तत्साधारणशब्दतः ॥ २९७
विशेषाच्च परं ब्रह्म जाठराग्न्यादिकं न हि ।
स्मर्यमाणं चानुमानं स्यादितः परमेश्वरः ॥ २९८
वैश्वानरश्च न परः शब्दादिभ्यस्तु जाठरः ।
तथा ह्यन्तः प्रतिष्ठानादिति चेन्न तथा परः ॥ २९९
तत्र दृष्ट्युपदेशाच्च सम्भवात्पुरुषः परः ।
अधीयते स एषोऽग्निरिति वाजसनेयिनः ॥ ३००
उक्तेभ्य एव हेतुभ्यो न भूताग्निर्न देवता ।

---

[1] अद्रष्टृत्वादयो–पा. [2] शरीरान्तर्यामी–पा. [3] तद्विशेषेणभेदाभ्यां–पा.

वैश्वानरोऽत एवात्र पर एवेति निश्चितः ॥ ३०१
साक्षादप्याविरोधं च जैमिनिर्मन्यते परे ।
अभिव्यक्तेराश्मरथ्य इति प्राह परं शिवम् ॥ ३०२
अनुस्मृतेर्बादरिश्च सम्पत्तेरिति जैमिनिः ।
तथा हि दर्शयत्येनं परं वैश्वानरं शिवम् ॥ ३०३
आमनन्ति तथाचार्या एवमस्मिन् पुरातनम् ।
जाठराग्निविशिष्टं च वैश्वानरमुमापतिम् ॥ ३०४
सर्ववेदान्तवाक्येषु प्रायेणोपासनं परम् ।
ब्रह्मोपासनमित्येव निश्चितं श्रुतिसूत्रयोः ॥ ३०५
शिवलिङ्गादृते ब्रह्म शब्दवाच्यं न हि श्रुतम् ।

इति प्रथमाध्याये द्वितीयःपादः

---

प्रथमाध्याये तृतीयःपादः

[द्युभ्वाद्यायतनमित्यादिसूत्रार्थविचारः]

द्युभ्वाद्यायतनं ब्रह्म प्रधानं वेति संशयः ॥ ३०६
किं तावत् प्राप्तमधुना प्रधानमिति कश्चन ।
सेतुश्रुतेः पारवत्त्वादपारं ब्रह्म नाभवत् ॥ ३०७
स्वशब्दाद्धि परं ब्रह्म न प्रधानादिकं भवेत् ।
तस्य मुक्तोपसृप्यत्वं द्युभ्वाद्यायतनस्य हि ॥ ३०८
तत् प्रधानस्य केनापि तद्धर्मो नैत्र निश्चितः ।
नानुमानमतच्छब्दाद्द्युभ्वाद्यायतनं परः ॥ ३०९
तथा प्रकरणाच्चापि द्युभ्वाद्यायतनं परः ।
तद्भेदव्यपदेशाच्च द्युभ्वाद्यायतनं परः ॥ ३१०
तथा स्थित्यदनाभ्यां च द्युभ्वाद्यायतनं परः ।

[भूमेत्यादिसूत्रार्थविचारः]

तद्भूमा सम्प्रसादादध्युपदेशात् परो ध्रुवम् ॥ ३११

भूमा धर्मोपपत्तेश्च सर्वज्ञत्वादिकः परः ।

[अक्षरमित्यादिसूत्रार्थविचारः]

अम्बरान्तधृतेर्ब्रह्म ह्यक्षरात्परिगीयते ॥ ३१२

तस्याः प्रशासनाभावात्सा चाम्बरधृतिर्न च ।

तदन्यभावव्यावृत्तेरक्षरं ब्रह्म केवलम् ॥ ३१३

हृदम्बुजे परो ध्येयो जन्मकर्मनिवृत्तये ।

यत्तारकं परं ब्रह्म दहराकाशमध्यगम् ॥ ३१४

तल्लिङ्गं बहिरन्विष्य लिङ्गमूर्तौ निवेश्य च ।

तद्धि स्वाङ्गाविनाभूतमुपास्यं साधुमानवैः ॥ ३१५

इदमेव हि वेदान्ते सर्वत्र प्रतिपादितम् ।

ओं तद्ब्रह्मेत्यादिवाक्यैर्निश्चितं ब्रह्मधारणम् ॥ ३१६

[ईक्षतिकर्मव्यपदेशात्स इति सूत्रार्थविचारः]

तादिष्यते [तदीक्षतेर्ब्र] ब्रह्मणोऽत्र व्यपदेशात्परः शिवः ।

नेतरस्य हृदाकाशे समुपास्यत्वमिष्यते ॥ ३१७

सर्वसूत्रेषु तद्ब्रह्म श्रुतिस्वारस्ययोगतः ।

दहरकमलमध्ये ब्रह्म धार्यं यदुक्तं

सकलकलिनिवृत्त्यै पाशविच्छित्तये च ।

विधिहरिमुखदेवाः सर्वदा तत्त्वरूपाः

पतिभजनसुतृप्ताः पारमुत्तीर्य मुक्ताः ॥ ३१८

हृदम्बुजे तिष्ठति यस्य लिङ्गं

विचार्यमस्यास्ति न शास्त्रमन्यत् ।

लिङ्गाङ्गयोरैक्यमवाप्य शुद्धं

साक्षाच्छिवोऽसौ सकलैश्च वन्द्यः ॥ ३१९

अलं शङ्करभक्तानामन्यशास्त्रावलोकनैः ।
अगन्तव्याग्रहारस्य पदवीश्रवणेन किम् ॥ ३२०
अक्षरं प्रणवं ब्रह्म हृदयाब्जे विचार्यते ।
किं ध्येयं किं सदा पूज्यं प्रधानं जीव एव वा ॥ ३२१
इति सन्दिह्य सर्वत्र सिद्धान्ते ब्रह्म केवलम् ।
उपास्यमिति निर्णीतं पुनः सन्दिह्यतेऽथ यत् ॥ ३२२
बुद्धिदार्ढ्याय तत्सर्वमन्वेष्टव्यं मनीषिभिः ।

[दहर उत्तरेभ्य इत्यादिसूत्रार्थविचारः]

दहर उत्तरेभ्यश्चेत्युपास्यः परमेश्वरः ॥ ३२३
तथा हि गतिशब्दाभ्यां लिङ्गं दृष्टं च यत्परे ।
ततोऽपि हृत्पुण्डरीके समुपास्यः परः शिवः ॥ ३२४
उत्तरेभ्यश्च हेतुभ्यो यद्धृतिः प्रतिपाद्यते ।
सन्ध्यावन्दनवन्नित्यं निश्चितो वेदशास्त्रयोः ॥ ३२५
धारणं दहराकाशे यावज्जीवं सुनिश्चितम् ।
उपलब्धेर्महिम्नोऽस्य धृतेरस्मिंस्तदिष्यते ॥ ३२६
प्रसिद्धेश्च हृदाकाशे ब्रह्म धार्यं परात्परम् ।
इतरस्य परामर्शात्स एष इति चेन्न हि ॥ ३२७
असम्भवात्परं ब्रह्म धार्यं ध्येयं हृदम्बुजे ।
आविर्भूतस्वरूपस्तु सोत्तराच्चेत्तथा हृदि ॥ ३२८
अन्यार्थश्च परामर्शः स एव हृदयाम्बुजे ।
अल्पश्रुतेरिति यदि तदुक्तं श्रुतिसूत्रयोः ॥ ३२९

[अनुकृतेस्तस्य चेत्यादिसूत्रार्थविचारः]

अनुकृतेस्तस्य चात्राप्यपि च स्मर्यते श्रुतौ ।
श्रुतिसूत्रन्यायभङ्ग्या निश्चितं लिङ्गधारणम् ॥ ३३०
धृतेर्वाचनिको योऽर्थः सूत्रेषु प्रतिपादितः ।
वाच्यालिङ्गं हृदाकाशे नित्यं तद्धारणं हि यत् ॥ ३३१

एभिः सूत्रैः सदा ब्रह्म धर्तव्यं हृदयाम्बुजे ।
तदेव हि परं स्थानं निर्णीतं श्रुतिसूत्रयोः ॥ ३३२

[शब्दादेव प्रमित इत्यादिसूत्रार्थविचारः]

तच्छब्दात्प्रमितं ब्रह्म दहरे दिव्यमद्भुतम् ।
पूज्यं ध्येयं धार्यमेव जन्मकर्मनिवृत्तये ॥ ३३३
यन्मनुष्याधिकारत्वाच्छास्त्रस्य हृदपेक्षया ।
[1]तत्तु ध्येयं सदा लिङ्गं ब्रह्मविष्ण्वादिपूजितम् ॥ ३३४
यथा मनुष्यैर्धर्तव्यं लिङ्गं देवैस्तथैव हि ।

[तदुपर्यपीत्यादिसूत्रार्थविचारः]

अधिकारं देवतानां मनुते बादरायणः ॥ ३३५
तदुपर्यपि देवानां विष्ण्वादीनां च सम्भवात् ।
तेषां विग्रहवत्त्वाच्चाप्यधिकारोऽत्र निश्चितः ॥ ३३६
नानेकप्रतिपत्तेर्हि विरोधः कर्मणीति चेत् ।
दर्शनाद्देवतानां च ह्यधिकारः सुनिश्चितः ॥ ३३७
विरोधो दुष्परिहरः शब्दस्य प्रचुरस्य च ।
इति चेन्नातः प्रभवाच्छ्रुत्या स्मृत्या च नैव तत् ॥ ३३८
अत एव च नित्यत्वं वेदतद्धर्मयोर्ध्रुवम् ।
समाननामरूपत्वादुत्तरा सृष्टिरेव च ॥ ३३९
आवृत्तावीश्वराणामप्यविरोधोऽत्र निश्चितः ।
दर्शनाच्च स्मृतेश्चैव ह्यविरोधोऽत्र निश्चितः ॥ ३४०
एतत्सूत्रेषु देवानां मनुष्याणां च निश्चितः ।
इतः परं [2] तु शूद्राणामधिकारोऽस्ति वा न वा ॥ ३४१
इति सन्दिह्यते तेषां जैमिनिर्मन्यते मुनिः ।
असम्भवान्नाधिकारो मध्वादिषु तथा भवेत् ॥ ३४२

---

1 तत्तु ध्येयं हृदि सदा लिङ्गं विष्ण्वादिपूजितम् । पा. 2 स्त्रीशूद्राणा—पा.

तत्र ज्योतिषि भावाच्च देवानां नाधिकारिता ।
अचेतनं मण्डलं हि चेतने ननु निश्चितम् ॥ ३४३
बादरायण आचार्यो मन्यते देवतादिषु ।
अधिकारं तथैवेति शूद्रादीनां न चाभवत् ॥ ३४४
संस्कारैः संस्कृता ये च ते सर्वेऽप्यधिकारिणः ।

[शुगस्येत्यादिसूत्रार्थविचारः]

तदनादरपाठाच्च सूच्यते तेष्वनादरः ॥ ३४५
क्षत्रियत्वगतेश्चापि लिङ्गाच्चैत्ररथेन हि ।
उत्तरत्र न तेषां तु संस्कारैर्वर्जनं यथा ॥ ३४६
क्षत्रियाणां च शूद्राणां त्रैवर्णिकनिरूपणम् ।
तदभावाभिलापाच्च संस्कारस्याभिमर्शनात् ॥ ३४७
प्रवृत्तेस्तदभावस्य धारणे च तथेति चेत् ।
श्रवणाध्ययनार्थस्य प्रतिषेधात्स्मृतेरपि ॥ ३४८
शूद्रादीनां नाधिकार इति सम्यक् सुनिश्चितः ।

[कम्पनात्, ज्योतिर्दर्शनादितिसूत्रार्थविवरणम्]

कम्पनाच्च परं ब्रह्म ज्योतिर्ब्रह्मैव दर्शनात् ॥ ३४९

[आकाशोऽर्थान्तरत्वेत्यादिसूत्रार्थविवरणम्]

आकाशोऽर्थान्तरत्वादिव्यपदेशात्परः स्मृतः ।

[सुषुप्तीत्यादिसूत्रार्थविवरणम्]

सुषुप्त्युत्क्रान्त्योर्भेदेन पर एवाभिधीयते ॥ ३५०
ततः पत्यादिशब्देभ्यो ब्रह्म लिङ्गं सनातनम् ।
हृदम्बुजे सदा धार्यं सदा पूज्यं मुमुक्षुभिः ॥ ३५१
शुद्धस्फटिकसङ्काशं देवं निष्कलमव्ययम् ।
कारणं सर्वलोकानां सर्वलोकमयं परम् ॥ ३५२

अन्तर्बहिः स्थितं लिङ्गमणोरल्पं महत्परम् ।
भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् ॥ ३५३
ब्रह्मेन्द्ररुद्रविष्ण्वाद्यैरपि देवैरगोचरम् ।
वेदसारं च विद्वद्भिरगोचरमिति श्रुतम् ॥ ३५४
आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ।
शिवतत्त्वमिति ख्यातं शिवार्थं जगति स्थितम् ॥ ३५५
अव्यक्तं लिङ्गमाख्यातं सर्वतत्त्वैककारणम् ।
अनाद्यनन्तं विश्वस्य यदुपादानकारणम् ॥ ३५६
तदेव मूलप्रकृतिर्धार्मिकी गगनात्मिका ।
तत एव समुत्पन्नं जगदेतच्चराचरम् ॥ ३५७
अशुद्धं शुद्धवच्छुद्धं शुद्धाशुद्धं च यत्त्रिधा ।
ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥ ३५८
भूतानि चेन्द्रियैर्जाता लीयन्तेऽत्र शिवाज्ञया ।
अत एव शिवो लिङ्गी लिङ्गमाज्ञापयेद्यतः ॥ ३५९
यत्र तेन तदाज्ञातं कार्याय प्रभवेत्स्वतः ।
ततो जातस्य विश्वस्य तत्रैव विलयो मतः ॥ ३६०
अनेन लिङ्गता तस्य भवेन्नान्येन केनचित् ।
लिङ्गं च शिवयोर्देहं ताभ्यां यस्मादधिष्ठितम् ॥ ३६१
अतस्तत्र शिवः साम्बो नित्यमेव समर्च्यते ।
लिङ्गं वेदिर्महादेवी लिङ्गी साक्षान्महेश्वरः ॥ ३६२
तयोः सम्पूजनादेव स च सा च समर्चिता ।
न तयोर्लिङ्गदेहत्वं विद्यते परमार्थतः ॥ ३६३
ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम् ।
तदप्यविदितं तावद्ब्रह्मणा विष्णुना तदा ॥ ३६४
रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम् ।
तदा विभक्तमभवच्चतुर्थै[र्धै]कं यदाक्षरम् ॥ ३६५

अ उ मेति [1] त्रिमात्राभिः परस्ताच्चार्धमात्रया ।
तत्राकाराश्रिते भागे परलिङ्गस्य दक्षिणे ॥ ३६६
उकारश्चोत्तरे तस्य मकारस्तस्य मध्यतः ।
[2] अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनि ॥ ३६७
त्रिभक्तेऽपि तथा तस्मिन्प्रणवे परमात्मनि ।
विभागार्थं ततो देवौ न किञ्चिदपि जग्मतुः ॥ ३६७
वेदात्मना तथाव्यक्तः प्रणवो विकृतिं गतः ।
तत्राकारो ऋगभवदुकारो यजुरव्ययः ॥ ३६९
मकारः साम सञ्जातो नादस्त्वाथर्वणी श्रुतिः ।
ऋगुपस्थापयामास समानात्स्वार्थमात्मनः ॥ ३७०
रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ।
सृष्टिं लोकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययम् ॥ ३७१
कलाध्वनि निवृत्तिं च [3] वेद्यं ब्रह्मसु पञ्चसु ।
लिंगभागेष्वधोभागं बीजाख्यं कारणत्रये ॥ ३७२
चतुष्षष्टिगुणैश्वर्यं बोध्यं यदणिमादिषु ।
तादित्थमर्थैर्दशभिर्व्याप्तं विश्वमृचा जगत् ॥ ३७३
अथोपस्थापयामास स्वार्थं दशविधं यजुः ।
सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ॥ ३७४
स्थितिं लोकेष्वन्तरिक्षं विद्यातत्त्वेषु च त्रिषु ।
कलाध्वनि प्रतिष्ठां च वामं ब्रह्मसु पञ्चसु ॥ ३७५
मध्यं च लिङ्गभागेषु योनिं च त्रिषु हेतुषु ।
प्राकृतं च तथैश्वर्यं तस्माद्विश्वं यजुर्मयम् ॥ ३७६
अथोपस्थापयामास सामार्थं दशधात्मनः ।
तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियास्वपि ॥ ३७७

---

[1] च मात्राभिः–पा. [2] अर्धमात्रात्मदो-पा. [3] सद्यं–पा.

संहृतिं तु त्रिलोकेषु तत्त्वेषु शिवमुत्तमम् ।
विद्यां कलामघोरं च घोरं ब्रह्मसु पञ्चसु ॥ ३७८
लिङ्गभागेषु पीठोर्ध्वं बीजिनं कारणं त्रये ।
पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ॥ ३७९
अथाथर्वाह नैर्गुण्यमर्थं प्रथममात्मनः ।
ततो महेश्वरं साक्षन्मूर्तिष्वपि सदाशिवम् ॥ ३८०
क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ।
भूतानुग्रहणं चैव मुच्यन्ते येन जन्तवः ॥ ३८१
लोकेष्वपि यतो वाचा निवृत्तमनसा सह ।
तदूर्ध्वमुन्मना लोकात्सोमलोकमलौकिकम् ॥ ३८२
सोमः सहोमया तत्र नित्यं निवसतीश्वरः ।
तदूर्ध्वमुन्मना लोकाद्यं प्राप्य न निवर्तते ॥ ३८३
शान्तिं च शान्त्यतीतां च व्यापिकां वै कलास्वपि ।
तत्पुरुषं च तथेशानं तत्र ब्रह्मसु पञ्चसु ॥ ३८४
मूर्धानमपि लिङ्गस्य भागं भागेष्वनुत्तरम् ।
तत्र लिङ्गे समाराध्यः केवलो निष्कलः परः ॥ ३८५
तत्त्वेष्वपि तथा बिन्दुस्ततः शक्तिस्ततः परम् ।
तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः ॥ ३८६
कारणेषु त्रयातीतान्मायाविक्षेपकारणात् ।
[2] अनन्ताच्छुद्धविद्यायाः परस्ताच्च महेश्वरः ॥ ३८७
सर्वविद्येश्वराधीशात्तत्पराच्च सदाशिवात् ।
सर्वमन्त्रतनोर्देवाच्छक्तित्रयसमान्वितात् ॥ ३८८
पञ्चवक्त्राद्दशभुजात्त्र्यक्षात्सकलनिष्कलात् ।
तस्मादपि [3] पराद्बिन्दोरर्थेन्दोश्च ततः परात् ॥ ३८९

[1] अत्र 'वाचो निवृत्ता मनसा' इति स्यात् । [2] अनन्ताश्शुद्धविद्यायाः–पा.
[3] तथा बिन्दो–पा.

ततः पराच्छिवाधीशान्नादाख्याच्च ततः परात् ।
ततः परात्सुषुम्नेशाद्ब्रह्मरन्ध्रेश्वरादपि ॥ ३९०
ततः परस्याः शक्तेश्च परस्ताच्छिवतत्त्वतः ।
परमं कारणं साक्षात्स्वयं निष्कारणं शिवम् ॥ ३९१
करणानां च धातारं ध्यातारं ध्येयमव्ययम् ।
हृदयाकाशमध्यस्थं परमात्मोपरि स्थितम् ॥ ३९२
सर्वैश्वर्येण सम्पूर्णं सर्वेश्वरमनीश्वरम् ।
ऐश्वर्यं चापि माययादशुद्धान्मानुषादिकात् ॥ ३९३
अपराच्च पराच्चाद्या[1]दविशुद्धाध्वगोचरात् ।
तत्पराच्छुद्धविद्याद्यात्समनन्तात्परात्परात् ॥ ३९४
परमं परमैश्वर्यमुन्मनोर्ध्वमनादि च ।
[2]अपारमपराधीनं निरस्तातिशयं स्थिरम् ॥ ३९५
इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः ।
यस्माद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात् ॥ ३९६
ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते ।
येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः ॥ ३९७
यजुर्वेदोऽवदत्तद्वत्स्वप्नावस्था मयोच्यते ।
भोग्यात्मना परिणता विद्या वेद्या [3]यतो मयि ॥ ३९८
साम चाह सुषुप्त्याख्यं सर्वं सर्वं मयोच्यते ।
ममार्थेन शिवेनेदं तामसेनाभिभूयते ॥ ३९९
अथर्वाहं तुरीयाख्यं तुरीयान्तिकमेव च ।
मयाभिभूयते तस्मादध्वातीतः परोऽस्म्यहम् ॥ ४००
अध्वात्मकं तृतीयं तु शिवविद्यात्मसंहितम् ।
तत्त्रैगुण्यं त्रयीसाध्यं शोध्यं पतिपदैषिणाम् ॥ ४०१

---

1 द्याद्वि–शु. पा. 2 अपरादपराधीन–पा. 3 च्युतो–पा.

अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ।
तदतीतं तु नैर्गुण्यादध्वनोऽस्य विशोधकम् ॥ ४०२
द्वयोः प्रमापको नादो नादान्तश्च मदात्मकः ।
तस्मान्ममार्थस्वातन्त्र्यात्प्रधानः परमेश्वरः ॥ ४०३
यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः ।
समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते ॥ ४०४
सदर्थवाचकं तस्माल्लिङ्गमेव तदक्षरम् ।
तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः ॥ ४०५
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः ॥ ४०६
चिन्तया रहितो रुद्रो [1]वाच्योऽयं मनसा सह ।
अप्राप्य तन्निवर्तन्ते वाच्यस्त्वेकाक्षरेण सः ॥ ४०७
एकाक्षरादकाराख्यादाज्ञा ब्रह्माभिधीयते ।
एकाक्षरादुकाराख्याद्विद्या विष्णुरुदीर्यते ॥ ४०८
एकाक्षरान्मकाराख्याच्छिवो रुद्र उदाहृतः ।
दक्षिणाङ्गान्महेशस्य जातो ब्रह्मात्मसंज्ञकः ॥ ४०९
वामाङ्गादभवद्विष्णुस्ततो विद्येतिसंज्ञकः ।
हृदयादधि रुद्रोऽभूच्छिवस्य शिवसंज्ञकः ॥ ४१०
सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ।
संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥ ४११
तस्मात्त्रयस्ते कथ्यन्ते जगतः कारणत्रयम् ।
कारणत्रयहेतुश्च शिवः परमकारणम् ॥ ४१२
अर्थमेनमविज्ञाय रजसा बद्धवैरयोः ।
तयोर्मध्ये महालिङ्गं स्वयं तत्र समुत्थितम् ॥ ४१३

---

[1] अत्र 'वाचो यं' इति स्यात्.

एवमोमोमिति प्राहुर्यदिहोक्तमथर्वणा ।
ऋचो यजूंषि सामानि शाखाश्चान्याः सहस्रशः ॥ ४१४
वेदेष्वेवं स्वयं वक्त्रैर्व्यक्तमर्थं वदत्स्वपि ।
स्वप्नानुभूतमिव तत्ताभ्यामध्यवसीयते ॥ ४१५
तत्त्वप्रकाशकं लिङ्गं स्वयं तत्त्वं समुत्थितम् ।
ततो लिङ्गस्य लिङ्गत्वं लिङ्गिनोऽपि च लिङ्गिता ॥ ४१६
ततो विश्वस्य जगतो विशेषात्स्वात्मनोऽपि च ।
उत्पत्तिविलयौ चैव याथार्थ्यं च षडध्वनाम् ॥ ४१७
निरुत्तरतरं ब्रह्म निष्कलं लिङ्गमैश्वरम् ।
पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम् ॥ ४१८
अकुतोभयमत्यन्तमवृद्धिक्षयमव्ययम् ।
बाह्यमाभ्यन्तरं[1] प्राप्य बाह्याभ्यन्तरवर्जितम् ॥ ४१९
निरस्तातिशयं शश्वद्विश्वलोकविलक्षणम् ।
अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् ॥ ४२०
प्रकाशैकरसं शान्तं प्रसन्नं सततोदितम् ।
सर्वकल्याणनिलयं शक्त्या तादृक्षयान्वितम् ॥ ४२१
एवं लिङ्गस्य महिमा वेदान्तेषु प्रकाशितः ।
तज्ज्ञात्वा हृदये धार्यं सामरस्यविधानतः ॥ ४२२
यो धत्ते लिङ्गमव्यक्तं स एव परमेश्वरः ।
इति [2]श्रुतेषु बहुषु तद्धारणमुदाहृतम् ॥ ४२३

इति प्रथमाध्याये तृतीयः पादः

---

प्रथमाध्याये चतुर्थः पादः

[आनुमानिकमित्यादिसूत्रार्थविचारः]

प्रतिज्ञाय च [3]जिज्ञासां लक्षणं ब्रह्मणः कृतम् ।
तल्लक्षणं प्रधानेऽपि गतमित्यनुशङ्कितम् ॥ ४२४

---

[1] प्राप्यं—पा. [2] सूत्रेषु—पा. [3] जिज्ञासालक्षणे—पा.

अशब्दत्वेन तत्पूर्वं निराकृतमिदं पुनः ।
अशक्त्या शब्दवत्त्वं हि निराकर्तुं प्रवर्तते ॥ ४२५
आनुमानिकमित्यादिसूत्रं तस्यार्थनिर्णयः ।
अनुमानेन निर्णीतं साङ्ख्यादिभिरिहोदितम् ॥ ४२६
अव्यक्तं हि प्रधानं तादित्येकेषां श्रुतौ पुनः ।
साङ्ख्यप्रसिद्धमेवात्र पठ्यते महदित्यपि ॥ ४२७
इति चेन्न शरीरस्य ग्रहणात्तत्पदेन हि ।
रथरूपकाविन्यस्तमव्यक्तेनैव गृह्यते ॥ ४२८
शरीरमेवाव्यक्तं हि न प्रधानादिकं भवेत् ।
तत्सूक्ष्मं तु तदर्हत्वात्स्थूलं यद्यपि नाभवत् ॥ ४२९
तथापि सूक्ष्मं तादिति निर्णीतं श्रुतिसूत्रयोः ।
अर्थवत्तदधीनत्वात्परत्वं तस्य गृह्यते ॥ ४३०
ज्ञेयत्वावचनाच्चैव न प्रधानमिवाभवत् ।
वदतीति श्रुतिरपि प्रधानस्येति चेन्न हि ॥ ४३१
तथा प्रकरणात्प्राज्ञो न प्रधानं तथा भवेत् ।
अग्निजीवेश्वराणां च त्रयाणां प्रश्न इत्यपि ॥ ४३२
एवमेव ह्युपन्यासो महद्वच्च तथैव च ।
न साङ्ख्याभिमतं किं तु शरीरमिति निश्चितम् ॥ ४३३

[चमसवदित्यादिसूत्रार्थविचारः]

अविशे[1]षाच्चमसवदप्राधान्यमिहोच्यते ।
उपक्रमात्तु यज्ज्योतिस्तुशब्दो ह्यवधारणे ॥ ४३४
तेजोऽबन्नप्रकृतिरप्यजाशब्देन गृह्यते ।
तथा ह्येकेऽधीयतेऽत्र प्रकृतिः शक्तिरेव च ॥ ४३५
तत्कल्पनोपदेशाच्च मध्वादिवदिहोच्यते ।
अविरोधो ह्यजाशब्दात्प्रकृतिः शक्तिरिष्यते ॥ ४३६

---

[1] षाच्च पवनवदप्रा—पा.

[न सङ्ख्येत्यादिसूत्रार्थविवरणम्]

नानाभावातिरेकाच्च तन्न सङ्ख्योपसङ्ग्रहात् ।
तस्मान्न साङ्ख्यवादस्य श्रुतिमात्रमिहेष्यते ॥ ४३७
प्राणादयो वाक्यशेषात्सङ्ख्यापूरणमिष्यते ।
तथा हि ज्योतिषैकेषामसत्यन्नेति सूत्रतः ॥ ४३८
प्राणादिनेव तत्रापि सङ्ख्यासम्पत्तिसम्भवात् ।

[कारणत्वेनेत्यादिसूत्रार्थविवरणम्]

यथाकाशादिषु पुनः कारणत्वेन चाभवत् ॥ ४३९
तत्रैव व्यपदिष्टोक्तेरात्मैव परिगृह्यते ।
समाकर्षाच्च ब्रह्मैव वेदितव्यं न चेतरत् ॥ ४४०

[जगद्वाचित्वादित्यादिसूत्रार्थविचारः]

तस्माज्जगद्वाचित्वं च वाचित्वाद्ब्रह्म केवलम् ।
तदुक्तं जीवमुख्येति सूत्रेणापि दृढं स्मृतम् ॥ ४४१
तथा प्रश्नव्याख्यानाभ्यामन्यार्थं जैमिनिर्मुनिः ।
मन्यतेऽस्मिन् प्रकरणे प्राणप्रग्रहणं तथा ॥ ४४२

[वाक्यान्वयादित्यादिसूत्रार्थविचारः]

वाक्यान्वयात्परं ब्रह्म यल्लिङ्गं हृदयाम्बुजे ।
उपास्यं तत्परं ब्रह्म वेदितव्यं मनीषिभिः ॥ ४४३
लिङ्गं प्रतिज्ञासिद्धेश्च हृदब्जे धार्यमव्ययम् ।
आश्मरथ्यो मुनिस्तत्र मन्यते पुनरादरात् ॥ ४४४
एवं भावादौडुलोमिरित्येव ह्युक्तमिष्यते ।
अवस्थितेः काशकृत्स्न इति तद्ब्रह्मजीवयोः ॥ ४४५
न भेदोऽपि न चाभेदः सामरस्यात्तयोर्ध्रुवम् ।
भेदाभेदाभ्युपगमाद्विस्फुलिङ्गाग्निवत्तदा ॥ ४४६
जीवो ह्युपासकः साक्षादुपास्यं ब्रह्म केवलम् ।
लिङ्गाङ्गसामरस्येन भेदाभेदौ व्यवस्थितौ ॥ ४४७

[प्रकृतिश्चेत्यादिसूत्रार्थविवरणम्]

उपादानं हि प्रकृतिर्निमित्तं ब्रह्म केवलम् ।
दृष्टान्तानुपरोधाच्च मृदादिवदिहेष्यते ॥ ४४८

[1] तथाभिध्योपदेशाच्च प्रकृतित्वं विचार्यते ।
प्रकृतित्वं च कर्तृत्वं ब्रह्मणो वाक्यगौरवात् ॥ ४४९

साक्षादप्युभयाम्नानात्प्रकृतिः कर्तृ च श्रुतम् ।
योनिश्च हीति सूत्रेण ब्रह्मणो निश्चितं पुनः ॥ ४५०

कर्तृत्वं प्रकृतित्वं च योनिशब्देन तत्तथा ।
परिणामादात्मकृतेरात्मानं स्वयमित्यतः ॥ ४५१

प्रकृतित्वं च कर्तृत्वं सिद्धं तस्मात्परस्य हि ।

[एतेन सर्वे इत्यादिसूत्रार्थः]

एतेन सर्वे व्याख्याता व्याख्याता इति सूत्रतः ॥ ४५२

एतैश्च हेतुभिः सर्वे वेदान्ता ब्रह्मतत्पराः ।
तद्ब्रह्म हृदये धार्यं प्रतिसूत्रं व्यवस्थितम् ॥ ४५३

एतदैश्वर्यविभवं लिङ्गं ब्रह्म हृदम्बुजे ।
सामरस्यविधानेन धार्यं पूज्यं मुमुक्षुभिः ॥ ४५४

तस्मात्सर्वप्रयत्नेन सर्वकर्माणि मानवः ।
परिवृत्य यथाकालं करपीठे तु पूजयेत् ॥ ४५५

यतः पापार्णवात्रातुं भक्तिर्नौरिव निर्मिता ।
तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम् ॥ ४५६

अन्त्यजो वाधमो वापि मूर्खो वा पतितोऽपि वा ।
शिवभावं प्रपन्नश्चेत्पूज्यः सर्वसुरासुरैः ॥ ४५७

तस्मात्सर्वप्रयत्नेन हृदये धारयेच्छिवम् ।
अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥ ४५८

---

[1] तथाभिधोपदेशाच्च—पा.

वेदैश्शास्त्रैर्वेदविद्भिर्विचार्याथ सुनिश्चितम् ।
ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ॥ ४५९
मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ।
सम्पूज्यामन्त्रकं भक्त्या शिवलिङ्गं परात्परम् ॥ ४६०
तैस्तैः पापैः प्रमुच्येत सामरस्यमना यदि ।
तस्मात्सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् ॥ ४६१
भक्तश्चेन्नापरः कश्चिद्भिक्षाहारो जितेन्द्रियः ।
कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु ॥ ४६२
पूजयेद्यदि तल्लिङ्गं तस्मात्पापात्प्रमुच्यते ।
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥ ४६३
तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ।
भक्त्या पञ्चाक्षरेणैव यो लिङ्गं सकृदर्चयेत् ॥ ४६४
सोऽपि गच्छेच्छिवस्थानं शिवलिङ्गस्य धारणात् ।
तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्वदक्षिणाः ॥ ४६५
शिवलिङ्गार्चनस्यैते कोट्यंशेनापि नो समाः ।
अरुद्रो वा सरुद्रो वा शिवलिङ्गं समर्चयेत् ॥ ४६६
यः सकृत्पतितो वापि मूढो वा मुच्यते नरः ।
षडक्षरेण वा नित्यं तथा पञ्चाक्षरेण वा ॥ ४६७
एककालं द्विकालं वा त्रिकालं सर्वदाथवा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥ ४६८
जातेनात्मद्रुहा येन नार्चितं लिङ्गमैश्वरम् ।
स चिरं सञ्चरत्यस्मिन् संसारे दुःखसागरे ॥ ४६९
दुर्लभं प्राप्य मानुष्यं तल्लिङ्गं यो न धारयेत् ।
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥ ४७०
हृत्प्रदेशे सदा धार्यं शिवलिङ्गं मनीषिभिः ।
दुर्लभं प्राप्य मानुष्यं यो लिङ्गं हृदि धारयेत् ॥ ४७१

तस्यैव सफलं जन्म कृतार्थः स नरोत्तमः।
लिङ्गाङ्गसम्भवा ये च शिवलिङ्गैकतत्पराः॥ ४७२
शिवलिङ्गार्चनपरा न ते दुःखस्य भागिनः।
ये वाञ्छन्ति महाभोगान् राज्यं च त्रिदशालयम्॥ ४७३
ते[1]ऽर्चयन्ति सदाकालं हृदिस्थं लिङ्गमद्भुतम्।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रभावता॥ ४७४
शौर्यं च जगति ख्यातिर्लिङ्गमर्चयतां भवेत्।
तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः॥ ४७५
सामरस्यविधिं कुर्याद्यदीच्छेच्छिवमात्मनः।
सङ्ग्रहेण प्रमाणानि पुराणेष्वागमेषु च॥ ४७६
अन्विष्य लिखितान्येतान्यतस्य विषये पुनः।
पौनरुक्त्यमनादृत्य बुद्धिदाढर्याय सादरम्॥ ४७७

[शिवागमव्याससूत्राणामेकार्थत्ववर्णनम्]

वैदिकत्वं दर्शयित्वा सूत्रतात्पर्यवर्णनम्।
कर्तव्यं वचनैरन्यैः किं साध्यमिति चेच्छृणु॥ ४७८
वक्ष्यामि सङ्ग्रहेणैव व्याससूत्रैकरूपताम्।
वीरशैवागमाख्यातपदार्थानां परस्परम्॥ ४७९
आगमेषु पदार्था ये त एव व्याससूत्रके।
शब्दभेदेन वक्ष्यन्ते संज्ञाभङ्ग्यन्तरेण च॥ ४८०
शास्त्रयोनित्वसूत्रेण शास्त्राणां योनिता श्रुता।
जिह्वाङ्गे गुरुलिङ्गं स्याज्जगुरागमिका इति॥ ४८१
उपदेष्टा शिवः साक्षाद्विद्यानां जगतां यतः।
ज्योतिश्चरणसूत्रेण य एषोऽक्षिणि पूरुषः॥ ४८२
परं ब्रह्मेति कथितस्तमेवागमिका जगुः।
दृगंशे शिवलिङ्गं स्यादिति लिङ्गस्वरूपताम्॥ ४८३

[1] ये-पा.

अत एव प्राण इति प्राणानां ब्रह्मता श्रुता ।
आगमेषु समाख्यातं प्राणलिङ्गं तथान्तरे ॥ ४८४
दहराख्येऽधिकरणे यद्ब्रह्म समुदीरितम् ।
तदेवागमशास्त्रेषु महालिङ्गं हृदीरितम् ॥ ४८५
आनन्दाख्येऽधिकरणे यच्च ब्रह्म समीरितम् ।
भावलिङ्गं तदेवाहुरागमार्थविशारदाः ॥ ४८६
भावार्पणादिभेदेन यदुक्तं त्रिविधार्पणम् ।
चेतोऽर्पणाधिकरणे स एवार्थो विचार्यते ॥ ४८७
छन्दोविशेषपरतामाशङ्क्याथ विचारितम् ।
धीप्रेरकत्वादित्यादिसर्वभाष्येषु वार्तिके ॥ ४८८
स्थानादिव्यपदेशाच्च सूत्रे योऽर्थः स एव हि ।
स्थलशब्देनागमेषु सर्वत्र समुदीर्यते ॥ ४८९
प्रतिसूत्रं चैवमेव वक्तुं शक्या सरूपता ।
ग्रन्थविस्तरभीत्याहं प्रकृतार्थमुपक्रमे ॥ ४९०
भावभेद इति प्रोक्तस्तत्रैवमवधार्यताम् ।

[जीवब्रह्मणोर्भेदाभेदनिरूपणेनाध्यासासम्भवकथनम्]

कैश्चित्तु सूत्रितोऽध्यासः शास्त्रस्यादौ समर्थितः ॥ ४९१
आदिसूत्रे सूचितव्यो विषयो न प्रयोजनम् ।
जीवब्रह्मस्वरूपैक्यलक्षणो विषयश्च यः ॥ ४९२
तज्ज्ञानं चाध्यासतन्त्रमिति सूत्रार्थ एव चेत् ।
जीवब्रह्मस्वरूपैक्यस्यै[1]वाभावेन तस्य च ॥ ४९३
विषयत्वं न युज्येत तत्त्वदृष्ट्यावधार्यताम् ।
जीवब्रह्मस्वरूपैक्यं न क्वचित्सूत्रितं पुनः ॥ ४९४
अंशो नानेति सूत्रे तु जीवस्य ब्रह्मणोंशता ।
भिन्नाभिन्नत्वमग्नेस्तु विस्फुलिङ्गवदीरितम् ॥ ४९५

---

[1] क्यस्यैवाभेदेन मेव भावेन—पा.

न ह्यग्नेर्विस्फुलिङ्गस्य स्वरूपैक्यं प्रदृश्यते ।
जीवस्य ब्रह्मणो येन स्वरूपैक्यं पुनर्भवेत् ॥ ४९६

न भेदाभेदयोर्युक्तमेकस्मिन्नेव वर्तनम् ।
परस्परविरोधादित्यतो वाच्यं विचक्षणैः ॥ ४९७

अविद्यालक्षणोपाधिकृतमित्यभिधीयते ।
उभयव्यपदेशादित्यहिकुण्डलवत्तथा ॥ ४९८

प्रकाशाश्रयवत्त्वाच्च तेजस्त्वात्पूर्ववत्तथा ।
अनुज्ञापरिहारौ च देहसम्बन्धतस्तथा ॥ ४९९

ज्योतिरादिवदित्येवं तत्साभाव्याप्तितस्तथा ।
उपपत्तेः प्रदीपवदावेशस्तदनन्तरम् ॥ ५००

तथा हि दर्शयतीति च भेदाभेदयोः पुनः ।
प्रमाणतोऽपि दृष्टत्वात्सिद्धान्तेषु च दर्शनात् ॥ ५०१

विजानीयात्तदन्योन्यमविरोधव्य[1]वस्थितम् ।
तथाच वक्ष्यते तैश्च तथा भोक्त्रादिसूत्रके ॥ ५०२

अविरोधं सम्प्रदर्श्य व्याख्यातं सूत्रमप्यथ ।
ब्रह्मकारणवादश्च यदि चेदन्यथा पुनः ॥ ५०३

सम्यक्तर्कबलेनैव क्षिप्यते यद्यपि श्रुतिः ।
प्रमाणं स्वस्य विषये स्वयं भवितुमर्हति ॥ ५०४

तथापि स्वस्य विषये प्रमाणान्तरतो ऋते ।
स्वयमन्यपरैव स्यात्कृष्णलश्रपणे यथा ॥ ५०५

यथा मन्त्रार्थवादौ च तर्कोऽपि स्वस्य गोचरात् ।
अप्रतिष्ठित एव स्यादन्यत्रैवं किल स्थितिः ॥ ५०६

धर्माधर्मस्थले दृष्टा तर्कदुर्बलता पुनः ।
प्रमाणान्तरसिद्धार्थ[2]बोधनं यच्छ्रुतेः पुनः ॥ ५०७

---

[1] व्यवस्थितिम्–पा. [2] बोधितं–पा.

अयुक्तं तदिदं विद्याद्यद्येवं सम्मतं तव ।
प्रमाणान्तरासिद्धोऽर्थः श्रुत्या को वात्र बोध्यते ॥ ५०८
भोक्तृभोग्यविभागो हि प्रसिद्धो जगति ह्ययम् ।
शारीरश्चेतनो भोक्ता भोग्याः शब्दादयस्त्विमे ॥ ५०९
[1]यथा भोक्ता देवदत्तो भोग्यास्ते चोदनादयः ।
भोक्तृभोग्यविभागस्याभावः सर्वस्थले भवेत् ॥ ५१०
यदि भोक्ता भोग्यभावं भोग्यं भोक्तृत्वमेव वा ।
तयोरन्योन्यतापत्तिर्ब्रह्मणः परकारणात् ॥ ५११
अनन्यत्वात्प्रसज्येत न युक्तं यदि बाधनम् ।
प्रसिद्धस्य विभागस्य न युक्तमत एव हि ॥ ५१२
ब्रह्मकारणतायाश्च निश्चयो नेति यो वदेत् ।
स्याल्लोकवदिति ब्रूयात्तं मूर्खं पुरुषं प्रति ॥ ५१३
उपपद्यत एवेदमस्मत्पक्षे विभाजनम् ।
एवं लोके च दृष्टत्वात्समुद्रादुदकात्मनः ॥ ५१४
अनन्यत्वेऽपि वीच्यादेर्विभाग उपपद्यते ।
नचोदकात्मनो वार्धेरनन्यत्वेऽपि वा पुनः ॥ ५१५
फेनादीनामनेकेषामितरेतरता मता ।
नच वीचीतरङ्गादेरन्योन्यत्वे त्वसम्भवे ॥ ५१६
उदात्मनः सरिद्भर्तुरनन्यत्वं न सिद्ध्यति ।
इहाप्येवं भोक्तृभोग्यविभागोऽपि समार्थितः ॥ ५१७
सदात्मकाद्ब्रह्मणो वाप्यनन्यत्वं न सिध्यति ।
नन्वेतदविरोधस्य वादमात्रं समर्थनम् ॥ ५१८
तदनन्यत्वमारम्भणशब्दादिभ्यसूत्रके ।
वाचारम्भणमित्यादिश्रुत्या सर्वस्य सर्वथा ॥ ५१९

[1] तथा—पा.

न च भेदप्रपञ्चस्य बाधितत्वसमर्थनात् ।
नचानेन हि सूत्रेण श्रुत्या वाचादिरूपया ॥ ५२०
कृत्स्नस्यापि प्रपञ्चस्य बाधितत्वं समर्थ्यते ।
न प्रत्यक्षप्रमाणेन शुद्धो भेदप्रपञ्चकः ॥ ५२१
शक्यते बाधितुं श्रुत्या किं तु न्यायस्य इतीर्यते ।
श्रुतेरेवान्यपरता प्रत्यक्षादिविरोधतः ॥ ५२२
यथा हि पूर्वतन्त्रे च कृष्णलं श्रपयेद्विधेः ।
प्रत्यक्षेण स्वर्णमाषे [1] विक्लृत्तिर्बाधिता यदि ॥ ५२३
उष्णीकरणमात्रार्थपरता लक्षणा कृता ।
यत्सोमेन यजेतेति विधौ यागेन भावयेत् ॥ ५२४
इत्यर्थस्वीकृतौ सोमेन यागेनेतिचैतयोः ।
सामानाधिकरण्येन ह्यन्वये सोमयागयोः ॥ ५२५
प्र[2]त्यक्षभेदबाधेनाभेदो लक्षणया यथा ।
[3]अपि चेद्यदि कृत्स्नस्य प्रपञ्चस्य च बाधनम् ॥ ५२६
तर्हि श्रुतिस्वरूपस्य पदार्थस्मरणस्य च ।
तथा वाक्यार्थज्ञानस्य प्रपञ्चान्तर्गतत्वतः ॥ ५२७
बाधे तेषामपि सति प्रपञ्चो बाध्यतां कथम् ।
कथं मज्जननी वन्ध्या मम जिह्वा न चेति च ॥ ५२८
न च प्रपञ्चबाधेऽपि तिष्ठत्येव स्वरूपकम् ।
तस्मात्कार्यं चोपपन्नमिति वक्तुं हि शक्यते ॥ ५२९
प्रतियोग्यनिषेधे सत्यभावो वाङ्मात्रतः ।
न च श्रुत्या प्रपञ्चस्य स्वरूपं न हि बाध्यते ॥ ५३०
येन वा स्याद्धि व्याघातः सत्यत्वं तस्य किं त्विति ।
स्वरूपबाधाभावे चाबाध्यतारूपसत्यता ॥ ५३१

[1] विकृतौ बाधिते सति—पा. [2] प्रत्यक्षाभेदबाधेन भेदो—पा
[3] अपि चाद्यापि—पा.

प्रपञ्चेऽभ्युपगन्तव्या न स्यात्सत्यत्वबाधनम् ।
तस्यां वानेन सूत्रेण श्रुत्या बाधः समर्थ्यते ॥ ५३२
किं त्वभिन्नत्वमेवेति न भेदाभेदयोः पुनः ।
विरोध इति मन्तव्यं तथान्यत्र प्रदर्श्यते ॥ ५३३
इतरव्यपदेशाच्च स्व[1]हिताकरणादितः ।
दोषप्रसक्तिरित्यादौ तथा तत्त्वमसीति च ॥ ५३४
जीवस्य ब्रह्मणः सम्यगभेदव्यपदेशतः ।
किं जीवकर्तृका सृष्टिः किं वा ब्रह्मैककर्तृका ॥ ५३५
सृजेज्जीवः स्वस्य हितं नाहितं नरकादिकम् ।
इत्याद्याशङ्क्याधिकं तु भेदनिर्देशसूत्रतः ॥ ५३६
कर्ता जीवो न किन्त्वत्र कर्तृ ब्रह्मैव चाधिकम् ।
तज्जीवस्याहितमपि सृज्यते वेत्युदीर्यते ॥ ५३७
कथं वाभेदकथने हीनताधिकते उभे ।
कथं सर्वेश्वरः साक्षात्सर्वज्ञत्वेन सर्वतः ॥ ५३८
जीवान् स्वात्मतया पश्यन् तेषु शोकादिकं सृजेत् ।
स्वनिष्ठत्वेन शोकादेरनुभूतिप्रसञ्जनात् ॥ ५३९
इत्याशङ्क्याश्मादिवच्च तदसङ्गतिरीरिता ।
अनेन चाश्मनां सूर्यकान्तवैदूर्यभेदिनाम् ॥ ५४०
पाषाणत्वेन सामान्यमानाभेदे समाहिते ।
व्यक्तिभेदाद्धीनरूपमध्यमोत्तमभावतः ॥ ५४१
स्वरूपाणां च वैचित्र्यं कार्यवैचित्र्यमेव च ।
एवं च जीवपरयोरपि व्यक्तिभिदाकृता ॥ ५४२
हीनताधिकता कार्यवैचित्र्यं चोपपद्यते ।
न पाषाणत्वसा[2]मान्यं विभिन्नं व्यक्तयः पुनः ॥ ५४३

---

[1] स्वाहिताकरणादितः–पा. [2] सामान्यभिन्नं–पा.

भिन्ना एवेति नैकत्र भेदाभेदावुभाविति ।
पाषाणत्वादिसामान्यावच्छिन्नप्रतियोगिकः ॥ ५४४
यो भेदस्तदभावस्वरूपाभेदस्य चाप्यथा ।
वैदूर्यत्वाद्यवच्छिन्न[1]प्रतियोगीव चेत्तया ॥ ५४५
भिदा व्यक्तिषु तस्याश्चोभयस्य प्रतिपादानात् ।
नचैवं शङ्कितुं शक्यं वज्रवैदूर्ययोर्द्वयोः ॥ ५४६
सामानाधिकरण्यादिव्यवहारप्रसञ्जनम् ।
इष्टत्वात्तस्य सामान्याभेदोल्लेखनमत्र च ॥ ५४७
विशेषाभेदविरहादत एवेश्वरेऽपि च ।
आत्मत्वेनैव [2]जीवाभेददृष्टिः सूत्रिता पुनः ॥ ५४८
आत्मेति तूपगच्छन्ति ग्राहयन्ति च सूत्रके ।
अत एव परैश्चापि व्यक्तिस्थानीयमत्र च ॥ ५४९
विहायाहङ्कृतेरंशं समान्यस्थानिनं पुनः ।
चैतन्यस्यैव चाभेदो ह्यादरेण समर्थितः ॥ ५५०
विशिष्टं च स्वरूपं वा भेदाभावोपलक्षितम् ।
सामानाधिकरण्योक्तेर्विषयस्त्विवति यद्यपि ॥ ५५१
सर्वात्मना यत्र भेदग्राहि नास्ति प्रमाणकम् ।
विषयस्तस्य रूपैक्यं सोऽयं देवादिके स्थले ॥ ५५२
भेदग्राहि प्रमाणं स्याद्यत्र कार्ये च कारणे ।
पृथक्सत्तावच्छेदकभेदाभावोपलक्षितम् ॥ ५५३
स्वरूपद्वयमेवं वा भेदः सामान्य एव यः ।
तदाभावोपलक्षितस्वरूपद्वयमेव वा ॥ ५५४
विषयः प्रकृते चोत तमादेशमिति श्रुतौ ।
एकविज्ञानतः सर्वविज्ञानोक्त्या तदन्तरम् ॥ ५५५

---

[1] प्रतियोगिवती च या–पा. [2] जीवाद्भेददृष्टिः–पा.

सर्वात्मत्वं प्रतिज्ञाय श्रुतौ तदुपपादके ।
ऐतदात्म्यमिदं सर्वं नवकृत्वोपदेशतः ॥ ५५६
सामानाधिकरण्यस्य व्यपदेशो यथा पुनः ।
[1]ब्रह्मप्रपञ्चयोर्न स्वरूपैक्यविषयस्तथा ॥ ५५७
तत्त्वमस्यादिवाक्योक्तव्यपदेशोऽपि दृश्यते ।
[2]भेदाभेदोपदेशस्य तुल्यत्वादुभयत्र च ॥ ५५८
[3]नान्योऽतोऽस्ति तथा यत्र नान्यत्पश्यति चाप्यथ ।
यस्मात्परं नापरं च विहितस्य श्रुतौ पुनः ॥ ५५९
दृश्यभेदनिषेधस्य चेतनाचेतनत्वतः ।
संसार्यसंसारित्वाभ्यां विरुद्धाभ्यां परस्परम् ॥ ५६०
विरुद्धधर्मवत्तस्य चोभयत्रापि तुल्यता ।
तता भेदनिषेधाच्च भेदस्य प्रतिपादनात् ॥ ५६१
भेदाभेदौ सिद्ध्यतस्तौ न विरोधस्तदेतयोः ।
अविद्यालक्षणोपाधिकृता मिथ्याभिधा इति ॥ ५६२
यदुक्तं तदविद्याया मिथ्यायाश्चैव कुत्रचित् ।
अविद्योपाधिकायाश्चेत्ययुक्तं प्रतिभाति तत् ॥ ५६३
नचानुमानिकमिति सूक्ष्मं तु तदिति स्थले ।
अविद्या सूत्रितैवेति वाच्यं तत्र परात्परम् ॥ ५६४
महतोऽव्यक्तमित्यत्र प्रधानं त्रिगुणं पुनः ।
गृह्यतेऽव्यक्तशब्देनेत्येवं शङ्कासमुद्भवे ॥ ५६५
शरीररूपविन्यस्तगृहीतैरित्यनेन तु ।
आत्मानं रथिनं विद्धि शरीरं रथमेव च ॥ ५६६
इति मन्त्रे रथत्वेन रूपितं देहमेव हि ।
गृह्यते न प्रधानमित्युक्त्वा च समनन्तरम् ॥ ५६७

---

[1]ब्रह्मस्वरूपयोर्न–पा. [2]भेदाभेदापदेशस्या–पा. [3]नान्यतोऽस्ति -पा.

व्यक्तत्वात्तु शरीरस्य कथमव्यक्तता भवेत् ।
इत्याशङ्क्याथ सूक्ष्मं तु तदर्हत्वादिना पुनः ॥ ५६८
सूक्ष्मं शरीरमेवात्र व्यक्तशब्देन गृह्यते ।
स्थूलं शरीरं नेत्युक्तं नाविद्या त्रिगुणा पुनः ॥ ५६९
अव्यक्तशब्दग्राह्यः स्यात्सूक्ष्मदेहस्य सम्भवे ।
अप्रसिद्धा च या विद्या न ग्राह्या वै यतश्च सा ॥ ५७०
अविद्याया उपादानतया शब्दे प्रकारतः ।
ब्रह्माण्डव्यापितायास्तु चाहमज्ञ इति स्वतः ॥ ५७१
सर्वप्रत्यक्षतायाश्चाप्यङ्गीकारेण वै पुनः ।
सूक्ष्मत्वाव्यक्तशब्दार्हत्वयोः पुनरसम्भवात् ॥ ५७२
अन्यथा पूर्वसूत्रे तु गृह्यतेऽव्यक्तशब्दतः ।
गृह्यते देहमित्युक्त्वा तत उत्तरसूत्रके ॥ ५७३
अविद्या गृह्यते चैवं माने व्याहातिसम्भवात् ।
प्रधानवादापत्तेश्च शङ्कितव्यं न चाप्यथ ॥ ५७४
अर्थवत्तदधीनत्वादित्यनेन प्रधानकम् ।
स्वतन्त्रमीश्वराधीनवैलक्षण्यमुदीरितम् ॥ ५७५
इति सेश्वरसाङ्ख्यानां योगानां च मते पुनः ।
प्रधानस्येश्वराधीनताङ्गीकारेण तावता ॥ ५७६
वैलक्षण्यं न चासिद्धेरुक्ता रीतिर्न सङ्गता ।
यथेन्द्रियप्रवृत्तीनामर्थाधीनतया पुनः ॥ ५७७
इन्द्रियेभ्यः परत्वं स्यादर्थानां चैवमेव हि ।
आत्मप्रवृत्तेर्देहस्याधीनत्वाद्वर्ष्मणः पुनः ॥ ५७८
परत्वमात्मनश्चैवमर्थकं सूत्रमत्र हि ।
किं चाविद्या सूत्रिता चेदुत्तराधिकरणं तत् ॥ ५७९
अनारभ्यमेव स्यादजामन्त्रे तु तद्ग्रहे ।
सम्भाविते प्रधानस्य ग्रहणे च विशेषतः ॥ ५८०

कारणाभावतः पूर्वपक्षानुत्थानतः पुनः ।
देहात्मशङ्किं स्वगुणैर्निगूढामुत्तरत्र च ॥ ५८१
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
इत्यादिनेश्वराधीनत्वस्यैव प्रकृतेः पुनः ॥ ५८२
उपात्तत्वेऽपि तन्मन्त्रे मध्येऽपि प्रकृतेः पुनः ।
परामर्शस्य न्याय्यत्वात्तथा ज्योतिरुपक्रमात् ॥ ५८३
तथा ह्यधीयते एके मध्वादिवदिति ह्यथ ।
तत्कल्पनोपदेशाच्चेत्येवं हि स्यादसङ्गतम् ॥ ५८४
अनादिभूताविद्यायाः सम्यग्ग्रहणसम्भवे ।
मुख्यत्वात् प्रकृतित्वाच्च तत्परित्यागतस्ततः ॥ ५८५
अजाशब्देन प्रकृतिं तां तेजोऽबन्नलक्षणाम् ।
गृहीत्वा जनिमत्त्वेनाप्यजत्वाभावतः पुनः ॥ ५८६
अजाशब्दासङ्गतिरित्याशङ्क्य मधुनो यथा ।
आदित्यस्यासावदित्यो देवमध्विति मन्त्रतः ॥ ५८७
मधुत्वकल्पनं चैवमनजायाश्च केवलम् ।
तेजोऽबन्नादिप्रकृतेरजावदियमित्यजा ॥ ५८८
अजत्वकल्पनमिति वचनस्याप्यसङ्गतेः ।
तस्मात्तेजोऽबन्नरूपप्रकृतिव्यतिरेकतः ॥ ५८९
अनादिभूताविद्या न सूत्रिताभिमता नच ।
अस्ति प्रमाणभावेन नचाविद्यां विना पुनः ॥ ५९०
ब्रह्मणोऽवयवाभावात्परिणामोपपादनम् ।
कृत्स्नप्रसक्तिसूत्रस्य व्याख्यानावसरे मया ॥ ५९१
आशङ्क्य परिहारोऽपि विस्तरेण प्रदर्श्यते ।
भेदाभेदाविमौ सिद्धौ तस्मादित्युपरम्यते ॥ ५९२

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञ-
नीलकण्ठकृते निगमागमसारसङ्ग्रहे क्रियासारे
प्रथमोपदेशः ।

---

॥ श्रीगिरीशाय नमः ॥

# अथ द्वितीयोपदेशः

[स्मृत्यनवकाशेत्यादिसूत्रार्थविचारः]

तत्रादिमोपदेशेऽस्मिन् सर्वज्ञे सर्वशक्तिके ।
उपादाने प्रपञ्चस्य निमित्ते ब्रह्मणि क्रमात् ॥ १

सर्ववेदान्तवाक्यानां दर्शितस्तु समन्वयः ।
स्मृत्यादिभिर्विरोधेन बाधाभावो द्वितीयके ॥ २

उपदेशे युक्तिभिस्तु बहुभिः सम्प्रदर्श्यते ।
तत्र वेदान्तवाक्यानि जगतां ब्रह्म कारणम् ॥ ३

उपादानमिति प्राहुः प्रधानमिति साङ्ख्यकाः ।
ततो विरोधाद्वक्तव्यो बाधस्त्वन्यतरस्य हि ॥ ४

तत्र श्रुतेरनुष्ठेयधर्मादौ सावकाशतः ।
स्मृतेरनवकाशत्वाद्बाधो युक्तस्तया श्रुतेः ॥ ५

आर्षप्रत्यक्षतः पश्यन्प्रधानं दृश्यकारणम् ।
प्रणिनाय स्मृतिं चर्षिस्ततः प्रत्यक्षमूलता ॥ ६

स्मृतेस्ततश्च बाधस्तु युक्त एव तया श्रुतेः ।
नैवं श्रुत्या स्मृतेर्बाधोऽन्यस्मृत्यनवकाशतः ॥ ७

दोषप्रसङ्गान्नानास्मृत्यनुरोधेन चेत्पुनः ।
नानाकारतया वक्तुं शक्यं नैवेति वै पुनः ॥ ८

वस्तुनि स्वेच्छया नानाविकल्पानुपपत्तितः ।
अतः शैवीयधर्माणां प्रमाणैस्तु श्रुतीतरैः ॥ ९

निषेधे च क्वचिद्दृष्टे चामृतस्यादिवाक्यतः ।
तेषां बाधनमेव स्यान्नैव तैः श्रुतिबाधनम् ॥ १०

ननु शैवीयधर्माणां प्रामाण्येऽङ्गीकृते सति ।
पूर्वकाण्डप्रसिद्धानामग्निष्टोमादिकर्मणाम् ॥ ११

वीरशैवीयधर्माणां परस्परविरोधतः ।
अग्निष्टोमादिमन्त्राणामेवं तदुपयोगिनाम् ॥ १२

सर्वेषां वेदभागानां वीरशैवीयकर्माणि ।
केषां चिदुपयुक्तानाममृतस्यादिरूपिणाम् ॥ १३

परस्परविरोधेन बहुवदानुसारतः ।
वीरशैवोपयुक्तानां मन्त्राणामत्र वै पुनः ॥ १४

अर्थान्तरपरत्वं तु वक्तव्यमिति चेच्छृणु ।
पूर्वकाण्डोक्तधर्माणामनुष्ठानविधौ ततः ॥ १५

सर्वमन्यत्परित्यज्येत्यादौ श्रुतिभिरन्यथा ।
उपात्तत्वाद्भवद्भिर्वा कथमत्रोपपद्यते ॥ १६

कर्मकाण्डोक्तकर्मभ्यो वाच्यं प्राबल्यमेव हि ।
ब्रह्मकाण्डस्य काचाश्मरत्नयोरिव यत्तयोः ॥ १७

अङ्गाङ्गित्वस्य चोक्तत्वाज्ज्ञानप्राबल्यवादतः ।
न कर्मणा न प्रजया धनेनेत्यादिवाक्यतः ॥ १८

ज्ञानैकनाश्यता पाशस्येत्येवं च व्यवस्थिते ।
न कर्मकाण्डवैयर्थ्यात्तद्दृष्टान्तपुरस्सरम् ॥ १९

श्रुतिमात्रस्य वैयर्थ्यानुमितौ वेदमूलता ।
न वक्तव्येति प्रक्रान्तक्रमभङ्गः समापतत् ॥ २०

न क्वचिद्वेदभागस्य वेदमात्राप्रमाणताम् ।
किन्तु वच्मः कर्मकाण्डाज्ज्ञानकाण्डस्य मुख्यताम् ॥ २१

तत्रापि वीरशैवानां तत्र दृष्टान्त उच्यते ।
रत्नापणे निविष्टानां विविधानां क्रमेण हि ॥ २२

काचमुक्तामरकतप्रभृतीनां यथा पुनः ।

[1]क्रियाधिकारानुगुणं दर्शयेत्तदतिक्रयम् ॥ २३

ग्रहीतारः स्वासामर्थ्यानुगुण्येनैव केवलम् ।
गृह्णन्ति नैव चान्यस्य दूषणायैव कल्पते ॥ २४

एवं सामान्यतो वेदप्रामाण्ये सति तत्पुनः ।
स्वाधिकारानुसारेण वैदिकेषु प्रवर्तते ॥ २५

क्रमसोपानमार्गेषु त्रयाणामथवा द्वयोः ।
अतिक्रमेण चारूढे सोपानोत्पाटनं न हि ॥ २६

कुर्वन्ति तद्वदेवात्र सर्वेषां च प्रमाणता ।
तर्हि शैवः क्वचिद्वापि सर्वकर्माणि यत्नतः ॥ २७

अनुतिष्ठेत्प्रमाणं चेदित्येवं नावलम्ब्यताम् ।
राजा धनी वा लोकेषु सत्सु रत्नेषु भूरिशः ॥ २८

अल्पक्रयं मणिं धत्ते तावता तन्न दुष्यति ।
एवं प्रमाणं वेदाश्चेत्यास्तां किं विस्तरेण तु ॥ २९

अत्र सैद्धान्तिकीयं मे सरणिर्दर्शयिष्यते ।
सर्ववेदान्तवाक्यानां सर्वज्ञे सर्वशक्तिके ॥ ३०

लिङ्गे जगदुपादाने निमित्ते परमेश्वरे ।
आद्योपदेशे [2]कथितो वाच्यवाचकयोर्बलात् ॥ ३१

[3]समन्वयो दर्श्यतेऽत्र लिङ्गाङ्गैक्यस्य दर्शनात् ।
तस्य स्मृतिविरोधेन सावकाशत्वदोषतः ॥ ३२

तद्बाधपरिहाराय द्वितीयोऽध्याय इष्यते ।
परं जगदुपादानमिति वेदा वदन्ति हि ॥ ३३

स्मृतिः प्रधानं वदतीत्येतदन्यतरत्तदा ।
बाधितव्यं विरोधेन तयोः कस्येति संशयः ॥ ३४

तत्रानुष्ठेयधर्मादौ सावकाशश्रुतिः स्मृता ।
स्मृतिर्निरवकाशा स्यात्तत्रैव प्रतिपादिका ॥ ३५

---

[1] क्रियाधिकारानुगुणं दर्शयेत्तदपि क्रयी–पा. [2] कथितं-पा. [3] समन्वये दर्शिते–पा.

तस्मात्स्मृत्या श्रुतेर्बाधो युक्त इत्यब्रवीन्मुनिः ।
आर्षप्रत्यक्षयोगेन जगत्कारणमेव तत् ॥ ३६
इति निश्चित्य तदनुस्मृतिमाशु चकार सः ।
ततः प्रत्यक्षमूलत्वात्स्मृतेः प्राबल्यमत्र हि ॥ ३७
इति चेन्न प्रधानस्य कारणत्वं न युज्यते ।
नानास्मृत्यनुरोधेन नानाहेतुत्वकल्पनात् ॥ ३८
विकल्पानुपपत्तेश्च वस्तुनि श्रुतदोषतः ।
महर्षित्वाविशेषाच्च परस्परविरोधतः ॥ ३९
पौरुषेयतया तासामप्रामाण्यं च न श्रुतेः ।
प्रत्यक्षमानमूलत्वं प्रधानोक्तेस्तदोच्यते ॥ ४०
इतरेषां चानुपलब्धेरित्येवानुशासनात् ।
आर्षदर्शनसम्पन्नैः कणादप्रमुखैः किमु ॥ ४१
तन्नोपलभ्यते तस्मात्प्रधानांशे स्मृतेर्न हि ।
शिवलिङ्गस्य भावस्य विश्वमेतच्चराचरम् ॥ ४२
तदेतन्न विजानन्ति पशवः पाशगौरवात् ।
तमेकमेव बहुधा वदन्ति ब्रह्म शाश्वतम् ॥ ४३
अजानन्तः परं भावमविकल्पं महर्षयः ।
अपरं ब्रह्मरूपं च परं ब्रह्मात्मकं तथा ॥ ४४
केचिदाहुर्महादेवमनादिनिधनं प्रभुम् ।
भूतेन्द्रियान्तःकरणप्रधानाविषयात्मकम् ॥ ४५
अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ।
ब्रह्मत्वाद्बृंहणत्वाच्च ब्रह्मणी ते परापरे ॥ ४६
अनेन ब्रह्मरूपेण ब्रह्मणोऽधिपतेः प्रभोः ।
विद्याविद्यास्वरूपीति कैश्चिदीशो निगद्यते ॥ ४७
विद्येति चेतनां प्राहुस्तथाविद्यामचेतनाम् ।
विद्याविद्यात्मकं चैतद्विश्वं विश्वगुरोर्विभोः ॥ ४८

रूपमेव न सन्देहो विश्वं तस्य वशे यतः ।
भ्रान्तिर्विद्या परं चेति शार्वं रूपं परे विदुः ॥ ४९

अयथाबुद्धिरर्थेषु बहुधा भ्रान्तिरुच्यते ।
यथात्माकारसम्पत्तिर्विद्येति परिकीर्त्यते ॥ ५०

विकल्परहितं तत्त्वं परमित्यभिधीयते ।
तत्रेदं शाङ्करं रूपं तदाज्ञाधिष्ठितं यतः ॥ ५१

सदसद्रूप इत्याहुस्सदसत्पतिरित्यपि ।
सत्ये साधौ च सच्छब्दः सद्भिरेव प्रयुज्यते ॥ ५२

विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः ।
सच्चासच्च जगद्विश्वं शरीरं परमेष्ठिनः ॥ ५३

यदिदं सदिति प्रोक्तं यच्चासदिति कथ्यते ।
तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते ॥ ५४

क्षराक्षरात्मकं प्राहुः [1] क्षराक्षरपरं परे ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ५५

उभे ते परमेशस्य रूपं तस्य वशे यतः ।
तयोः शिवः परः शान्तः क्षराक्षरपरः स्मृतः ॥ ५६

समष्टिव्यष्टिरूपं च समष्टिव्यष्टिकारणम् ।
वदन्ति मुनयः केचिच्छिवं परमकारणम् ॥ ५७

समष्टिं विदुरव्यक्तं व्यष्टिं व्यक्तं तथैव च ।
ते रूपे परमेशस्य तदिच्छामनुवर्तनात् ॥ ५८

तयोः कारणभावेन शिवलिङ्गं परात्परम् ।
कारणार्थविदः प्राहुः समष्टिव्यष्टिकारणम् ॥ ५९

जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः ।
यत्पिण्डेष्वनुवर्तेत सा जातिरिति कथ्यते ॥ ६०

---

[1] क्षराक्षरपरं पा.

व्यक्तिव्यावृत्तरूपं तत्पिण्डं जातेः समाश्रयः ।
व्यक्तयो जातयश्चैव तदाज्ञापरिपालिताः ॥ ६१
यतस्ततो महादेवो जातिव्यक्तिवपुः स्मृतः ।
प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः ॥ ६२
प्रधानं प्रकृतिं प्राहुः क्षेत्रज्ञं पुरुषं तथा ।
त्रयोविंशतितत्त्वानि व्यक्तमाहुर्मनीषिणः ॥ ६३
कालकार्यप्रपञ्चस्य परिणामैककारणम् ।
एषामीशः शिवो धाता प्रवर्तकनिवर्तकः ॥ ६४
प्रादुर्भावतिरोभावहेतुरेकः स्वराडजः ।
तस्मात्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥ ६५
हेतुर्नोऽधिपतेस्तेषां धाता भोक्ता महेश्वरः ।
विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥ ६६
हिरण्यगर्भो लोकानां हेतुर्विश्वेश्वरो विराट् ।
अन्तर्यामी परश्चेति कथ्यते कविभिः शिवः ॥ ६७
प्राज्ञतैजसविश्वात्मेत्यपरे सम्प्रचक्षते ।
माता मानं च मेयं च मतिमाहुरथापरे ॥ ६८
कर्ता क्रिया च कार्यं च करणं कारणं परे ।
जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे सम्प्रचक्षते ॥ ६९
तुरीयमपरे प्राहुस्तुरीयातीतमित्यपि ।
केचित्संसारिणं प्राहुस्तमसंसारिणं परे ॥ ७०
स्वतन्त्रमपरे प्राहुरस्वतन्त्रं परे विदुः ।
घोरमित्यपरे प्राहुः सौम्यमित्यपरे विदुः ॥ ७१
तमाहुर्निर्गुणं केचिद्गुणवन्तं परे विदुः ।
रागवन्तं परे प्राहुर्वीतरागं तथा परे ॥ ७२
निष्क्रियं तं परे प्राहुः सक्रियं तं परे जनाः ।
निरिन्द्रियं परे प्राहुः सेन्द्रियं च तथापरे ॥ ७३

ध्रुवमित्यपरे प्राहुस्तमध्रुवमथापरे ।
अरूपं केचिदाहुर्वै रूपवन्तं परे विदुः ॥ ७४
दृश्यमित्यपरे प्राहुस्तमदृश्यमितीतरे ।
वाच्यमित्यपरे प्राहुस्तमवाच्यमितीतरे ॥ ७५
शब्दात्मकं परे प्राहुः शब्दातीतं तथापरे ।
केचिच्चिन्तामयं प्राहुश्चिन्तया रहितं परे ॥ ७६
ज्ञानात्मकं परे प्राहुर्विज्ञानामिति चापरे ।
केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन ॥ ७७
केचिदेकं तमेवाहुरनेकमिति चापरे ।
एवं विकल्प्यमानेषु याथार्थ्यं परमेशितुः ॥ ७८
नाध्यवस्यन्ति मुनयो नानाप्रत्ययकारणात् ।
ये पुनः सर्वभावेन प्रपन्नाः परमेश्वरम् ॥ ७९
ते विजानन्त्ययत्नेन शिवं परमकारणम् ।
यावत्पश्यो नैष पश्यत्यनीशं
कविं पुराणं भुवनस्येशितारम् ।
तावद्दुःखे वर्तते बद्धपाशः
संसारेऽस्मिन् चक्रनेमिक्रमेण ॥ ८०
यदा पश्यः पश्यति रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परममुपैति साम्यम् ॥ ८१
न शिवस्याणवो बन्धः कार्मो मायेय एव च ।
प्राकृतो वाथ बौद्धो वाप्यहङ्कारात्मकस्तथा ॥ ८२
नैवास्य [1] मानसो बन्धो न चैत्तो नेन्द्रियात्मकः ।
न च तन्मात्रबन्धोऽस्य भूतबन्धो न कश्चन ॥ ८३

[1] मनसो—पा.

नच कालः कला चैव न विद्या नियतिस्तथा ।
न रागो न च विद्वेषः शम्भोरभिततेजसः ॥ ८४
नचाप्यभिनिवेशोऽस्य कुशलाकुशलान्यपि ।
कर्माणि तद्विपाकाश्च सुखदुःखे न तत्फले ॥ ८५
आशया नास्य सम्बन्धः संसारैः कर्मणामपि ।
भोगैश्च भोगसंस्कारैः कालत्रितयगोचरैः ॥ ८६
न तस्य कारणं कर्ता नादिरन्तस्तथान्तरम् ।
न कर्मकरणं वापि नाकार्यं कार्यमेव च ॥ ८७
नास्य बन्धुरबन्धुर्वा नियन्ता प्रेरकोऽपि वा ।
न पतिर्न गुरुस्त्राता नाधिको न समस्तथा ॥ ८८
न जन्ममरणे तस्य नाकाङ्क्षितमकाङ्क्षितम् ।
न विधिर्न निषेधश्च न मुक्तिर्नच बन्धनम् ॥ ८९
नास्ति यद्यपि कल्याणं तत्तदस्य कदाचन ।
कल्याणं सकलं चास्ति परमात्मा शिवो यतः ॥ ९०
स शिवः सर्वमेवेदमधिष्ठाग स्वशक्तिभिः ।
अप्रच्युतस्स्वतो भावात्स्थितः स्थाणुरतः स्मृतः ॥ ९१
शिवेनाधिष्ठितं यस्माज्जगदेतच्चराचरम् ।
सर्वरूपस्थितः शर्वस्तथा ज्ञात्वा न मुह्यति ॥ ९२
सर्वो रुद्रो नमस्तस्मै पुरुषः स परो महान् ।
हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः ॥ ९३
अम्बिकापतिरीशानः पिनाकी वृषवाहनः ।
एको रुद्रः परं ब्रह्म पुरुषः कृष्णपिङ्गलः ॥ ९४
वालाग्रमात्रो हृन्मध्ये ध्येयोऽयं दहरान्तरे ।
हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च ॥ ९५
योऽवसर्पत्यसौ देवो नीलग्रीवो हिरण्मयः ।
साम्याऽघोरस्तथा मिश्रश्चाक्षरश्चामृतोऽव्ययः ॥ ९६

न पुंविशेषः परमो भगवानन्तकान्तकः ।
चेतनाचेतनामुक्तः प्रपञ्चाच्च परात्परः ॥ ९७
लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते ।
शिवेनातिशयत्वेन स्थितिं प्राहुर्मनीषिणः ॥ ९८
प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ।
उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ ९९
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥ १००
शुद्धा स्वाभाविकी तस्य शक्तिः सर्वातिशायिनी ।
ज्ञानमप्रतिमं नित्यं वपुरत्यन्तनिर्मलम् ॥ १०१
ऐश्वर्यमप्रतिद्वन्द्वं सुखमात्यन्तिकं बलम् ।
तेजः प्रभावो वीर्यं च क्षमा कारुण्यमेव च ॥ १०२
परिपूर्णस्य सर्गाद्यैर्नात्मनोऽस्ति प्रयोजनम् ।
परानुग्रह एवास्य फलं सर्गस्य कर्मणः ॥ १०३
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ।
शिवरुद्रादिशब्दानां प्रणवोऽतिपरः स्मृतः ॥ १०४
शम्भोः प्रणववाच्यस्य भावनात्तज्जपादपि ।
या सिद्धिः सा परा प्राप्या भवत्येव न संशयः ॥ १०५
तस्मादेकाक्षरं लिङ्गमाहुरागमपारगाः ।
वाच्यवाचकयोरैक्यं मन्यमाना यशस्विनः ॥ १०६
अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि ।
अकारश्चाप्युकारश्च मकारो नाद एव च ॥ १०७
अकारं बह्वृचं प्राहुरुकारो यजुरुच्यते ।
मकारः साम नादस्तु श्रुतिराथर्वणी श्रुता ॥ १०८
अकारस्तु महद्बीजं रजस्स्रष्टा चतुर्मुखः ।
उकारः प्रकृतिर्योनि[1]स्सत्त्वं पालयिता हरिः ॥ १०९

---

[1] स्तत्त्वं-पा.

मकारः पुरुषो बीजी तमस्संहारको हरः ।
नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥ ११०
एवं तिसृभिरेताभिर्मात्राभिर्निखिलं त्रिधा ।
अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ॥ १११
यस्मात्परं नापरमस्ति किञ्चि-
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ११२
शक्तिः स्वाभाविकी तस्य वेद्या विश्वविलक्षणा ।
एकानेकस्वरूपेण भाति भानोरिव प्रभा ॥ ११३
अनन्ताः शक्तयस्तस्य चेच्छाज्ञानक्रियादयः ।
मायाद्याश्च भवेद्वह्नेर्विस्फुलिङ्गा यथा तथा ॥ ११४
सदाशिवेश्वराद्याश्च विद्याविद्येश्वरादयः ।
अभवन् पुरुषाश्चान्या प्रकृतिश्च परात्परा ॥ ११५
महदादिविशेषान्तास्त्वजाद्याश्चापि मूर्तयः ।
यच्चान्यदपि तत्सर्वमस्याः कार्यमितीरितम् ॥ ११६
सा शक्तिः सर्वगा सूक्ष्मा प्रबोधानन्दरूपिणी ।
शक्तिमानुच्यते देवः शिवः शीतांशुभूषणः ॥ ११७
वेद्यः शिवः शिवा विद्या प्रज्ञा चैव श्रुतिः स्मृतिः ।
धृतिरेषा स्थितिर्निष्ठा ज्ञानेच्छा कर्मशक्तयः ॥ ११८
आज्ञा चैवं परं ब्रह्म वैविध्ये च परापरे ।
शुद्धविद्या शुद्धकला सर्वं शक्तिकृतं यतः ॥ ११९
[1]सा माया प्रकृतिर्जीवो विकारो विकृतिस्तथा ।
न सन्नासच्च यत्किंचित्तया सर्वमिदं ततम् ॥ १२०

[1] न–पा.

सा देवी मायया सर्वं ब्रह्माद्यं सचराचरम् ।
मोहयत्यप्रयत्नेन मोचयत्यपि लीलया ॥ १२१
अनया सह सर्वेशः सप्तविंशप्रकारया ।
विश्वं व्याप्य स्थितस्तस्मान्मुक्तिस्तत्र प्रवर्तते ॥ १२२
श्रुतिस्मृतिषु सर्वत्र पुराणेष्वागमेषु च ।
बहुधोल्लिखिताः पक्षास्तर्केण वचसा श्रुतेः ॥ १२३
तस्मात्सिद्धान्तपन्थानमाश्रित्य ब्रह्मवादिनः ।
सूत्राणां वेदशिरसामैकार्थ्यं प्राप्यमादरात् ॥ १२४
लिङ्गाङ्गसामरस्यार्थे प्रवृत्ते वेदमूर्धनि ।
लिङ्गे ब्रह्मणि सर्वत्र ह्यन्वयो निश्चितो ध्रुवम् ॥ १२५

[एतेन योग इत्यादिसूत्रार्थविचारः]

अप्रामाण्ये तु साङ्ख्यस्य स्मृतेर्योगस्मृतेः परम् ।
प्रामाण्यमुररीकार्यं श्रोतव्येति विधानतः ॥ १२६
तां योगमिति वाक्येन वेदचिह्नस्य दर्शनात् ।
योगस्मृत्या प्रधानस्य कारणत्वस्य निश्चयात् ॥ १२७
ब्रह्मकारणतावादी लिङ्गाङ्गैक्यान्वयः परे ।
इति चेत्पौरुषेयत्वभ्रान्तिदोषकलङ्कतः ॥ १२८
अपौरुषेयया श्रुत्या बाधो युक्तः स्मृतेर्ध्रुवम् ।
ध्यानाद्यंशे स्मृतेस्तस्याः प्रामाण्यं न्यायगौरवात् ॥ १२९
श्रवणं मननं ध्यानं श्रुतिस्मृत्यागमेषु च ।
ऐककण्ठ्येन सर्वत्र योगोऽयं प्रतिपादितः ॥ १३०
योगो नाम हि सम्बन्धो जीवात्मपरमात्मनोः ।
ध्यानयोगेति वाक्येन ध्याननिष्ठा उदाहृताः ॥ १३१
लिङ्गं जीवः परं लिङ्गं सामरस्यं तयोः शुभम् ।
योग इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥ १३२

वालाग्रमात्रं विश्वेशं जातवेदस्स्वरूपकम् ।
हृत्पद्मकर्णिकामध्ये ध्यात्वा धार्यं मुमुक्षुभिः ॥ १३३
सर्वज्ञं सर्वकर्तारं समस्ताधारमद्भुतम् ।
प्रणवेनावृतं लिङ्गं प्रणवार्थं परात्परम् ॥ १३४
सर्वस्य जगतः साक्षात्सृष्टिस्थित्यन्तकारणम् ।
उमासहायं कल्याणं नीलकण्ठं त्रिलोचनम् ॥ १३५
प्रशान्तं प्रभुमीशानं धारयेद्धृदयाम्बुजे ।
ब्रह्म यत्सच्चिदानन्दं परिपूर्णं च सर्वतः ॥ १३६
सर्वत्र दृश्यते नैव करणागोचरत्वतः ।
दृश्यते तच्छरीरेऽस्मिन् तस्माद्ब्रह्मपुरं च तत् ॥ १३७
तस्मिंस्तु कमलाभं यद्दहरं हृदयाम्बुजे ।
दहरं पुण्डरीकाख्यं वेश्म प्रोक्तं मनीषिभिः ॥ १३८
तस्मिन्नन्तःस्थितं ब्रह्म तेन वेश्मेति कीर्तितम् ।
तद्वेश्म वर्तते देहे तेन देहः पुराभिधः ॥ १३९
यदस्मिन् वर्तते लिङ्गं पुण्डरीकाख्यवेश्मनि ।
वियत्प्रमाणरूपत्वादाकाशाख्यं च तद्भवेत् ॥ १४०
कल्याणगुणरत्नानां निधिमव्ययमद्भुतम् ।
आत्मा तु देहे सर्वत्र वर्तमानोऽपि शङ्करः ॥ १४१
अतीव हृदये त्वस्य प्रकाशो नेतरे तथा ।
अहंशब्दाभिधो ह्यात्मा न विवादोऽत्र कस्यचित् ॥ १४२
अहंशब्दं प्रयुञ्जानो लोकः सर्वोऽपि दृश्यते ।
हृदयं निर्दिशत्येव ह्यहं तत्र स्थितस्ततः ॥ १४३
यतोऽस्य हृदये नित्यं प्रकाशोऽतीव विद्यते ।
न तथान्यत्र तस्माच्च हृदयं हि विशिष्यते ॥ १४४
तस्माद्धृदम्बुजे धार्यं लिङ्गमाद्यं पुरातनम् ।
अतिवर्णाश्रमी सोऽयं साक्षान्मोक्षैकभाजनम् ॥ १४५

अयमेव हि योगोऽत्र सर्वशास्त्रार्थसम्मतः ।
योगस्मृतेस्तदंशे तु प्रामाण्यं नेतरत्र च ॥ १४६

[न विलक्षणत्वादित्यादिसूत्रार्थविचारः]

[1]यत्तु साङ्ख्योक्ततर्केण विरोधो ह्युपपादितः ।
यद्यद्विलक्षणं सर्वं न तत्प्रकृतिकं विदुः ॥ १४७
रुचकाद्या यथा सर्वे न मृत्प्रकृतिकाभवन् ? ।
विमतं च जगत्सर्वं ब्रह्मोपादानकं न हि ॥ १४८
श्रुतिरैतिह्यमात्रत्वाद्दुर्बला तर्कतो भवेत् ।
तस्मात्तर्काच्छ्रुतेर्बाधाज्जगन्न ब्रह्महेतुकम् ॥ १४९
जगतोऽचेतनत्वं तु विज्ञानं चेति वाक्यतः ।
ब्रह्मणश्चेतनत्वं तु यः सर्वज्ञेति वाक्यतः ॥ १५०
जगद्विलक्षणं ब्रह्म कथं ननु न हेतुकम् ।
अपाणिपादतावाक्याच्चेतनत्वस्य निश्चयात् ॥ १५१
भोक्तॄणामपि भोग्यानां वैलक्षण्यं विलोकितम् ।
श्वभ्य इत्यादिवाक्यानामधिष्ठानपरत्वतः ॥ १५२
बाधो दृढीकृतस्तस्माज्जगन्न ब्रह्महेतुकम् ।
इति प्राप्ते दृश्यते तु यदुक्तं तन्मृषा भवेत् ॥ १५३
अचेतनाच्चेतनानामुत्पत्तिः श्रूयते श्रुतौ ।
चेतनाद्वाऽचेतनानामिष्यते श्रुतिसूत्रयोः ॥ १५४
यथा केशा वृश्चिकाद्याः पुरुषाद्गोमयात्तथा ।
सर्वात्मना प्रागसत्त्वे ह्यसत्कार्यं तदा भवेत् ॥ १५५
कार्यात्मना निषेधो हि न तावत्कारणात्मना ।
सत्त्वान्नासत्कार्यवादस्ततोऽत्राकारणात्मना ॥ १५६

---

[1] यस्तु—पा.

परपक्षेऽपि दोषोऽयं तुल्यश्चायं भविष्यति ।
शब्दहीनात्प्रधानाद्धि शब्दवत्कार्यनिश्चयात् ॥ १५७
ननु दृष्टान्तभावाच्च यथा वृक्षादयः श्रुताः ।
तथा स्वपक्षदोषाच्च न साङ्ख्यस्यावकाशता ॥ १५८
यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ १५९
तर्केण प्रत्यवस्थानं श्रुत्युक्तेऽर्थे न रोचते ।
तर्काणामप्रतिष्ठानां शुष्काणामन्यथा भवेत् ॥ १६०
अभियुक्तैः कैश्चिदत्र कैश्चिदन्यैर्निरूपितः ।
अभियुक्ततरैरन्यैराभासीक्रियते तथा ॥ १६१
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १६२
तर्काप्रतिष्ठितत्वं हि तर्केणैव निवार्यते ।
केचित्तर्काः प्रतिष्ठाप्याः केचित्तर्काः प्रतिष्ठिताः ॥ १६३
सर्वतर्काप्रतिष्ठाने दोषलेशो न चाभवत् ।
इदं तर्काप्रतिष्ठत्वं न सिध्येत्तर्कनिर्णये ॥ १६४
भोजनादौ यथा तर्कमूलत्वमिति चेन्नहि ।
अनिर्मोक्षप्रसङ्गेन लौकिकस्तर्कसङ्ग्रहः ॥ १६५
युक्तोऽपि कारणे युक्त्या पूर्वदोषो[1] हि दृश्यते ।

[एतेन शिष्टेत्यादिसूत्रार्थविचारः]

शिष्टापरिग्रहाः सर्वे व्याख्यातास्तेन कारणे ॥ १६६

[भोक्त्रापत्तेरित्यादिसूत्रार्थविचारः]

भोक्त्रापत्तेरप्यविभागश्चेत्स्याल्लोकवद्ध्रुवम् ।
ब्रह्मात्मना भोक्तृभोग्यभोगानां लोकवद्यथा ॥ १६७

---

[1] न–पा.

अभेदेऽपि स्वरूपेण विभागो निश्चितः परः ।
अभेदः कारणात्तस्मात्कार्यस्याध्यवसीयते ॥ १६८

[तदनन्यत्वमित्यादिसूत्रार्थविचारः]

तदारम्भण[1]शब्दादीत्युक्त्या तन्निश्चयस्तथा ।
स भावे चोपलब्धेश्च स सत्त्वा[2]च्चावरस्य च ॥ १६९
असद्व्यपदेशन्नेति वाक्यशेषात्स निश्चितः ।
धर्मान्तरे तद्वाक्यं च तदर्थे पर्यवस्यति ॥ १७०
युक्तेः शब्दान्तराच्चात्र पटवच्च तथा भवेत् ।

[इतरव्यपदेशादित्यादिसूत्रार्थविचारः]

इतरव्यपदेशाद्धि सूत्रेणापि स निश्चितः ॥ १७१
अधिकं भेदनिर्देशं ब्रह्मसृष्टौ तु नेतरत् ।
अश्मादिवच्च तदनुपपत्तिर्दृश्यते यतः ॥ १७२

[उपसंहारेत्यादिसूत्रार्थविचारः]

उपसंहारसूत्रेण ब्रह्मणः परिणामिता ।
अङ्गीकृतप्रपञ्चस्य क्षीरवद्धीति निश्चयः ॥ १७३

[कृत्स्नप्रसक्तिरित्यादिसूत्रार्थविचारः]

कृत्स्नप्रसक्तिसूत्रेण स एव प्रतिपादितः ।
तथा हि परिणामः किं कात्स्न्र्येनांशेन वा भवेत् ॥ १७४
कात्स्न्र्येन परिणामश्चेद्ब्रह्माभावः प्रसज्यते ।
अंशेन परिणामश्चेद्ब्रह्म सावयवं भवेत् ॥ १७५
तदर्थकश्रुतिः कुप्येन्निष्क्रियं निष्कलं त्विति ।
पूर्वरूपपरित्यागे[3]नान्यरूपसमुद्भवः ॥ १७६
तथा सति जडं ब्रह्म स्यान्नस्यादजडं पुनः ।
श्रुतेस्तु शब्दमूलत्वाद्ब्रह्मणो जगदात्मना ॥ १७७

---

[1] शब्दादिभ्योक्त्या–पा. [2] च्चापरस्य–पा. [3] नास्य रूपसमुद्भवः–पा.

[1]परिणामोऽजडं ब्रह्म पृथगेवेति गीयते ।
उक्त्वा तेजोऽबन्नसृष्टिं तत्सेयं देवतैक्षत ॥ १७८
हन्ताहमिति वाक्येन तेजोऽबन्नत्रयं विना ।
उक्तत्वादीक्षितृत्वेन देवतायाश्च शब्दतः ॥ १७९
अङ्गीकार्यं यथा शब्दं देवतावस्थितिः पृथक् ।
प्रयोजनं न तर्केण श्रुत्वा यत्र विधीयते ॥ १८०
श्रुतेस्तु शब्दमूलत्वाद्देवादिवदपीष्यते ।
आत्मकृतेश्च सूत्रेण परिणामोऽत्र निश्चितः ॥ १८१
एवं स्वपक्षदोषाच्च स एव सुदृढीकृतः ।

[सर्वोपेतेत्यादिसूत्रार्थविचारः]

देवानां परिणामोऽत्र शक्तियोगान्ननु श्रुतौ ॥ १८२
न ब्रह्मणस्ततः सूत्रं सर्वोपेतेति दर्शितम् ।
नन्वेवमपि देवानां स्रष्टृत्वं करणैर्यतः ॥ १८३
ब्रह्मणोऽकरणत्वेन नेति चेदुक्तमेव तत् ।
करणत्वान्नेति चेत्तदत्रैवानुपदं यतः ॥ १८४

[न प्रयोजनेत्यादिसूत्रार्थविचारः]

[2]न प्रयोजनवत्त्वात्तद्ब्रह्मणो न तथेति चेत् ।
लोकवत्त्विति सूत्रेण [3]यथा राज्ञां तथाऽभवत् ॥ १८५

[वैषम्येत्यादिसूत्रार्थविचारः]

वैषम्यं निर्घृणत्वं च ब्रह्मणो नैव युज्यते ।
तस्मात्कथं ब्रह्मणस्तदिति चेदुत्तरत्र च ॥ १८६
वैषम्येति च सूत्रेण परिहारः प्रदर्श्यते ।
तत्र सन्दिग्धदोषेऽपि न ब्रह्मेति च सूत्रतः ॥ १८७
उपपद्यत इत्यादि सूत्रेणापि समर्थितम् ।

---

[1] परिणामजडं–पा. [2] सप्रयोजन–पा. [3] परिणामोऽत्र निश्चितः–पा.

[सर्वधर्मेत्यादिसूत्रार्थविचारः]

सर्वधर्मोपपत्तेश्च साक्षित्वं ब्रह्मणोऽभवत् ।। १८८
तस्माच्छक्तिविशिष्टं तद्ब्रह्मैकं शाश्वतं परम् ।
उपादानं निमित्तं च ब्रह्मैवेति प्रदर्शितम् ।। १८९
आत्मलिङ्गेत्यादिवाक्यैर्यन्निर्णीतं मनीषिभिः ।
विचारितं तदेवात्र श्रुतिस्मृत्युपबृंहणः ।। १९०
आस्माकीनार्थसिद्धान्तसरणिः सम्प्रदर्श्यते ।
यदुक्तं परिणामांशे तदग्रे विस्तरान्मया ।। १९१

इति द्वितीयाध्याये प्रथमः पादः

— ——

द्वितीयाध्याये द्वितीयः पादः

ब्रह्मकारणतावादे साङ्ख्याद्यैर्दूषणं च यत् ।
पुरस्तात्तत्परिहृतमधुना तेषु दूषणम् ।। १९२
क्रियते तत्र प्रेक्षावत्प्रवृत्तिर्न भवेदिति ।
एवं हि साङ्ख्या मन्यन्ते ये विकारा यदन्विताः ।। १९३
दृष्टास्ते तत्प्रकृतिका यद्धटाद्या यदान्विताः ।
यथा ते मृत्प्रकृतिका एवमेवाखिलं जगत् ।। १९४
सुखदुःखाद्यन्वितं च तादृक्प्रकृतिकं भवेत् ।
यद्यत्सुखादिसामान्यात्मकं तत्त्रिगुणं भवेत् ।। १९५
ये वै परिमिता भावास्ते वै संसर्गपूर्वकाः ।
यथाङ्कुरादयस्तद्वदेतत्परिमितं जगत् ।। १९६
सत्त्वं रजस्तमश्चैतत्त्रयं संसर्गपूर्वकम् ।
कार्यकारणभावेन प्रधानमनुमीयते ।। १९७

[रचनानुपपत्तेरित्यादिसूत्रार्थविचारः]

जगतः कारणं ब्रह्म चैतन्यानन्वयाज्जडे ।
न प्रधानं जगद्धेतू रचनानुपपत्तितः ॥ १९८
प्रासादशय्यारचना प्रज्ञावच्छिल्पिकर्तृका ।
नाचेतनैस्तु पाषाणै रचनीयमिदं जगत् ॥ १९९
नानाकर्मोपभोगानां स्थानं ब्राह्मं च विग्रहः ।
सम्भावितैः शिल्पिभिर्वा [1] मनसाचिन्त्यभेदवान् ॥ २००
अचिन्त्यशक्तिविभवसर्वज्ञेश्वरनिर्मितम् ।
नाचेतनप्रधानेन तथेत्युक्ताप्यदर्शनात् ॥ २०१
समुच्चिनोति वै शब्दः अन्वयानुपपत्तिकाम् ।
कल्पनाया अथ न हि भावास्ते च घटादयः ॥ २०२
सुखदुःखान्विता दृष्टाः सुखादेरान्तरत्वतः ।
बाह्यत्वाच्च घटादीनां सुखहेतुत्वदर्शनात् ॥ २०३
संसर्गपूर्वकत्वा[2]नुभूतेः परिमितत्वतः ।
तदानैकान्तिकं सत्त्वादीनां परिमितावपि ॥ २०४
संसर्गपूर्वकत्वस्याभावाच्चापि प्रवृत्तितः ।
प्रधानस्याचेतनस्य चेतनाधिष्ठितस्य च ॥ २०५
प्रवृत्तिर्नोपपन्ना हि तथा लोकेष्वदर्शनात् ।
चेतनाधिष्ठितरथे प्रवृत्तिर्नैव केवले ॥ २०६
औदासीन्याभ्युपगमात्पुरुषो न प्रवर्तकः ।
अचेतनमपि क्षीरं वत्सवृद्ध्यै प्रवर्तते ॥ २०७
स्वयं लोकोपकाराय स्यन्दते च नदीजलम् ।
नैवं [3] तत्र व्यपेक्षायाः सत्ता श्रुत्यापि दर्शिता ॥ २०८
योऽप्सु तिष्ठन्निति ततो व्यतिरेकानवस्थितेः ।
प्रधानं नाम साङ्ख्यानां सत्त्वादीनां समानता ॥ २०९

---

[1] मनसाचिन्त्यभेदवत्–पा. [2] त्वानुमानं–पा. [3] तत्राप्यपेक्षयाः–पा.

नैव तद्व्यतिरेकेण प्रधानस्य प्रवर्तकम् ।
निवर्तकं वा यत्किञ्चिदुदासीनस्तु पूरुषः ॥ २१०
नैव प्रवर्तको नापि निवर्तक इति स्मृतः ।
ततस्तदनपेक्षत्वात्सर्गः स्यात्सर्वदा पुनः ॥ २११
प्रलयो न कदाचित् स्यान्न प्रधानमतो भवेत् ।
उपयुक्तं तृणजलं स्वयमेव पयो यथा ॥ २१२
स्वयमेव प्रधानं च महदाद्याकृतिं व्रजेत् ।
नैवं तृणादि नमते स्वयं क्षीरात्मना पुनः ॥ २१३
अन्यत्र तु तथाभावाल्लोके ह्यनडुदादिभिः ।
उपयुक्ततृणादीनि क्षीरतां यान्ति किं पुनः ॥ २१४
किन्तु धेन्वैवोपयुक्तं प्रवृत्तिरथवा भवेत् ।
न तथापीह युज्येत यतो नास्ति प्रयोजनम् ॥ २१५
प्रवृत्तेरभ्युगमेप्यन्तरेण प्रयोजनम् ।
प्रवृत्तिः पुरुषार्थाय प्रतिज्ञाभङ्गसम्भवात् ॥ २१६
अतः प्रयोजनं वाच्यं न प्रधानस्य युज्यते ।
अचेतनत्वात्तस्याथ पुरुषस्य भवेद्यदि ॥ २१७
भोगो वाप्यपवर्गो वा चोभयं वेति संशयः ।
नानादेयाद्यतिशये पुरुषे भोगसम्भवः ॥ २१८
अनिर्मोक्षप्रसङ्गश्च नापवर्गोऽपि वै पुनः ।
अपवर्गस्य सिद्धत्वान्नित्यमुक्तो हि पूरुषः ॥ २१९
नोभयार्थविरोधान्न पर्यायेणोभयार्थता ।
भोक्तव्यार्थस्य चानन्त्याद्भोगापरिसमाप्तितः ॥ २२०
अपगर्वासिद्धिरेव नचौत्सुक्यनिवृत्तये ।
प्रवृत्तिर्हि तदौत्सुक्यं धर्मो यच्चेतनस्य तत् ॥ २२१
न प्रधाने सम्भवति न प्रवृत्तिरथो भवेत् ।
कश्चिद्दृक्छक्तिसम्पन्नः प्रवृत्तौ शक्तिवर्जितः ॥ २२२

पङ्गुं दृक्शक्तिहीनं तु प्रवृत्तौ शक्तिमन्नरम् ।
प्रवर्तयत्यधिष्ठाय यथा कान्तो मणिः स्वयम् ॥ २२३
प्रवृत्तिरहितोऽपि स्यादयसस्तु प्रवर्तकः ।
एवं दृक्शक्तिसम्पन्नः पुरुषस्तु प्रवर्तयेत् ॥ २२४
प्रवृत्तिशक्तिसम्पन्नं प्रधानमिति चेन्न च ।
दोषान्निर्मोक्षविरहादभ्युपेतविरोधतः ॥ २२५
प्रधानस्य स्वतन्त्रस्य प्रवृत्तिरुपवर्ण्यते ।
प्रवर्तकत्वाभावेन पुरुषस्य कथं पुनः ॥ २२६
यदनाधेयातिशयः पुरुषः स्यात्प्रवर्तकः ।
वाग्व्यापारेण चेदन्धं स्वयं पङ्गुः प्रवर्तयत् ॥ २२७
न पुरुषेऽस्ति व्यापारः कान्तश्चेत्सान्निधानतः ।
परिमार्जनतो वा स्यादयसस्तु प्रवर्तकः ॥ २२८
नैव सान्निध्यमात्रेण पुरुषः स्यात्प्रवर्तकः ।
सन्निधिरत्र नित्यत्वात्प्रवृत्तेः सङ्गसम्भवः ॥ २२९
पुरुषोऽश्मादिवदिति न वक्तुं शक्यते ततः ।
अङ्गित्वानुपपत्तेश्च प्रवृत्तिर्न प्रधानके ॥ २३०
साम्येनैवावस्थितानां सत्त्वादीनां परे लये ।
वैषम्यहेत्वभावेन नाङ्गित्वं हि परस्परम् ॥ २३१
वैषम्यं यदि वर्ण्येत तदानीं कारणं विना ।
प्रवृत्तिः सर्वदैव स्यान्नैवं वक्तुं हि शक्यते ॥ २३२
अनन्तरोक्तदोषः स्यान्न तथा चानुमीमहे ।
अनपेक्षस्वभावास्ते कूटस्थाश्च गुणा यदि ॥ २३३
स्वभावश्च तथा तेषां यथा कार्योपपत्तितः ।
गुणवृत्तं चलमिति ततो वैषम्यसम्भवात् ॥ २३४
प्रवृत्तिरुपपद्येतेत्येवं चेदुपवर्ण्यते ।
प्रधानस्याज्ञया शक्त्या योगेन स्वरसेन तु ॥ २३५

रचनानुपपत्त्याद्या दोषास्ते तदवस्थिताः ।
ज्ञशक्तिं च मिमानस्तु वादित्वात्स निवर्तते ॥ २३६

ब्रह्मवादप्रसङ्गाच्च नैतद्युक्तिसहं भवेत् ।
गुणा वैषम्ययोग्यास्तु निमित्ताभावतो लये ॥ २३७

वैषम्यं न भजेयुश्चेन्निमित्ताभावतः पुनः ।
कदाचिदपि वैषम्यं न भजेरन् गुणास्तु ते ॥ २३८

अभावेन निमित्तानां विशेषादेव चेत्ततः ।
[1] अङ्गित्वानुपपत्तिस्तु तदवस्थितमेव तत् ॥ २३९

[विप्रतिषेधादिति सूत्रार्थविवरणः]

परस्परविरुद्धश्च साङ्ख्याभ्युपगमस्त्वयम् ।
क्वचित्सप्तेन्द्रियाण्येवोत्क्रामन्त्येकादश क्वचित् ॥ २४०

क्वचिद्वदन्ति महतः पञ्चतन्मात्रसम्भवम् ।
तथा क्वचिदहङ्कारात्, त्रीण्यन्तःकरणानि च ॥ २४१

क्वचिदेकमिति प्राहुरित्येवं बहुधा पुनः ।
श्रुत्या कारणवादिन्या स्मृत्या चापि परस्परम् ॥ २४२

विरोधात्कापिलं चैतन्मतं तदसमञ्जसम् ।
तथाचैवं प्रधानस्य कारणत्वं निराकृतम् ॥ २४३

[२–२–२ महद्दीर्घाधिकरणे महद्दीर्घवद्वेतिसूत्रार्थः]

इदानीं परमाणूनां कारणत्वं निरस्यते ।
परमाणु[2]श्चतुर्धाऽदौ निश्चलाः प्रलये परे ॥ २४४

पारिमण्डल्यसंज्ञावत्परिमाणेन योगिनः ।
यथास्वंस्पर्शवन्तश्च तिष्ठन्ति परमाणवः ॥ २४५

---

[1] अनित्या—पा. [2] चतुर्थादौनिश्चिते-पा.

पश्चात्तस्मिन् सृष्टिकाले परमेशसिसृक्षया ।
सादृष्टाः सात्मका ज्ञेयाः, संयोगाच्च परस्परम् ॥ २४६
अणुष्वाद्यं भवेत् कर्म कर्मणा तेन चाप्यणुः ।
परमाण्वन्तरयुतो द्वाभ्यां द्वाभ्यां ततः परम् ॥ २४७
संयुक्ताभ्यामणुभ्यां स्यादेकैकं द्व्यणुकं ततः ।
न त्वेकस्मात्तु संयुक्ततन्तूनां दर्शनेन तु ॥ २४८
पटारम्भकतायास्तु तथा मूलेऽपि कारणे ।
तत्र द्वौ परमाणू तु कारणं समवायि च ॥ २४९
तत्संयोगः कारणं स्यात्संज्ञयाऽसमवायि तु ।
अदृष्टादि निमित्तं स्यात्परमाणुगतास्तु ते ॥ २५०
स्पर्शादयो गुणास्तेभ्यो द्व्यणुके तुल्यजातयः ।
स्पर्शादयो गुणा जाताः, 'कारणस्था गुणा यतः ॥ २५१
कार्ये गुणानारभन्त' इति न्यायात्तथा त्रिभिः ।
द्व्यणुकैर्योगसचिवैरेकैकं त्र्यणुकं ततः ॥ २५२
महदारभ्यत इति त्र्यणुकस्थाः पुनर्गुणाः ।
त्र्यणुके स्पर्शमुख्यानां स्मृता आरम्भका इति ॥ २५३
महत्तरं च त्र्यणुकैर्महत्तममिति क्रमात् ।
महान् वायुर्महत्तेजो महापो महती मही ॥ २५४
उत्पद्यन्ते, ब्रह्मणो न जगदुत्पत्तिरुच्यते ।
चैतन्यस्य गुणस्यास्य चैतन्यान्तरहेतुता ॥ २५५
तत्र वैशेषिकैर्ब्रह्मकारणत्वे [1] य उच्यते ।
स दोषोऽनेन सूत्रेण सम्यगेव निवार्यते ॥ २५६
महत्त्ययं न नियमः साधुः सर्वत्र सम्मतः ।
यत्कारणगुणाः कार्ये सजातीयं गुणान्तरम् ॥ २५७

---

[1] यद्--पा.

आरभन्तेऽवश्यमिति, यतश्च परमाणुषु ।
पारिमाण्डल्यसंज्ञस्य द्व्यणुके तादृशस्य तु ॥ २५८
आरम्भानभ्युपगमात्तस्याणुत्वादिदर्शनात् ।
यथा कारणनिष्ठे ये अणुताह्रस्वते उभे ॥ २५९
द्व्यणुकेऽणुत्वह्रस्वत्वे सजातीये न कारणे ।
महत्वं चैव दीर्घत्वं त्र्यणुके दृश्यते यतः ॥ २६०
तथा च कारणस्थानां गुणानामेव कार्यता ।
सजातीयगुणानारम्भकत्वमिति वै स्थितिः ॥ २६१
एवं ब्रह्मगुणस्यापि चैतन्यस्य तु कार्यता ।
चैतन्यान्तरहेतुत्वं सहसा नोपपद्यते ॥ २६२
ब्रह्मप्रपञ्चहेतुत्वे नैव काचिदसङ्गतिः ।
सविशेषगुणानां तु सजातिगुणहेतुता ॥ २६३
परिमाणादिसामान्यगुणानां [1] नेति नोच्यताम् ।
सामान्यत्वं विशेषत्वं गुणानां वादमात्रतः ॥ २६४

[२-२-३. परमाणूनां जगद्कारणत्वाधिकरणे
उभयथाऽपीति सूत्रार्थः]

इदानीं परमाणूनां कारणत्वं निवार्यते ।
प्रलये निश्चलेष्वेषु चायुक्तपरमाणुषु ॥ २६५
संयोगोत्पत्तये चाद्यं कर्म तत्र निमित्तकम् ।
किञ्चिदस्ति न वा, [2] नोचेत् निमित्ताभावतस्तदा ॥ २६६
कर्माभावः तथा[3]द्ये किं निमित्तं दृष्टमेव वा ।
अभिघातप्रयत्नादि किमुतादृष्टमुच्यते ॥ २६७
नाद्यः शरीराभावेन प्रयत्नादेरसंभवात् ।
अदृष्टस्याचेतनत्वान्न कर्मोत्पादनं त्वतः ॥ २६८

---

[1] नोच्यतामिति—पा. [2] नैवं—पा. [3] न्त्ये—पा.

पुरुषोऽजातचैतन्यो जडप्रायो भवेद्यतः ।
ईशज्ञानस्य नित्यत्वात्कर्मोत्पत्तिः सदा भवेत् ॥ २६९
तथा दृष्टवदात्माभ्रसंयोगस्यापि संभवात् ।
आगन्तुकनिमित्तस्याप्यभावाद्यस्य कस्यचित् ॥ २७०
अणुष्वाद्यं न कर्म स्यात्संयोगस्तन्निबन्धनः ।
न स्यात्संयोगाभावेन द्व्यणुकस्तन्निबन्धनः ॥ २७१
तस्मादनुपपन्नः स्यादणोः कारणवादकः ।

[समवायाभ्युपगमाच्चेति सूत्रार्थः]

परमाणोर्हेतुवादे कार्यं यद्द्व्यणुकादिकम् ॥ २७२
अणुभ्यामतिभिन्नं हि समवायाभिधेन च ।
सम्बन्धेन ह्यणुभ्यां तु सम्बद्धं वर्णयन्ति हि ॥ २७३
तद्वर्णनं नोपपन्नं साम्यादप्यनवस्थितेः ।
यथा हि कार्यमत्यन्ताभिन्नत्वात्समवायिना ॥ २७४
सम्बन्धेन तु सम्बद्धं वर्णयन्ति विपश्चितः ।
एवं च समवायस्य समवायित्वतस्तथा ॥ २७५
तस्मादत्यन्तभिन्नत्वाद्भाव्यमन्येन केनचित् ।
सम्बन्धेन तथा तस्य तस्यापीत्यनवस्थितेः ॥ २७६
नन्वयं समवायस्य सम्बन्धैकस्वरूपिणः ।
अनपेक्ष्यान्यसम्बन्धं सम्बध्यत इति भ्रमः ॥ २७७
तथाप्यत्यन्तभेदेऽस्मिन् सम्बन्धस्यात्यपेक्षणात् ।
संयोगस्यान्यथा तस्य समवायानपेक्षणात् ॥ २७८
नच तस्य गुणत्वेन संयोगाद्यनपेक्षणम् ।
गुणद्रव्यव्यवस्थायाः परिभाषणमात्रतः ॥ २७९

[नित्यमेव च भावादिति सूत्रार्थनिरूपणम्]

ते प्रवृत्तिस्वभावाः किं किं निवृत्तिस्वभावकाः ।
अथोभयस्वभावा वा नोभये परमाणवः ॥ २८०

नाद्यः क्षोदक्षमः पक्षः प्रवृत्तेर्नित्यतावशात् ।
आपतेत्प्रलयाभावो न द्वितीयो निवृत्तितः ॥ २८१
सर्गाभावप्रसङ्गाच्च न तृतीयोऽपि युज्यते ।
द्वयोः स्वभावयोस्तत्र विरोधादप्यसंभवः ॥ २८२
न च पक्षस्तुरीयोऽपि विदुषां हृदि रोचते ।
यन्नोभयस्वभावत्वे प्रवृत्तिस्तु निमित्ततः ॥ २८३
अदृष्टादेर्निमित्तस्य सन्निधानेन सर्वदा ।
नित्यं प्रवृत्तिः सज्येत नाणुकारणता ततः ॥ २८४

[रूपादिमत्त्वादिति सूत्रार्थः]

विभज्यमानं यद्द्रव्यं तच्च सावयवं पुनः ।
यतः परं विभागाय नार्हेयुः परमाणवः ॥ २८५
चतुर्विधा रूपवन्तः चतुर्भेदस्य रूपिणः ।
भूतभौतिकजालस्य नित्या आरम्भका इति ॥ २८६
वैशेषिकाणां सिद्धान्त आपाताद्रमणीयकः ।
रूपादिमत्वरागूनामणुत्वं नित्यता द्वयम् ॥ २८७
विपर्येति तथा लोके दृष्टत्वाद्यद्धि रूपवत् ।
स्वकारणापेक्षया तदनित्यं स्थूलमेव च ॥ २८८
यथा पटादि तद्वच्च रूपिणः परमाणवः ।
स्थूला अनित्यास्ते च स्युर्ननु द्रव्यविनाशने ॥ २८९
हेतोरंशविनाशस्य तद्विभागस्य चात्र तु ।
अभावात्परमाणूनां विनाश इति मा वद ॥ २९०
गुणद्रव्यव्यवस्थायाः परिभाषणमात्रतः ।
यथात्रयवनाशादिविरहेऽपि पराणुषु ॥ २९१
रूपादीनां [1]सङ्गतानां वह्निसंयोगनाश्यता ।
संभवेत्परमाणूनां नाशस्तस्मादनित्यता ॥ २९२

[1] तदन्तानां—पा.

[उभयथा च दोषादिति सूत्रार्थः]

गन्धरूपरसस्पर्शगुणा स्थूला मही तथा ।
रसरूपस्पर्शगुणाः सूक्ष्मा आपः समीरिताः ॥ २९३
रूपस्पर्शगुणं सूक्ष्मं परं तेजः प्रदृश्यते ।
स्पर्शसूक्ष्मतया वायुर्भूतान्येतानि वै पुनः ॥ २९४
गुणैरुपचितैश्चापि तथैवापचितैर्गुणैः ।
भूतानि [2]स्थूलसूक्ष्माणि तारतम्यान्वितानि च ॥ २९५
तद्वत्पराणवोऽप्यत्र गुणैरपचितैस्तथा ।
युक्ता गुणैरपचितैः कल्पेरान्निति तार्किकाः ॥ २९६
न वा चोभयथा दोषः परिहार्यः स युक्तिभिः ।
तावत्कल्प्या उपचिता गुणा अपचिताश्च चेत् ॥ २९७
मूर्तेरुपचयश्चापचयश्चापि प्रसज्यते ।
मूर्तेरुपचयं चापि तथैवापचयं विना ॥ २९८
न गुणानामुपचयस्तथैवापचयो न हि ।
तथा कार्येषु दृष्टत्वाल्लोके विद्वज्जनैः सदा ॥ २९९
मूर्तेरुपचये वापि तथैवापचये सति ।
भवेदपरमाणुत्वप्रसङ्गस्तदतो न च ॥ ३००
अकल्प्यमानेऽपचये तथैवोपचये गुणे ।
तथा चतुर्गुणाः सर्वे जले गन्धोपलम्भनम् ॥ ३०१
तेजस्येवं गन्धरसौ गन्धरूपरसास्तथा ।
वायौ सर्वे यदि पुनरेकैकगुणशालिनः ॥ ३०२
तदा तेजसि न स्पर्शो जले रूपरसौ नहि ।
पृथ्व्यां रूपरसस्पर्शा न स्युर्नैवं हि दृश्यते ॥ ३०३
तदतः परमाणूनां हेतुवादो न युज्यते ।

---

[2] स्थूलसूक्ष्मादि—पा.

[अपरिग्रहादिति सूत्रार्थः]

अत्यन्तमनपेक्षा च मन्त्रादेरपरिग्रहात् ॥ ३०४

साङ्ख्यन्यायमते चोभे निरस्ते बहुयुक्तिभिः ।
गणाचारविरोधोऽपि यथा न प्रसरीसरेत् ॥ ३०५

गुरुलिङ्गादिविषयं न श्राव्यं दूषणं यदि ।
श्रुतवान् शिक्षयामीति गणाचारः स उच्यते ॥ ३०६

साङ्ख्येन तार्किकेणापि दूषणत्वेन कल्पितम् ।
यद्यत्तत्स्मरणं वापि मनसा न कृतं मया ॥ ३०७

किंतु तेषामभिमतं निरस्तं युक्तिभिर्मया ।
तथैव दृश्यते धर्मः सङ्गते धर्मदूषके ॥ ३०८

तद्दूषणमशृण्वंस्तत्स्थानात्तं तु प्रवासयेत् ।

[२-२-४. समुदायाधिकरणे बौद्धमतखण्डनाय तन्मत-प्रक्रियोपपादनम्]

तण्डुलान् सिकतैर्मिश्रान् पृथक्कृत्य यथा हरेत् ॥ ३०९

बौद्धाद्यभिमतार्थेषु निरस्यन् [1] दुर्वचः [2] तथा ।
विज्ञानरत्नं गृह्णामि तत्र क्षणिकतां त्यजन् ॥ ३१०

युक्तिभिर्दोषघातज्ञः शाणोल्लीढं मणिं यथा ।
निरस्यतेऽथ बौद्धानामिदानीं त्रिविधं मतम् ॥ ३११

सर्वास्तित्वं वदन्त्येके केचिद्विज्ञानमात्रकम् ।
शून्यवादिन एवैके सर्वास्तित्वं निरस्यते ॥ ३१२

तत्र तेषां प्रक्रियैषा पृथ्व्यादीनां चतुष्टये ।
खरस्नेहोष्णेरणस्वभावास्ते परमाणवः ॥ ३१३

संहन्यन्ते पृथिव्यादिभावेनेति ततस्तथा ।
वेदनारूपविज्ञानसंज्ञासंस्कारभेदतः ॥ ३१४

---

[1] दुर्वचश्शिलाः—पा. [2] किल—पा.

पञ्च स्कन्धास्तथाध्यात्मं सर्वरूपेण वै पुनः ।
व्यवहारास्पदतया संहन्यन्तेऽथ तत्र च ॥ ३१५
रूपस्कन्धः [1] सविषयाणीन्द्रियाणीति बभ्रमुः ।
विज्ञानस्कन्धनामासावहमाकार एव च ॥ ३१६
रूपादिविषयश्चासाविन्द्रियादिसमुद्भवः ।
ज्ञायमानो वेदनाख्यस्कन्धः स तु समीरितः ॥ ३१७
सुखस्यानुभवश्चापि दुःखस्यानुभवस्तथा ।
संज्ञास्कन्धः स विज्ञेयो विशिष्टोल्लिखवानयम् ॥ ३१८
सविकल्पप्रत्ययोऽथ संस्कारस्कन्ध उच्यते ।
क्लेशा रागादयश्चैव मदमानादयस्तथा ॥ ३१९
उपक्लेशास्तथा धर्माधर्मौ च परिकीर्तिताः ।
पञ्चस्कन्धी तत्समूहस्तत्रादाविदमुच्यते ॥ ३२०

[समुदाय उभयहेतुके इत्यादि सूत्रार्थः]

द्विप्रकारः समुदयो योऽयं चोभयहेतुकः ।
स च भौतिकसङ्घातोऽणुहेतुः स्कन्धहेतुकः ॥ ३२१
स्कन्धिरूपस्ततस्तस्मिन्नुभयस्मिन्नपि क्रमात् ।
स्यादभिप्रेयमाणं तदप्राप्तिः किल सा भवेत् ॥ ३२२
समुदायाप्राप्तिरिति तस्यासङ्गतिरुच्यते ।
स्वतः सङ्घातविरहे जडत्वात्समुदायिनः ॥ ३२३
समूहसिद्ध्यधीनत्वाच्चित्ताभिज्वलनस्य च ।
अन्यस्य चेतनस्यात्र संहन्तुर्विरहात्ततः ॥ ३२४
सर्वत्र क्षणिकत्वस्य [2] त्वया च प्रतिपादनात् ।

[इतरेतरप्रत्ययत्वादिति सूत्रविवरणम्]

संहन्ता चेतनः कश्चित्स्थिरो नाभ्युपगम्यते ॥ ३२५

---

[1] सवीर्या—पा. [2] तथा—पा.

तथाप्यविद्यामुख्यानां कारणत्वात्परस्परम् ।
सङ्गच्छते लोकयात्रा ते चाविद्यादयः पुनः ॥ ३२६
अविद्या चैव संस्कारो विज्ञानं नामरूपकम् ।
स्यात् षडायतनं स्पर्शो वेदना च ततः परम् ॥ ३२७
तृष्णा विद्याप्युपादानं भवो जातिस्तथैव च ।
स्याज्जरामरणं शोकस्तथैव परिदेवना ॥ ३२८
ततो दुःखं दुर्मनस्तेत्येवंजातीयका इमे ।
अन्योन्यहेतुता तेषां समयेऽङ्गीकृताः पुनः ॥ ३२९
अविद्या भ्रान्तिरित्युक्ता संस्कारो रागपूर्वकः ।
विज्ञानं वस्तुविषयज्ञानमित्युपवर्णितम् ॥ ३३०
चत्वारः स्युरुपादानस्कन्धा नाम पदाभिधाः ।
स्कन्धैस्तैरभिनिर्वर्त्या देहस्य कललादिका ॥ ३३१
अवस्था बुद्बुदाद्या या सारूप्यमिति वर्णिता ।
तत् षडायतनं प्राहुरिन्द्रियाणि तु तानि षट् ॥ ३३२
नामरूपेन्द्रियाणां सान्निपातः स्पर्श उच्यते ।
वेदना सुखदुःखादिमयी सङ्ग्राह्यमित्यतः ॥ ३३३
तृष्णा त्वध्यवसायः स्यादुपादानं ततो विदुः ।
वाक्कायचेष्टासंभूतौ धर्माधर्माविति स्फुटम् ॥ ३३४
प्रादुर्भावो जातिरिति परिपाको जरेति च ।
स्कन्धानां चैव जातानां तन्नाशं मरणं विदुः ॥ ३३५
शोकस्तु म्रियमाणस्य य अन्तर्दाह ईरितः ।
प्रलापनं तदुत्थं तु कीर्तिता परिदेवना ॥ ३३६
पञ्च विज्ञानकार्यं तदसाध्यानुभवः स्मृतः ।
तद्दुःखं मानसं दुःखं दुर्मनस्तेति गीयते ॥ ३३७
यथा बीजादङ्कुरः स्यादङ्कुरात्पत्रमेव च ।
पत्रात्काण्डं ततो नालो नालाद्गर्भं ततः परम् ॥ ३३८

गर्भाच्छूकस्ततः पुष्पं पुष्पात्फलमिति क्रमात् ।
एषामचेतनत्वेऽपि बीजादीनामसत्यपि ॥ ३३९
अधिष्ठातरि चान्यस्मिन् यथात्रान्योन्यमत्र तु ।
कार्यकारणभावो हि दृश्यते तदिहापि च ॥ ३४०
जन्मादिहेतवो ज्ञेया अविद्यादय ईरिताः ।
जन्मादयश्च विज्ञेया अविद्याहेतुका इति ॥ ३४१
आवर्तमाना दृश्यन्ते घटीयन्त्रवदत्र च ।
[1] अर्थाक्षिप्तस्तदेतैः स सङ्घात इति चेन्न च ॥ ३४२
तेषामुत्पत्तिमात्रत्वात् सङ्घातस्तर्हि युज्यते ।
निमित्तमत्रगम्येत सङ्घातस्य यदि त्वया ॥ ३४३
परस्परप्रत्ययत्वेऽप्यविद्यादेस्तथा पुनः ।
पूर्वपूर्वं निमित्तं स्यादुत्तरोत्तरसंभवे ॥ ३४४
सङ्घातापत्तिहेतुत्वं नैव क्वाप्युपपद्यते ।
अर्थादाक्षिप्यते सङ्घ अविद्यापूर्वकैरिति ॥ ३४५
यद्यविद्यादयः सङ्घमन्तरेणात्मसंभवम् ।
अलब्ध्वा पञ्चसङ्घातमपेक्षन्त इतीर्यते ॥ ३४६
सङ्घातस्य ततस्तस्य निमित्तं किञ्चिदुच्यताम् ।
न ह्यपेक्षामात्रतस्तन्निमित्तं सिद्ध्यति स्वतः ॥ ३४७
सङ्घातस्य त्वविद्याद्या निमित्तमिति चेन्न हि ।
कथं तमेव चाश्रित्य लब्ध्वात्मानं पुनः स्वयम् ॥ ३४८
तस्यैव स्युर्निमित्तं च संसारेऽनादिके त्वथ ।
सातत्येनैव सङ्घात उत्पद्यत इतीर्यते ॥ ३४९
तथापि तस्मात्सङ्घातात्सङ्घातान्तरसंभवः ।
सदृशो नियमेनैव भवेदनियमेन वा ॥ ३५०

---

[1] अथाक्षिप्तः—पा.

विरुद्धं सदृशं वेति तत्राद्ये श्रृणु वक्ष्यते ।
न कदापि मनुष्यस्य देवाद्याप्तिः कदाचन ॥ ३५१
द्वितीये तु क्षणे हस्तीभूत्वा देवो भवेन्नरः ।
नियामकस्याभावादप्यभावात्स्थायिकर्मणः ॥ ३५२

[उत्तरोत्पादे चेति सूत्रार्थः]

अङ्गीकृत्य त्वविद्यादेरुत्पत्तौ च निमित्तताम् ।
सङ्घातसिद्धिर्नेत्युक्तं वाचाप्युत्पत्तिहेतुता ॥ ३५३
इदानीं नेति वक्ष्यामि एवं हि क्षणवादिनः ।
पूर्वक्षणे निरुध्येत चोदयत्युत्तरक्षणे ॥ ३५४
पूर्वोत्तराख्यक्षणयोरेवमभ्युपगच्छता ।
वाच्यो हेतुफलभावो न वक्तुं शक्यते क्वचित् ॥ ३५५
पूर्वक्षणस्य रुद्धस्य रुध्यमानस्य वा पुनः ।
तथाभावग्रस्ततया नोत्तरक्षणहेतुता ॥ ३५६
कार्यान्वितानां मृत्स्वर्णादीनां दृष्टा हि हेतुता ।
ग्रस्तस्य नैवाभावेन दृश्यते कार्यहेतुता ॥ ३५७
क्षणभङ्गाख्यवादे तु हेतुः पूर्वक्षणो न हि ।
निरोधेन ग्रस्ततया चोत्तरस्येति कीर्तितम् ॥ ३५८

[असतिप्रतिज्ञेति सूत्रार्थः]

अथ हेतावसत्येव फलोत्पत्तिं वदेद्यदि ।
तत्प्रतिज्ञोपरोधः स्याच्चतुर्हेतून् प्रतीत्य च ॥ ३५९
चित्तचैत्तोत्पत्तिरिति प्रतिज्ञाहानिरापतेत् ।
चित्तं विज्ञानमाख्यातं चैत्तास्ते च सुखादयः ॥ ३६०
नीलावभासज्ञानस्य नीलालम्बप्रतीतितः ।
भवेन्नीलाकारताद्या ततस्तु समनन्तरात् ॥ ३६१

प्रत्ययात्पूर्वविज्ञानान्मनसो बोधरूपता ।
दृशः प्रति प्रत्ययाच्च रूपग्रह उदाहृतः ॥ ३६२
सहकारिप्रत्ययाच्चालोकात्स्पष्टार्थता पुनः ।
कारणानि तु चत्वारि चैत्तानामिति या पुनः ॥ ३६३
प्रतिज्ञा कारणाभावे चोपरुध्येत केवलम् ।
अथोत्तरक्षणोत्पत्तिपर्यन्तमवतिष्ठते ॥ ३६४
पूर्वक्षणश्चेत्तद्यौगपद्यं हेतोः फलस्य च ।
तथा च क्षणिकाः सर्वे प्रतिज्ञेति न संभवेत् ॥ ३६५

[प्रतिसंख्याऽप्रतिसंख्येति सूत्रविवरणम्]

वैनाशिकाः कल्पयन्ति नानाभेदेन वै पुनः ।
बुद्धिर्बोध्यं तथा बोद्धा त्रयादन्यत्तु संस्तुतम् ॥ ३६६
क्षणिकं चेति तदपि त्रयं च क्रमशो विदुः ।
प्रतिसङ्ख्याऽतन्निरोधावाकाशश्चेति भेदतः ॥ ३६७
अवस्तुभावमात्रं तन्निरुपाख्यमिति श्रुतम् ।
प्रतिसङ्ख्या तु भावानां नाशः स्याद्बुद्धिपूर्वकः ॥ ३६८
विपरीतो निरोधः स्यात्प्रतिसङ्ख्यानिरोधकः ।
तथैवावरणाभावमात्रमाकाशमुच्यते ॥ ३६९
प्रत्याचष्ट इदानीं तन्निरोधद्वयमप्यथ ।
प्रतिसङ्ख्याऽतन्निरोधद्वयाप्राप्तिरसंभवः ॥ ३७०
अविच्छेदात्तदेतौ हि स्यातां सन्तानगोचरौ ।
किं भावगोचरावेतौ नैवं सन्तानगोचरौ ॥ ३७१
सन्तानेष्वपि सर्वेषु किल सन्तानिना पुनः ।
तद्धेतुफलभावेन सन्तानस्य तथैव हि ॥ ३७२
विच्छेदविरहात् नापि स्यातां तौ भावगोचरौ ।
निरन्वयो[1] न भावानां निरुपाख्यो विनाशकः ॥ ३७३

---

[1] हि—पा.

अवस्थास्वपि सर्वासु प्रत्यभिज्ञाबलेन तु ।
अन्वयच्छेदभावेन, तस्मात्तत्परिकल्पितम् ॥ ३७४
नोपपन्नं निरोधस्य द्वयमित्यवधार्यताम् ।

[उभयथा च दोषादिति सूत्रविवरणम्]

यथाविद्यानिरोधः स्यात्प्रतिसङ्ख्यानिरोधके ॥ ३७५
सोन्तःपाती समीचीनज्ञानात्परिकरैः सह ।
स्वयमे[1]वाथवा ज्ञानात् हानिर्निर्हेतुताऽऽदिके ॥ ३७६
ज्ञानोपदेशानर्थक्यमन्त्ये चोभयथापि च ।
दोषादेतद्दर्शनं तु सर्वं तदसमञ्जसम् ॥ ३७७

[आकाशे चाविशेषादिति सूत्रार्थः]

आकाशे चाविशेषाच्च निरूपाख्यत्वमेव न ।
अविशेषात्तत्प्रतीतिस्तावद्वेदप्रमाणतः ॥ ३७८
आकाशवत्सर्वगतश्च नित्य इति वाक्यतः ।
व्योम्नि[2] वस्तुत्वसिद्धौ विप्रतिपन्नान् जनान् प्रति ॥ ३७९
शब्दानुमेयता वाच्या गन्धादीनां तथा पुनः ।
पृथ्व्याद्याश्रयतायाश्च सर्वत्रापि च दर्शनात् ॥ ३८०
अपिचाऽवरणाभावमात्रमाश्रयामिच्छतः ।
तार्क्ष्ये पतति चैकस्मिन् सत्वादावरणस्य तु ॥ ३८१
पिपत्सोरन्यतार्क्ष्यस्यात्रकाशो न भवेत्तदा ।
यत्रचावरणाभावः पतिष्यति च तत्र चेत् ॥ ३८२
येन वाऽवरणाभावो विशिष्येत ततोऽप्यथ ।
आकाशं वस्तु भूतं स्यान्नैव चाभावमात्रकम् ॥ ३८३

[अनुस्मृतेश्चेति सूत्रार्थविचारः]

अनुस्मृतेश्चायुक्तं वै वैनाशिकमतं तथा ।

---

[1] मेवयथावाचा [2] वस्तु प्रसिद्धंहिप्रतिपन्ना–पा.

वैनाशिकाः क्षणिकतां वदेयुः सर्ववस्तुनः ॥ ३८४
अभ्युपेयुः क्षणिकतामुपलब्धुरपि स्वयम् ।
अनुस्मृतेर्न चैवं स्यादित्यस्यार्थो विचार्यते ॥ ३८५
अनुभूतमनूत्पन्नं स्मरणं स्यादनुस्मृतिः ।
सा च संभवतीत्थं चेदनुभूत्येककर्तृका ॥ ३८६
नैवमन्यानुभूतार्थे स्मृतिरन्यस्य संभवेत् ।
अप्येवं दर्शनस्मृत्योरेकस्मिन् कर्तरि स्फुटम् ॥ ३८७
प्रत्यक्षप्रत्यभिज्ञानं प्रसिद्धं सर्वलोकतः ।
अहमद्राक्षमेवैतं भिन्नः कर्ता तयोर्यदि ॥ ३८८
भवेत्तदाऽसावद्राक्षीन्नैवं प्रत्येति कश्चन ।

[नासतोऽदृष्टत्वादिति सूत्रार्थनिरूपणम्]

नैवासतो ह्यदृष्टत्वाद्वैनाशिकमिदं मतम् ॥ ३८९
अनङ्गीकुर्वतां भावकार्ये च स्थिरकारणम् ।
भावोत्पत्तिरभावाच्च, तत्कार्यं दर्शयत्यपि ॥ ३९०
भावोत्पत्तिमभावाच्चानुपमृद्य भवेन्न हि ।
प्रादुर्भावस्तथा नष्टाद्बीजात्स च किलाङ्कुरः ॥ ३९१
घटो विनष्टान्मृत्पिण्डात्, कूटस्थादविशेषतः ।
यदि चेत्सर्वतः सर्वमुत्पद्येतेति ते विदुः ॥ ३९२
तत्रेदमुच्यते न स्यादभावाद्भावसंभवः ।
भावोत्पत्तिर्यद्यभावात्तदाऽभावाऽविशेषतः ॥ ३९३
तत्कारणविशेषस्य कल्पना व्यर्थतामियात् ।
बीजादीनां विनष्टानां विनष्टानां मृदां तथा ॥ ३९४
शशशृङ्गादिकानां च विशेषो नास्त्यभावतः ।
बीजादेवाङ्कुरोत्पत्तिः शशशृङ्गात्कुतो न हि ॥ ३९५
नीलादिरुत्पलादीनामिवाभावो विशिष्यते ।

विशेषवत्त्वादेवाभावस्य भावत्वमुच्यते ॥ ३९६
उत्पलादिवदेवं चेदभावाद्भावसंभवे ।
अभावान्वितमेव स्यात्कार्यमेव मृदन्विताः ॥ ३९७
शरावाद्या हि दृश्यन्ते यत्त्वयोक्तं न दृश्यते ।
यच्च नानुपमृद्यात्र प्रादुर्भावादितीरितम् ॥ ३९८
तद्दुरुक्तं सुवर्णे च स्वेषामेव तथा पुनः ।
प्रत्यभिज्ञायमानानां सुवर्णानां हि दृश्यते ॥ ३९९
रुचकादौ कारणत्वमपि चैवाङ्कुरादिषु ।
उपादानं न बीजाद्या अनुस्यूतांशुकाः पुनः ॥ ४००
तस्मादनुपरं नायमभावाद्भावसंभवः ।

[उदासीनानामितिसूत्रार्थविमर्शः]

भावोत्पत्तिमभावादभ्युपगच्छेच्च यद्ययम् ॥ ४०१
एवं चानीहमानानामौदासीन्येन वै नृणाम् ।
सुलभत्वादभावस्य सिद्ध्येदभिमतं फलम् ॥ ४०२
क्षेत्रकर्मण्ययत्नस्य कृषिकस्य सदा भवेत् ।
समृद्धा सस्यसम्पत्तिः, यत्नलेशं विनैव च ॥ ४०३
[1]यदिचालयमागच्छेत्तदा स्याद्युक्तमीरितम् ।
स्वर्गापवर्गौ किञ्चैवं न समीहेतकश्चन ॥ ४०४
एतेषां सर्वथाऽसिद्धेः न युक्तं तावकं मतम् ।

[२-२-५. अभावाधिकरणे विज्ञानवादिमतनिरासाय
तदभ्युपगतबाह्यार्थाभावसाधनप्रकारप्रदर्शनम्]

विज्ञानवादी बौद्धश्चेदानीं प्रत्यवतिष्ठते ॥ ४०५
केषांचिच्च विनेयानामर्थानां बाह्यवस्तुनि ।
आलक्ष्याभिनिवेशं तदनुरोधेन केवलम् ॥ ४०६
बाह्यार्थप्रक्रियेयं तु रचिता तेन वै पुनः ।

---

[1] तथैवा—पा.

नाभिप्रेता हि सुगतैर्विज्ञानस्कन्धवादिभिः ॥ ४०७
तस्मिन् विज्ञानवादे च बुद्ध्यारूढेन केवलम् ।
रूपेणान्तस्थ एवात्र प्रमाणं फलमित्यपि ॥ ४०८
प्रमेयं चेति सर्वोऽपि व्यवहारोऽपि युज्यते ।
तथा सत्यपि बाह्येऽर्थे बुद्ध्यारोहणमन्तरा ॥ ४०९
मानादिव्यवहारस्यासंभवादिति तत्कथम् ।
अन्तस्थो व्यवहारस्तु न बाह्योऽर्थ इतीरितम् ॥ ४१०
अर्थोऽवगम्यमानस्तु बाह्यः किं परमाणवः ।
स्तम्भाद्याः स्तत्समूहा वा न तावत्परमाणवः ॥ ४११
ते स्तम्भादिप्रकृतयः परिच्छेद्या भवन्ति हि ।
परमाण्ववभासाभिज्ञानानुदयतस्तथा ॥ ४१२
न तत्समूहाः स्तम्भाद्याः परमाणुभ्य एव तु ।
अन्यतानन्यभावाभ्यां दुर्निरूपतया तथा ॥ ४१३
प्रत्याचक्षीत जात्यादीन् तथाऽनुभवमात्रतः ।
साधरणात्मज्ञानस्य विषयेऽविषये च यः ॥ ४१४
पक्षपात इदं स्तम्भज्ञानं कुडयामिदं त्विति ।
घटज्ञानं पटज्ञानमित्यवंरूपतो बहु ॥ ४१५
न विशेषं ज्ञानगतमन्तरेणोपपद्यते ।
एवं विषयसारूप्यं वाच्यं ज्ञानस्य वै पुनः ॥ ४१६
तस्मिन्नंगीकृत चापि ज्ञानेन विषयाकृतेः ।
अपाऽर्थि[1]काऽवरुद्धत्वाद्बहिरर्थाभिकल्पना ॥ ४१७
स्वप्नादिवत्तद्दृष्टव्यं यथा स्वप्ने जनस्यतु ।
मायामरीचिसलिलगन्धर्वनगरादयः ॥ ४१८
बाह्यार्थमन्तरेणैव ग्राह्यग्राहकतां भजेत् ।
एवं जाग्रत्प्रत्ययाश्च प्रत्ययत्वाविशेषतः ॥ ४१९

---

[1] अपार्थेकाम.

कथं वाऽसति बाह्यार्थे प्रत्ययानां विचित्रता ।
वासनायाश्च वैचित्र्यादित्याह स च वै पुनः ॥ ४२०
अनादावत्र संसारे बीजाङ्कुरनिदर्शनात् ।
ज्ञानानां वासनानां च परस्परनिमित्ततः ॥ ४२१
वैचित्र्यान्न विरुध्येत, बाह्यार्थाभाव एव तत् ।

[नाभाव उपलब्धेः]

इति प्राप्ते च नाभाव उपलब्धेरितीरितम् ॥ ४२२
न खल्वभावो बाह्यस्य कुतश्चेदुपलब्धितः ।
प्रत्यये प्रत्यये चैव बाह्योऽर्थ उपलभ्यते ॥ ४२३
न चोपलभ्यमानस्य विरहः शक्यते खलु ।
यथा हि कश्चिद्भुञ्जानस्तृप्तिं चानुभवन् पुनः ॥ ४२४
ब्रूयान्नाहं तु भुञ्जानो न तृप्यामीति वा स्वयम् ।
तद्वदिन्द्रियसंबद्धैर्लब्धबाह्यैस्तु पूरुषः ॥ ४२५
नच सोऽस्तीति वा ब्रूयादहं नोपलभे त्विति ।
ब्रूयाच्चेत्तस्य वचनमुपादेयं कथं भवेत् ॥ ४२६
नाहमेवं ब्रवीम्यर्थमहं नोपलभे त्विति ।
किं तु लब्ध्यतिरिक्तार्थमहं नोपलभे त्विति ॥ ४२७
न लब्धिव्यतिरेकोऽपि बलात्स्त्रीकार्य एव हि ।
नैव कश्चिल्लब्धिमेव स्तम्भं वा कुडचमेव वा ॥ ४२८
इत्येवं नोपलभते स्तम्भकुडचादिकान्पुनः ।
विषयत्वेनोपलब्धेर्लभन्ते [1]सर्वजन्तवः ॥ ४२९
इतश्चैवं हि वक्तव्यमन्य [2]एवापि लभ्यते ।
उपलब्ध्यतिरिक्तोऽर्थ इति चैवं किल [3]स्थिते ॥ ४३०

---

[1] जन्तवःपुन–पा. [2] एवोप–पा. [3] स्थितिः–पा.

एवं व्याचक्षते ते च बाह्यमर्थं प्रयत्नतः ।
यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासते ॥ ४३१
इति ते सर्वलोकेषु प्रसिद्धां संविदं बहिः ।
भासमानां लब्धवन्तः प्रतिचिख्यासवः पुनः ॥ ४३२
बहिर्वदिति बाह्यार्थे वच्छब्दं च प्रयुञ्जते ।
अन्यथा ते कथं ब्रूयुर्बहिर्वदिति निर्भयाः ॥ ४३३
न हि वन्ध्यापुत्रवत्तदवभासत इत्ययम् ।
तस्माद्यथा स्वानुभवं बहिरर्थोऽवभासते ॥ ४३४
ननु बाह्यस्य चार्थस्य प्रोक्तस्तैरप्यसंभवः ।
नायमध्यवसायस्तु साधुरित्युररीकृतम् ॥ ४३५
संभवासंभवौ चोभौ प्रमाणस्य यतः पुनः ।
प्रवृत्तिं चाप्रवृत्तिं च पुरस्कृत्यैव सिद्ध्यतः ॥ ४३६
तौ संभवासंभवौ च पुरस्कृत्यैव केवलम् ।
प्रवृत्तिरप्रवृत्तिर्वा न प्रमाणस्य युज्यते ॥ ४३७
प्रत्यक्षादिष्वन्यतमप्रमाणेनोपलभ्यते ।
संभवत्येव तत्, यत्तु प्रमाणेन न केन वा ॥ ४३८
उपलभ्येत तन्नैव तत्र संभवति, इह तु ।
लभ्यमानो हि बाह्योऽर्थः सर्वैरेव प्रमाणकैः ॥ ४३९
विकल्पैर्व्यतिरेकौद्यः कथं नेत्येव वर्णयेत् ।
नैवं विषयसारूप्याल्लब्धेर्विषयनाशनम् ॥ ४४०
अस्वीकृते च विषये पुनर्विषयरूपितम् ।
सारूप्यं नोपलभ्येत बहिर्विषयलब्धितः ॥ ४४१

[वैधर्म्याच्च न स्वप्नादिवत्]

स्वप्नप्रत्ययवज्जाग्रदवस्थाप्रत्यया अपि ।
विनैव बाह्यं युज्येरन्नेतत्प्रत्युच्यते मया ॥ ४४२

स्वप्नप्रत्ययवज्जाग्रत्प्रत्यया न भवन्ति हि ।
वैधर्म्यात्तच्च वैधर्म्यं बाधाबाधावितीरितौ ॥ ४४३
बाध्यते स्वप्नलब्धोऽर्थः प्रतिबुद्धो वदेदिति ।
मिथ्या मयोपलब्धो हि महाजनसमागमः ॥ ४४४
निद्राग्लानं मम मनस्तेनैषा भ्रान्तिरित्यथ ।
एवं यथायथं बोधो मायादिष्वपि दृश्यते ॥ ४४५
नैवं जाग्रल्लब्धवस्तु स्यादवस्थासु बाधितम् ।
अबाधितत्वमास्थेयं तज्जाग्रत्प्रत्ययस्य तु ॥ ४४६
तेन स्वप्नप्रत्ययः स्यान्मिथ्याबाधित इत्यसौ ।
अथ जाग्रत्प्रत्ययस्य बाध्यत्वे बाधको न हि ॥ ४४७
स्वाप्नानां प्रत्ययानां स्यात्, न बाध्यं बाधकं यतः ।
स स्वप्नप्रत्ययो मिथ्या तत्तत्स्वप्नवदित्यसौ ॥ ४४८
दृष्टान्तः साध्यविकलस्तद्बाधाबाधलक्षणम् ।
वैधर्म्यं, न स्वप्नवच्च जाग्रतः प्रत्ययस्य तु ॥ ४४९
भवेन्निर्विषयत्वाध्यवसानमिति निश्चयः ।

[न भावोऽनुपलब्धेः]

यदप्युक्तं विनाप्यर्थं ज्ञानवैचित्र्यमद्भुतम् ॥ ४५०
वासनानां च वैचित्र्यादिति प्रत्युच्यते मया ।
वासनानां न भावोऽपि त्वत्पक्षेऽनुपलब्धितः ॥ ४५१
अपि चार्थोपलब्ध्यर्थं बाह्यार्थानां भवन्ति ताः ।
नामरूपा वासनाख्या प्रत्यर्थं भाषितास्त्वया ॥ ४५२
अर्थेष्वलभ्यमानेषु किंनिमित्तस्तु तद्वद ।
अनादित्वेऽप्यन्धपरम्परा न्यायेन दुर्वहा ॥ ४५३
वासना नाम संस्कारविशेषास्तावदाश्रयम् ।
अन्तरेणावकल्पन्त एवं लोकेषु दर्शनात् ॥ ४५४

न साधनाश्रयः कश्चित्तत्र चास्ति प्रमाणतः।

[क्षणिकत्वाच्च, सर्वथाऽनुपपत्तेश्च]

अतो नानुपलब्धेश्च, क्षणिकत्वाच्च नैव तत् ॥ ४५५
यदस्यालयाविज्ञानं परेण परिकल्पितम्।
यद्वासनाश्रयत्वेन क्षणिकत्वपरिग्रहात् ॥ ४५६
अनवास्थितरूपं तत्प्रवृत्तिज्ञानवत्स्वयम्।
न वासनाधिकरणं तावद्भवितुमर्हति ॥ ४५७
न कालत्रयसम्बन्धिन्येकस्मिन्नसति स्फुटम्।
देशकालनिमित्तादि सापेक्षा वासना तु या ॥ ४५८
तदधीनस्मृतेस्तस्याः प्रतिसन्धानपूर्वकः।
व्यवहारः संभवति, स्थिरत्वे चालयस्य तु ॥ ४५९
क्षणभङ्गप्रतिज्ञाया ग्लानिरापतति ध्रुवम्।
अपि विज्ञानवादेऽपि क्षणिकत्वपरिग्रहात् ॥ ४६०
यच्च बाह्यार्थवादेषु क्षणिकत्वनिबन्धनम्।
दूषणं भावितं तच्चेदुत्तरोत्पादनेऽपि च ॥ ४६१
पूर्वक्षणनिरोधादित्येवमादिकमत्र च।
अनुसन्धेयमेतस्मादेतौ पक्षौ निराकृतौ ॥ ४६२
बाह्यार्थवादो विज्ञानवादिपक्षश्च तावुभौ।
सर्वथाऽनुपपत्तेश्च तन्नैकस्मिन्नसंभवात् ॥ ४६३

[२-२-६ एकस्मिन्नसंभवाधिकरणे जैनमतनिरासाय पूर्वं तन्मत-प्रक्रियोपपादनम्]

इदानीं तु [1] क्षपणकमतं दूरे निरस्यते।
सप्त तेषां पदार्था जीवाजीवास्रवसंवराः ॥ ४६४

---

[1] क्षपणकाः-जैनाः.

बन्धश्च निर्जरो मोक्षः संक्षेपाद्वौ पदार्थकौ ।
जीवाजीवौ तयोरन्तर्भावात्तेषामितीर्यते ॥ ४६५

तयोः प्रपञ्चमपरामिममाचक्षते च ते ।
पञ्चा[1]स्तिकायास्तेष्वाद्यः प्रोक्तो जीवास्तिकायकः ॥ ४६६

तत्पुद्गलास्तिकायश्च ततो धर्मास्तिकायकः ।
एतानान्तरभेदेन बहुधा परिकल्पितान् ॥ ४६७

जगुर्बोधात्मको जीवो जडवर्गस्त्वजीवकः ।
इन्द्रियाणां प्रवृत्तिः स्यादास्रवः संवरस्त्वयम् ॥ ४६८

शमादिरूपा या वा स्यात्प्रवृत्तिस्त्वथ निर्जरः ।
तप्ताश्मारोहणादि स्याद्बन्धोऽष्टविधकर्म तत् ॥ ४६९

चतुर्विधं घातिकर्माद्यं ज्ञानावरणीयकम् ।
दर्शनावरणीयं च मोहनीयं तृतीयकम् ॥ ४७०

आन्तरालिकमेवं स्यादथाघाति चतुर्विधम् ।
वेदनीयं नामिकं च गोत्रियायुष्कमित्युभे ॥ ४७१

तत्र सम्यग्ज्ञानतःस्यान्न मोक्ष इति [2]पर्ययः ।
तज्ज्ञानावरणीयं स्यात्कर्मचार्हतदर्शनात् ॥ ४७२

अभ्यासान्न भवेन्मोक्षो दर्शनावरणीयकम् ।
तृतीयं मोहनीयं तु विशेषानवधारणम् ॥ ४७३

बहुशः प्रतिषिद्धेषु मोक्षमार्गेष्वितीरितम् ।
मोक्षमार्गप्रवृत्तानामन्तरायकरं विदुः ॥ ४७४

विज्ञानं यत्तुरीयं तदान्तरालिकसंज्ञितम् ।
श्रेयोहन्तृतयैतानि घातिकर्माण्यरीरटन्[3] ॥ ४७५

अथ चाघातिकर्माणि वेदनीयमथोच्यते ।
शुक्ल[4]पुद्गलपाकेषु हेतुर्बन्धोऽपि नैव हि ॥ ४७६

---

1 अस्तिकायः—अणुभिन्नं अनेकदेशवर्तिद्रव्यम्. 2 पर्ययः- भ्रमात्मकंज्ञानम्
3 अरीरटन्-स्पष्टं अवदन्. 4 पुद्गलः—परमाणुः.

श्रेयोनिरोधि यस्मात्तत्त्वज्ञानाविघातकम् ।
यच्छुक्लपुद्गलारम्भवेदनीयानुरोधि तत् ॥ ४७७
नामिकं कर्म चाख्यातं तत्कर्मारभते पुनः ।
तच्छुक्लपुद्गलस्याऽऽद्यावस्थां कललबुद्बुदम् ॥ ४७८
अव्याकृतं ततोऽप्याद्यं शक्तिरूपेण संस्थितम् ।
गोत्रीयमथ चायुष्कमायुष्कायति वै नृणाम् ॥ ४७९
सम्यगुत्पादनद्वारा सतां कथयतीति तत् ।
अघातिकर्मता शुक्लपुद्गलाश्रयता यतः ॥ ४८०
बध्नाति पुरुषं चेति बन्धकर्माष्टकं च तत् ।
गतसर्वक्लेशजातवासनस्यैव चात्मनः ॥ ४८१
सम्यक्सुखैकतानस्य चोपरिष्टादवस्थितिः ।
मोक्ष इत्येवमपरे तूर्ध्वं गमनशालिनः ॥ ४८२
जीवस्य बन्धविरहात् यदूर्ध्वं गच्छतीति सः ।
अस्तीति कायते यस्मात्तस्माज्जीवोऽस्तिकायकः ॥ ४८३
एवमन्यत्र, जीवास्तिकायस्तु त्रिविधः स्मृतः ।
बद्धो मुक्तो नित्यसिद्ध आर्हतस्तु तृतीयकः ॥ ४८४
अन्यौ प्रसिद्धौ विज्ञेयौ, पूर्यते गलतीति च ।
पुद्गलं वस्तूपाचितं तथैवापचितं च तत् ॥ ४८५
स्यात्पुद्गलास्तिकायश्च षोढा भेदसमन्वितः ।
पृथिव्यादीनि चत्वारि स्थावरं जङ्गमं त्विति ॥ ४८६
धर्मास्तिकायो विज्ञेयः प्रकृतेरानुकूल्यवान् ।
स्यादधर्मास्तिकायस्तु स्थितिहेतुरितीरितः ॥ ४८७
द्विधाऽऽकाशास्तिकायश्च लोकाकाशस्तथादिमः ।
अन्यस्त्वलोकाकाशः स्यात्, उपर्युपरिवर्तिनाम् ॥ ४८८
अन्तर्वर्ती तु लोकानां लोकाकाश इतीर्यते ।
मोक्षस्थानं तदुपरि त्वलोकाकाश उच्यते ॥ ४८९

सर्वत्र [1]सप्तभङ्गीनां न्यायं तमवतारयन् ।
निपातोऽनेकान्तभासी तिङन्तप्रातिरूपकः ॥ ४९०
यदि वस्त्वस्त्येव चेत्येकान्ततः सर्वथा सदा ।
सर्वत्र सर्वात्मनाऽस्त्येवेति चैतदसङ्गतम् ॥ ४९१
तस्य चेप्साजिहासाभ्यां कानिचित्क्वचिदेव च ।
सत्त्वे प्रेक्षावतां हानोपादाने कल्पिते इति ॥ ४९२
तमेककं सप्तभङ्गीनयं दूषयति स्वयम् ।
असंभवान्नैकस्मिन्निति सूत्रेण सूत्रकृत् ॥ ४९३

[नैकस्मिन्नसम्भवात्]

सत्त्वासत्त्वादिधर्माणामन्योन्याभावरूपिणाम् ।
एकस्मिन् धर्मिणि समावेशः शीतोष्णवन्न हि ॥ ४९४

[एवं चात्माऽकात्स्न्र्यम्]

एवं चात्माऽ[2]कात्स्न्र्यमिति न देहपरिमाणता ।

[न च पर्यायादप्यविरोधो विकारादिभ्यः]

पर्यायेणाविरोधोऽपि विकारादिभ्य एव न ॥ ४९५

[अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः]

अन्त्यमोक्षावस्थितस्य परिमाणस्य नित्यता ।
शरीरपरिमाणस्य वक्तव्या चैकरूपता ॥ ४९६
अविशेषात्प्रसज्येत तस्मादेवं न शक्यते ।
अथवाऽन्त्यस्य मोक्षे च परिमाणस्य तु स्थिते ॥ ४९७
अवस्थयोः पूर्वयोस्तु जीवः स्यात्तत्प्रमाणकः ।
ततो विशेषतोऽणुर्वा महान्वा जीवभावतः ॥ ४९८
न देहपरिमाणस्य तस्मान्मतमसङ्गतम् ।

---

[1] स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्तिचावक्तव्यं च, स्यान्नास्तिचावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति सप्तभङ्गीरीतिः. [2] अकात्स्न्र्यम्–अपरिपूर्णता.

[२-२-७ पत्यधिकरणे माहेश्वरादिमतखण्डनाय तत्प्रक्रियोपपादनम्]

असामञ्जस्यतः पत्युरधिष्ठातेश्वरास्त्विति ॥ ४९९
निमित्तमात्रवादश्चाप्यश्रौतत्वान्निषिध्यते ।
अश्रौतेश्वरवादश्च नानारूपेण कल्पितः ॥ ५००
पुरुषस्य प्रधानस्याप्यधिष्ठाता च केवलम् ।
निमित्तकारणं योगसाङ्ख्याद्या जगुरीश्वरम् ॥ ५०१
माहेश्वरास्तु मन्यन्ते पदार्थान् पञ्च ते पुनः ।
कार्यं च कारणं योगो विधिर्दुःखान्त इत्यपि ॥ ५०२
पशुपाशविमोक्षाय पत्यादिष्टा इमे इति ।
ईश्वरः स्यात्पशुपतिर्निमित्तं कारणं त्विति ॥ ५०३
माहेश्वरास्तु चत्वारः शैवाः पाशुपतास्तथा ।
[1] कालसिद्धान्तिनः केचित्तथा कापालिकाः परे ॥ ५०४
महेश्वरप्रणीतागमानुसारितया च ते ।
नाम्ना माहेश्वराः प्रोक्तास्तत्र कारणमीश्वरः ॥ ५०५
कार्यं प्रधानं योगस्तु महदादि प्रकीर्तितम् ।
ओङ्कारज्ञानधृत्यादि विधिस्त्रिषवणं [2] पुनः ॥ ५०६
गूढचर्यावसानं च दुःखान्तो मोक्ष इत्यपि ।
आत्मानः पशवस्तेषां पाशो बन्धः प्रकीर्तितः ॥ ५०७
दुःखान्तस्तद्विमोक्षः स्यादिति, वैशेषिकाः पुनः ।
स्वप्रक्रियानुसारेण निमित्तं त्वीश्वरास्त्विति ॥ ५०८
अधिष्ठातुः कुलालादेर्निमित्तत्वं घटादिषु ।
उपादानत्वमपि न तद्वत्कार्यं प्रतीश्वरः ॥ ५०९

[पत्युरसामञ्जस्यात्]

तत्रेदं प्रतिभातीत्थं किं केवलनिमित्तता ।
श्रुतेरुतानुमानादेर्नाद्यस्तूभयवर्णनात् ॥ ५१०

---

[1] कारु—पा. काळामुखा इत्यर्थः.

[2] त्रिषवणम्-त्रिकालस्नानम्.

निमित्तोपादानतेति चोपादानत्वमित्यपि ।
वेदेष्वसकृदुक्तत्वात्, अनुमानमपीह न ॥ ५११
अनुमानात्कल्प्यमान ईशो दृष्टानुसारतः ।
कल्पनीयस्ततश्चात्र कुलालवदपीशितुः ॥ ५१२
रागादिदोषः सज्येत वैषम्यं निर्घृणादिकम् ।
सार्थकत्वादनीशत्वप्रसक्तेश्चेश्वरस्य च ॥ ५१३
स्यात्पूरुषविशेषत्त्वोपगमात्पुरुषस्य च ।
औदासीन्याभ्युपगादसामञ्जस्यमापतेत् ॥ ५१४

[अधिष्ठानानुपपत्तेश्च, करणवच्चेन्न भोगादिभ्यः ।]

[1] अधिष्ठानासङ्गतिरपि एवं करणवद्यदि ।

[अन्तवत्त्वं असर्वज्ञता वा]

न भोगादेः प्रसक्तत्वात्, अन्तवत्त्वं प्रसज्यते ॥ ५१५
स्यादसर्वज्ञता वापि [2] परिच्छेदो न वा तथा ।

[२-२-८ उत्पत्त्यसम्भवाधिकरणम्]

उत्पत्त्यसंभवात्पाञ्चरात्रमेतदसङ्गतम् ॥ ५१६
भगवान् वासुदेवः स्याज्ज्ञानरूपो निरञ्जनः ।
परमार्थं च तत्त्वं स चतुर्धा विभज्य च ॥ ५१७
आत्मानं प्रतितिष्ठन् वासुदेवव्यूहरूपतः ।
सङ्कर्षणव्यूहरूपः प्रद्युम्नव्यूहरूपकः ॥ ५१८
अनिरुद्धव्यूहरूपी वासुदेवः परात्मवान् ।
सङ्कर्षणो जीवनाम प्रद्युम्नो मन उच्यते ॥ ५१९
अहङ्कारोऽनिरुद्धः स्यात्तेषां प्रकृतिरुच्यते ।
वासुदेवस्तदितरे कार्यमित्यभिधीयते ॥ ५२०
सङ्कर्षणो वासुदेवात्तस्मात्प्रद्युम्न एव च ।

---

1 अशरीरत्वादिति शेषः.   2 परिच्छेदः-परिमाणादिविषयकेयत्तानिष्कर्षः.

प्रद्युम्नादनिरुद्धश्च जात इत्यभिधाय च ॥ ५२१
भगवन्तं महात्मानमिज्ययाभिगमेन च।
स्वध्याययोगैरिष्ट्वा तं क्षीणक्लेशस्तु यो जनः॥ ५२२
भगवन्तं प्रपद्येतेत्यादि, तत्रोच्यते मया।

[उत्पत्त्यसंभवात्]

उत्पत्त्यसंभवाद्दोषादनित्यत्वादिसंभवः ॥ ५२३
नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् कारणस्य तत्।
कार्यप्राप्तौ च विलयप्रसङ्गात्तदसंभवः ॥ ५२४

[नच कर्तुः करणम्]

कर्तुः सङ्कर्षणाज्जीवात्प्रद्युम्नः करणं मनः।
उत्पद्यत इति ह्येतदुक्तं नोत्पत्त्यसंभवात् ॥ ५२५

[विज्ञानादिभावे वा तदप्रतिषेधः]

विज्ञानादिषु वा सत्सु स्यादेवोत्पत्तिसंभवः।

[विप्रतिषेधाच्च]

अथ विप्रातिषेधाच्च [2] क्वचिद्गुणगणत्वकम् ॥ ५२६
ज्ञानैश्वर्यादि च गुणाः [3] क्वचिदात्मान एव ते।
सङ्कर्षणादयो जीवा वासुदेवः क्वचित्तथा ॥ ५२७
वेदनिन्दादर्शनाच्च पाञ्चरात्रमसङ्गतम्।
साङ्ख्यादिपाञ्चरात्रान्ता निरस्ता बहुयुक्तिभिः ॥ ५२८
यावत् परमतं नैव निराकुर्यात् स्वयुक्तिभिः।
[4] अप्रातिष्ठितमेव स्यात् तावन्नयायात्स्वकं मतम् ॥ ५२९
तस्माद्धृदयदेशे तु लिङ्गं धार्यं मुमुक्षुभिः।
इति सिद्धं प्रमाणैश्च तथैव बहुयुक्तिभिः ॥ ५३०

---

[1] दन्तवत्वं–पा. [2] क्वचिद्गुणगुणित्वकम्–पा. [3] क्वचिदात्मा न वर्तते–पा. [4] तावदस्थिरमेव–पा.

[अथ तृतीयः पादः। तत्र पादसङ्गतिः, अध्यायशेषार्थश्च]

उक्ता विप्रतिषेधेन परपक्षानपेक्षता।
तद्वच्छ्रुतेः समानोऽप्यविरोधादनपेक्षता॥ ५३१

स्यात्तन्माभूदिति परः प्रपञ्चः प्रसरत्यसौ।

[२-३-१ वियदधिकरणे न वियदश्रुतेरिति सूत्रार्थः]

आकाशस्य समुत्पत्तिरस्ति वा नेति संशये॥ ५३२
वियन्नोत्पद्यते कस्माच्छान्दोग्ये तु तदश्रुतेः।

[अस्ति तु]

[1]तैत्तिरीयोपनिषदि वियदुत्पत्तिरस्ति तु॥ ५३३

[गौण्यसम्भवात्]

श्रुतिर्वियत्समुत्पत्तेर्गौणी चोत्पत्त्यसंभवात्।
यस्य हि प्रागभावोऽस्ति तस्योत्पत्तिर्यथा घटे॥ ५३४
न चाकाशप्रागभावस्तस्माद्गौणी किल श्रुतिः।

[शब्दाच्च]

[2]तस्माच्चामृतमित्यादिश्रवणान्नित्यमेव हि॥ ५३५
आकाशवत्सर्वगतो नित्य इत्याद्यसङ्गतेः।

[स्याच्चैकस्य ब्रह्मशब्दवत्]

स्याच्चैकस्य ब्रह्मशब्दवन्मुख्यत्वं च गौणता॥ ५३६

[प्रतिज्ञाहानिरव्यतिरेकात्]

न प्रतिज्ञाहानिरत्र तथैवाव्यतिरेकतः।

[शब्देभ्यः]

शब्देभ्यो घटसत्ताया मृत्सत्ताव्यतिरेकतः॥ ५३७

---

[1] तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः। आनन्दवल्ली. [2] वायुश्चान्तरिक्षं चैतदमृतम्। बृ. ४-३-३.

मृदो ज्ञाने घटज्ञानं तद्ब्रह्माव्यतिरेकतः ।
ब्रह्मसत्ताऽव्यतीरेकात्सत्ताया वियतस्तथा ॥ ५३८
ब्रह्मज्ञानाद्वियज्ज्ञानं सुखेनैवोपपद्यते ।

[यावद्विकारन्तु विभागो लोकवत्]

अथ यावद्विकारं तु विभागो लोकवत्तथा ॥ ५३९

[२-३-२ मातरिश्वाधिकरणम् । एतेन मातरिश्वा व्याख्यातः]

एतेन मातरिश्वाऽपि व्याख्यातप्राय एव हि ।
[1] वायुश्चान्तरिक्षमिति ह्यमृतत्वं विधीयते ॥ ५४०

[२-३-३ असंभवाधिकरणम्]

वियतः प्रागभावस्याभावाज्जनिरसङ्गता ।
वायोस्तु प्रागभावस्य सत्त्वात्तन्नित्यता कथम् ॥ ५४१
तदुत्पत्तिश्रुतिर्गौणीत्यत्रैवं प्रतिपाद्यते ।

[असम्भवस्तु सतोऽनुपपत्तेः]

वायोः प्रागेव सत्त्वावधारणेनामृतश्रुतेः ॥ ५४२
[2] उत्पत्त्यसंभवात्तस्याः श्रुतेर्गौणत्वमेव हि ।

[२-३-४ तेजोतस्तथाह्याह]

वायोरग्निरिति श्रुत्या तेजः स्यान्मातरिश्वनः ॥ ५४३

[आपः, पृथिवी, अधिकाररूपशब्दान्तरेभ्यः]

तेजस्सकाशादापस्तु स्यादद्भ्यः पृथिवी स्वयम् ।
अधिकारात्तथा [3] कृष्णरूपाच्छब्दान्तरान्मही ॥ ५४४

[तदभिध्यानादेव तु तल्लिङ्गात्सः]

इति प्राप्ते स एवेशः कारणं जगतां स्वयम् ।
न वाय्वादेस्तु [4] तदभिध्यानादत्र स ईश्वरः ॥ ५४५

---

[1] बृ. ४-३-३. [2] आनन्द—१. [3] यत्कृष्णं तदन्नस्य—छां. ६-४-१.
[4] अभिध्यानम्-इच्छा.

तल्लिङ्गा[1]त्सोऽकामयत बहुस्यामिति कामनात् ।
अप्तेजसोर्जडत्वेन चेक्षणं जगदीशितुः ॥ ५४६

[विपर्ययेण तु क्रमोऽत उपपद्यते च]

विपर्ययेण चोत्पत्तिक्रमोऽत उपपद्यते ।
[2] तथाक्षरात्संभवतीह विश्वमिति वर्णयन् ॥ ५४७
तेन क्रमेण जायन्त इत्याहाथर्वणी श्रुतिः ।
तपसा [3] चीयते ब्रह्म ततोऽन्नमभिजायते ॥ ५४८
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ।
यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ॥ ५४९
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ।

[अन्तरा विज्ञानमनसीत्यादि]

पृथ्वीं जलं चान्तेरण विज्ञानमनसी क्रमात् ॥ ५५०
अन्नात्प्राणो मनः सत्यमिति तल्लिङ्गतश्चरेत् ।
उक्तरीतिर्वाऽविशेषादन्नानन्तर्यमत्र च ॥ ५५१
पौर्वापर्यं श्रुतं चैवमन्नात्प्राणस्ततो मनः ।
मनसः सत्यतायास्तु श्रवणादिति वै स्थितिः ॥ ५५२
न चोत्पत्तिश्च रूपेण विज्ञानमनसोस्तयोः ।
अनादिताया वाच्यत्वात्तच्चराचररूपिणः ॥ ५५३
देहस्यान्नविकारत्वादन्नाऽनन्तर्यवर्णनात् ।

[चराचरव्यपाश्रयस्त्वित्यादि]

तथा चराचरोत्पत्तिर्व्यपाश्रय उदीरितः ॥ ५५४
विज्ञानमनसोर्जन्म भाक्तं तद्भावभावनात् ।
सत्यां देहसमुत्पत्तौ विज्ञानमनसोर्जनेः ॥ ५५५
व्यपदेशात्ततश्चात्र स्वरूपेण तयोर्जनेः ।
विरहान्न च भूतानामुत्पत्तिक्रमभञ्जनम् ॥ ५५६

---

[1] आनन्द—६. [2] मुण्ड—१-१-७. [3] मुं—१-१-८.

[२-३-५ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः]

किं जीवस्य समुत्पत्तिरुत नास्तीति संशयः ।
यथा वाऽग्नेर्विस्फुलिङ्गा [1] व्युच्चरन्तीत्युपक्रमे ॥ ५५७
सर्व एते किलात्मानो व्युच्चरन्तीति च श्रुतेः ।
उत्पद्यत इति प्राप्ते न जीवस्य समुद्भवः ॥ ५५८
अनुक्तत्वात्प्रकरणे छान्दोग्योपनिषद्गणैः ।
न जीवो म्रियते नित्य इत्यादिश्रुतिदर्शनात् ॥ ५५९
यथा वह्नेर्विस्फुलिङ्गा निर्गच्छन्ति तथैव च ।
जीवानां निर्गमस्तस्मान्न विरोधोऽस्ति कश्चन ॥ ५६०

[२-३-६ ज्ञोऽत एव]

ज्ञानस्वरूपः किं वाऽऽत्मा ज्ञातः किं वेति संशयः ।
[2] विज्ञानघन इत्याद्यैः प्राप्ता ज्ञानस्वरूपता ॥ ५६१
ज्ञातैव ह्य[3]थ यो वेदेष्वजिघ्राणीति वाक्यतः ।
[4] द्रष्टा श्रोता तथा मन्ता बोद्धेत्यादिश्रुतीरणात् ॥ ५६२
गुणस्य गुणिनो भेदाभिप्रायोदाहृता श्रुतिः ।

[२-३-७ उत्क्रान्तिगत्यागतीनाम्]

किं जीवोऽणुपरीमाणो मध्यमो वा महान् किमु ॥ ५६३
मध्यमं तु परीमाणं निरस्तं चार्हतक्रमे ।
उत्क्रान्तिगत्यागतीनां श्रवणादणुरेव सः ॥ ५६४
उत्क्रान्तिश्चावयवतो न विभोरुपपद्यते ।
लोकान्तरानुगमनं पुनरागमनं तथा ॥ ५६५

[स्वात्मना चोत्तरयोः]

गत्यागती स्वात्मनैव न भवैः करणैर्वृतः ।

---

[1] व्युच्चरन्ति–निगच्छन्ति. बृ–४-१-२०. [2] बृ–४-४-१२. [3] छां–८-१२-५. [4] बृ–५-७-२३.

[नाणुरतच्छ्रुतेरित्यादि]

[1] स वा एष महान् वाक्ये नाणुरात्मेति[2] चेरणात् ॥ ५६६
परमात्म ऽधिकारात्तच्छ्रुतेर्जीवोऽणुरेव हि ।

[स्वशब्दोन्मानाभ्याञ्च]

[3] एषोऽणुरात्मा वाक्येन तथोन्मानेन चाप्यणुः ॥ ५६७
[4] वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः सः विज्ञेयः स चानन्त्याय कल्पते ॥ ५६८
[5] आराग्रमात्रो ह्यवरोऽपि दृष्ट इति वर्णनात् ।
नन्वणुत्वे तु जीवस्य [6] सर्वदेहगता कथम् ॥ ५६९
वेदनामुपलभ्येत तत्रेदं पठितं खलु ।

[अविरोधश्चन्दनवत्]

अविरोधश्चन्दनवच्चैतस्य गुणयोगतः ॥ ५७०

[अवस्थितिवैशेष्यादित्यादि]

अवस्थितेश्च वैषम्यादिति चेन्न तथा भवेत् ।
हृदये ह्यभ्युपगमान्न विरोधोऽस्ति कश्चन ॥ ५७१

[गुणाद्वा लोकवत्]

गुणाद्वा लोकवच्चात्र चैतन्यगुणयोगतः ।
मणिप्रदीपकादीनां प्रभा व्याप्ता यथाऽखिलम् ॥ ५७२
चैतन्यव्याप्तितः कृत्स्नदेहव्यापित्वसङ्गतिः ।
कथं गुणस्तु गुणिनमन्तरा वर्तते यथा ॥ ५७३
न पटव्यतिरेकेण शुक्लो वर्तेत वै गुणः ।
प्रभा दीपगुणो न स्यात् तेजोऽन्यद्विरलाङ्गकम् ॥ ५७४

---

[1] बृ–६-४-२२. [2] चेच्छ्रुणु–पा. [3] मुं–३-१-९. [4] श्वे–५-९.
श्वे–५-८. [6] सर्वदेहवतां–पा. सर्वदेहगता–तत्तद्देहगतयावदवयवव्यापित्वम्.

[व्यतिरेको गन्धवत्]

व्यतिरेको गन्धवत् स्यादप्राप्तकुसुमादिषु ।
चैतन्यस्य गुणस्यात्र व्यतिरेकस्तथाप्यणोः ॥ ५७५
ननु गन्धस्याश्रयेण सह विश्लेष एव चेत् ।
अपक्षयः प्रसज्येत तदा तु कुसुमादिषु ॥ ५७६
हीयेत च गुरुत्वाद्यैस्तन्नैव परिदृश्यते ।
न चाल्पत्वाद्विशिष्टानां विशेषो नोपलभ्यते ॥ ५७७
स्फुटं गन्धोपलब्धिः स्यात्तर्हि लोके प्रतीयताम् ।
गन्धद्रव्यं मयाघ्रातमिति गन्धस्तु नेत्यपि ॥ ५७८
[1] तथाऽभावाद्यथाज्ञानं गुणानां व्यतिरेकता ।

[तथा च दर्शयति]

तथा च [2] दर्शयत्येवमालोमभ्य इति श्रुतिः ॥ ५७९
चैतन्यस्य गुणत्वं न तस्यैवात्मस्वरूपतः ।

[पृथगुपदेशात्]

चैतन्यस्यात्र व्यापित्वे जीवव्यापित्वमत्र चेत् ॥ ५८०

[तद्गुणसारत्वादित्यादि]

पृथक्तयोपदेशाच्च प्रज्ञयेत्यादिवाक्यतः ।
ननु ज्ञानगुणत्वेऽस्य विज्ञानमिति वाक्यतः ॥ ५८१
विज्ञानशब्दवाच्यत्वमिति तद्गुणसारतः ।
विज्ञानव्यपदेशः स्यात् प्राज्ञवल्लवणाब्धिवत् ॥ ५८२

[यावदात्मभावित्वादित्यादि]

तद्यावदात्मभावित्वाच्चादोषस्तस्य दर्शनात् ।
गोत्ववाचकगोशब्दादतद्गोव्यक्तिवर्णनात् ॥ ५८३

---

[1] तथा ह्याद्यं तथा ज्ञानं—पा.     [2] छां—८-१-८.

ज्ञानाभावात्सुषुप्त्यादौ यावदात्मत्वमत्र न ।

[२-३-३० पुंस्त्वादिवदित्यादि]

सतः पुंस्त्वादिवत्त्वस्याभिव्यक्तिरुपपद्यते ॥ ५८४

विद्यमानं यथा पुंस्त्वं बाल्यादौ कारणात्मना ।
यौवने चाविर्भवेत्तत्सुषुप्तौ करणात्मना ॥ ५८५

जाग्रदादावभिव्यक्तमतो दोषो न कश्चन ।
ज्ञातृत्वं च तथाऽणुत्वं सम्यगेव प्रसाधितम् ॥ ५८६

सुषुप्तेर्ज्ञप्तिरूपत्वे विभुत्वे बाध उच्यते ।

[२-३-३१ नित्योपलब्धीत्यादि]

नित्योपलब्धिरथवाऽनुपलब्धिः प्रसज्यते ॥ ५८७

नियमोऽन्यतरस्याथ प्रसज्येतान्यथा पुनः ।

[२-३-३२ कर्ता शास्त्रार्थवत्त्वात्]

जीवः कर्ताऽथवा नेति संशये च समागते ॥ ५८८

साङ्ख्यास्तावद्वर्णयन्ति जीवः कर्ता न चेति ते ।
तस्यानाधेयातिशयतया विरहतः[1] कृतेः ॥ ५८९

असङ्गो ह्ययमित्याद्यैरसङ्गत्वोपवर्णनात् ।
तस्मिन्निमित्तसंयोगाभावाच्चेति समीरितम् ॥ ५९०

बुद्धेरेव तु कर्तृत्वमिति प्राप्तेऽथ चोच्यते ।
शास्त्रार्थवत्वात्कर्ता स यजेत जुहुयादिति ॥ ५९१

शास्त्रे जीवस्य कर्तृत्वं सम्यगेव प्रतीयते ।
अन्यथाऽनर्थकं शास्त्रं स्यादेवं प्रतिपादिते ॥ ५९२

न चानाधेयातिशयतयाऽभावः कृतेरिति ।
सुखाद्यतिशयानां च प्रत्यक्षेणोपलम्भनात् ॥ ५९३

---

[1] श्रुतेः—पा.

अनाधेयातिशयतया असिद्धेरितीरितम् ।
नैवं निमित्तसंयोगाविरहः पठ्यतां त्वया ॥ ५९४
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
सम्यङ्गनिमित्तसंयोगः श्रुत्येति प्रतिपादितः ॥ ५९५
[1]असङ्गत्व श्रुतिश्चेयमस्य जीवस्य जाग्रती ।
स्वप्नदृष्टेन सम्बन्धाभावदर्शनतास्त्वियम् ॥ ५९६
नित्यं संयोगाविरहाभिप्रायेण समीरिता ।

[२-३-३३ विहारोपदेशात्]

तद्विहारोपदेशाच्च करणोपरतौ तथा ॥ ५९७

[२-३-३४-५ उपादानात्, व्यपदेशाच्चेत्यादि]

उपादानाच्च कर्तृत्वं क्रियायां व्यपदेशतः ।
[2] विज्ञानं यज्ञमित्याद्यैर्ननु विज्ञानशब्दतः ॥ ५९८
बुद्धिः समीहिता तेन कथं जीवस्य कर्तृता ।
सूच्येतेति च नेत्युक्तं निर्देशो जीवरूपिणः ॥ ५९९
न बुद्धेर्जीवनिर्देशः स्यान्निर्देशविपर्ययः ।
विज्ञानेनेत्येवमेव [3] निरदिक्षत्तदा श्रुतिः ॥ ६००

[२-३-३६ उपलब्धिवदनियमः]

क्रियाया अप्यनियमः प्रसज्येतोपलब्धिवत् ।

[२-३-३७ शक्तिविपर्ययात्]

यदि बुद्धिर्हि कर्त्री स्यात्तदा शक्तिविपर्ययः ॥ ६०१
आप्नुयात्कर्तृशक्तिं च त्यजेत्कारणशक्तिकाम् ।

[२-३-३८ समाध्यभावाच्च]

आत्मनः कर्तृताऽभावे [4] समाधिविरहो भवेत् ॥ ६०२

---

[1] बृ-६-३-१५. [2] आनन्द-५. [3] निरदिक्षत्-शब्दोच्चारणमकरिष्यत्.
[4] समाधिः-समाधानविशिष्टा बुद्धिः.

प्रकृतेः पुरुषस्यापि विवेकज्ञानतस्तदा ।
बुद्धेरेवं च कर्तृत्वाभावादिति समीरितम् ॥ ६०३

[२-३-३९-४० यथा च तक्षोभयथा, परात्तु तच्छ्रुतेः]

यथा च तक्षोभयथा परादेव तु कर्तृता ।
एष ह्येवेत्यादिवाक्यैस्तस्य प्रेरकता श्रुता ॥ ६०४
नन्वीश्वरप्रेर्यता चेन्न स्याज्जीवस्य कर्तृता ।
बलवत्सलिलौघेन ह्रियमाणेव कर्तृता ॥ ६०५

[२-३-४१ कृतप्रयत्नापेक्षस्त्वित्यादि]

कृतप्रत्नयसापेक्षे विहितप्रतिषिद्धयोः ।
यजेतेति न हन्तव्य इति चैवमुपात्तयोः ॥ ६०६
अवैयर्थ्यादिभ्य इति शास्त्रं व्यर्थं तदन्यथा ।

[२-३-४२ अंशो नानेत्यादि]

यथा वह्वेर्विस्फुलिङ्ग ईशांशो जीव ईरितः ॥ ६०७
[1] सोऽन्वेष्टव्यादिवाक्येन नानात्वव्यपदेशतः ।
अन्यथा चापि वेदेषु चात्यन्ताभेद उच्यते ॥ ६०८
[2] ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा इति ।
हीनजात्युक्तितः सर्वं ब्रह्मेति समुदीरितम् ॥ ६०९

[२-३-४३-४४ मन्त्रवर्णात्, अपि स्मर्यते]

[3] पादोऽस्य विश्वा भूतानीत्येवं ब्रह्मांशवर्णनात् ।
[4] ममैवांशो जीवलोके जीवभूतः सनातनः ॥ ६१०
इत्यादिस्मृतिभिर्जीव ईश्वरांश उदाहृतः ।
नन्वीश्वरस्य जीवानां चाभेदे स्वीकृते सति ॥ ६११

---

[1] छां–८-७-१. [2] संहितोपनिषत्. [3] पुरुषसूक्तम्. [4] गीता–१५-७.

जीवदुःखेन दुःखी स्यादभेदाच्च तयोर्न च ।

[२-३-४५-४६ प्रकाशादिवत्तु नैवं परः, स्मरन्ति च]

परप्रकाशादिवच्च स्वस्वरूपाविशेषतः ॥ ६१२

स्मरन्ति च व्यासमुख्या जीवदुःखान्न चेश्वरः ।

दुःखीति स्मृतिषु स्वैरमुत्तरेण स्फुटोऽर्थतः ॥ ६१३

तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।

[1] न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥ ६१४

[2] कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।

[3] तयोरन्यः पिप्पलं स्वाद्वत्तीत्याद्यैश्च तत्स्फुटम् ॥ ६१५

[२-३-४७ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्]

अनुज्ञापरिहारौ द्वौ [4] यजेतेति न भक्षयेत् ।

देहसम्बन्धतो ज्योतिरादिवद्देशभेदतः ॥ ६१६

[२-३-४८ असन्ततेश्चाव्यतिकरः]

ननु [5] देहोत्तरं भाविफलसाङ्कर्यमित्यतः ।

नासन्ततेश्च साङ्कर्यं तथा विधिनिषेधयोः ॥ ६१७

तेषां बहव आत्मानो भिन्नाः सर्वगताः पुनः ।

तेषां सर्वात्मना सर्वदेहयोगाविशेषतः ॥ ६१८

[२-३-४९ आभास एव च]

सुखदुःखादिसाङ्कर्यादात्माभासास्त एव हि ।

सर्वेषां देहसम्बन्धाविशेषेऽपि तथा पुनः ॥ ६१९

[२-३-५० अदृष्टानियमात्]

तथादृष्टविशेषाच्च ततः कस्य चिदेव हि ।

सुखादियोगो नान्येषामदृष्टविरहादतः ॥ ६२०

---

[1] गीता–५-१०. [2] धर्मात्मा–पा. [3] श्वेताश्वतर ४-६. मुण्डक–३-१-१.
[4] ज्योतिष्टोमेन यजेतेत्यादिः अनुज्ञा, न कलंजं भक्षयेदित्यादिः परिहारः, इति भावः. [5] देहान्तरं–पा.

न साङ्कर्यमतः प्राह चादृष्टनियमादिति ।

[२-३-५१ अभिसन्ध्यादिष्वपि चैवम्]

अभिसन्ध्यादिकानां च प्रधानगतता यदि ॥ ६२१

साधारण्यं पूर्ववत्स्यादात्मगत्वेऽपि वै पुनः ।

मनस्संयोगाविशेषात्साधारण्यं तु केवलम् ॥ ६२२

विभुत्वे[1]प्यात्मनः स्वस्वदेहावच्छिन्नदेशके ।

सुखादिकं संभवति न साङ्कर्यमतः परम् ॥ ६२३

[२-३-५२ प्रदेशभेदादिति चेन्नान्तर्भावात्]

प्रदेशादिति चेन्नान्तर्भावाज्जीवास्तदंशकाः ।

जीवेशयोस्तु सामान्याभेद एव समीहितः ॥ ६२४

तयोः स्वाभाविको व्यक्तिभेदः सर्वसमीहितः ।

---

[अथ द्वितीये चतुर्थः पादः— २-४-१ तथा प्राणाः]

किमिन्द्रियाणि जायन्त उत नेत्यत्र संशयः ॥ ६२५

[2] एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

इत्यादिश्रुतिषूत्पत्तिश्रवणादिति चेच्छृणु ॥ ६२६

न जायते यथा वात्मा तथा प्राणेन्द्रियाण्यपि ।

[२-४-२ गौण्यसंभवात् तत्प्राक्छ्रुतेश्च]

तदुत्पत्तिश्रुतिर्गौणी प्राणोत्पेत्तरसंभवात् ॥ ६२७

[3] अनेन जीवेनेत्यादि श्रुत्यर्थस्यानुसारतः ।

तत्प्राकछ्रुतिश्च गौण्येव [4] प्राणा वा ऋषयस्त्विति ॥ ६२८

[२-४-३-५ तत्पूर्वकत्वाद्वाचः, सप्तगतेर्विशेषितत्वाच्च, हस्तादयस्तु-स्थितेतो नैवम्]

तत्पूर्वकत्वाद्वाचश्च ततस्सप्तेन्द्रियाणि तु ।

गतेर्विशेषितत्वाच्च हस्तादय इमे पुनः ॥ ६२९

---

[1] स्वात्मनः-वा. [2] मु—२-१-३. [3] छा—६-३-२. [4] शतपथ ६-१-१.

स्थितितो नैव मन्तव्यं प्राणाः सप्तैव चेत्यतः ।

[२-४-६-७ अणवश्च, श्रेष्ठश्च]

प्राणाश्चैतेऽणवः प्रोक्ताः स्थूलाश्चेन्मृतिकालतः ॥ ६३०

निर्गच्छन्तः शरीरान्ते बलादहिरिव स्फुटम् ।

तच्छ्रेष्ठपञ्चवृत्तिश्च मनोवद्व्यपदिश्यते ॥ ६३१

[२-४-८ न वायुक्रिये पृथगुपदेशात् ]

अणुश्च मुख्यप्राणोऽसौ नच वायुक्रिये पृथक् ।

उपदेशात्प्राण एव ब्रह्मणः श्रुतिवाक्यतः ॥ ६३२

[२-४-९ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः]

जीवस्य कर्तृभोक्तृत्वे प्राणः स्याच्चक्षुरादिवत् ।

सर्वार्थत्वेन करणं न स्वतन्त्रं कदाचन ॥ ६३३

सहैव शिष्यते प्राणस्तत्र तैश्चक्षुरादिभिः ।

[२-४-१० अकरणत्वाच्च न दोषस्तथा हि दर्शयति]

न दोषोऽकरणत्वाच्च तथा दर्शयति [1] श्रुतिः ॥ ६३४

[२-४-१३ ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ]

अधिष्ठानं ज्योतिरादेस्तथा मननतः खलु ।

देवताश्चेदधिष्ठात्र्यस्तासां भोक्तृत्वमत्र चेत् ॥ ६३५

सत्यामधिष्ठातृतायां प्राणवत्करणावलेः ।

स्वामिनैव तु जीवेन सम्बन्धः श्रुतिचोदितः ॥ ६३६

अथ यत्रैतदाकाशमनुरूपा च सा स्मृतिः ।

[२-४-१४ तस्य च नित्यत्वात् ]

[२-४-१५ न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ]

तन्नित्यत्वाच्च जीवस्य नह वै श्रुतिचोदनात् ॥ ६३७

प्राणानां नित्यसम्बन्धो जीवेनैव समीरितः ।

उत्क्रान्तिप्रलयादौ तदनुवृत्तेश्च दर्शनात् ॥ ६३८

---

[1] यस्मिन् उत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः छा–५-१-७.

[1] तमुत्क्रामन्तमित्यादि श्रुत्या तत्प्रातिपादनात् ।
अग्न्यादिप्राणसम्बन्ध अनित्य इति वर्णितः ॥ ६३९
अग्न्यादीनामभावेऽपि प्रलये प्राणसत्त्वतः ।
अग्न्यादीनां ततस्तस्मादधिष्ठातृत्वमिष्यते ॥ ६४०
श्रेष्ठात्प्राणात्तदन्यत्र पृथक्त्वद्व्यपदेशतः ।
प्राणात्तत्त्वान्तराण्येव वागादीनि तथा श्रुतिः ॥ ६४१

[२-४-१६ भेदश्रुतेर्वैलक्षण्याच्च]

[2] एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
व्यपदिष्टः पृथक् प्राण एवमादिवहुश्रुतौ ॥ ६४२
वागादिभ्यश्च भेदेन पृथक् प्राणश्रुतेरिति ।
वैलक्षण्याच्च भेदः स्यात्तस्मात्तत्त्वान्तराणि हि ॥ ६४३

[२-४-१७ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ]

नामरूपव्याकारणं किं वा जीवैककर्तृकम् ।
उतेशकर्तृकं वेति संशयेऽत्र समागते ॥ ६४४
संज्ञामूर्त्योरत्र [3] क्लृप्तिस्त्रिवृत्कुर्वत ईश्वरात् ।
[4] सेयमित्यादिवाक्यैस्तदुपदेशात्तथैव हि ॥ ६४५
[5] तात्त्रिवृत्करणं भौममिदमाप्यमिति स्फुटम् ।
कथं त्रिभागमाशङ्क्य ह्यध्यात्मं च विभाजनम् ॥ ६४६

[२-४-१८ मांसादि भौमं यथाशब्दमितरयोश्च]

भूमौ व्रीह्यादिरूपाया मांसाद्याध्यात्मकार्यकम् ।
लोहितादि तथैवापां तथैवाग्न्यादितेजसः ॥ ६४७

---

[1] बृ–४-४-२. [2] मु–२-१-३. [3] क्लृप्तेस्त्रि–पा. [4] तत्कर्तृकरणं–पा.
[5] सेयं देवतैक्षत छां–६-३-२.

[२-४-१९ वैशेष्यात्तु तद्वादस्तद्वादः]

तत्तद्वादस्तु वैशेष्यात्तत्तद्भागविशेषतः ।
स्यात्तत्तद्व्यपदेशस्तु तस्मात्सर्वं समञ्जसम् ॥ ६४८

लिङ्गादेव व्याकरणं सर्वं तन्नामरूपयोः ।
त्रिवृत्करणमित्यादि लिङ्गादेवेति साधितम् ॥ ६४९

तस्माद्धृदम्बुजे धार्यं लिङ्गं ब्रह्मपदाभिधम् ।

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञनील-
कण्ठकृते निगमागमसारसङ्ग्रहे क्रियासारे ब्रह्मसूत्र-
द्वितीयाध्यायव्याख्यारूपः द्वितीयोपदेशः ॥

---

॥ श्री नन्दिनाथाय नमः ॥

## अथ तृतीयः उपदेशः

[ससङ्गति तृतीयाध्यायोपोद्धातः अध्यायार्थसङ्ग्रहश्च]

स्मृतिन्यायविरोधस्तु द्वितीये विनिवारितः ।
परपक्षानपेक्षत्वं सम्यगेव प्रपञ्चितम् ॥ १

श्रुतिविप्रतिषेधश्च सम्यक् पूर्वं परीहृतः ।
जीवस्याजन्यतादीनि जीवोपकरणानि च ॥ २

प्रपञ्चितानि चेदानीं जीवे करणबृंहिते ।
संहारस्य प्रकारश्च तदवस्थान्तराणि च ॥ ३

ब्रह्मत्वं च तथाविद्या भेदाभेदौ ततः पुनः ।
गुणोपसंहृतिश्चाथ तथैवानुपसंहृतिः ॥ ४

विद्यातः पुरुषार्थस्य सिद्धिः विद्याविधिः तथा ।
विधिप्रभेदा वक्ष्यन्ते तदङ्गसहकारिणाम् ॥ ५

मुक्तिरूपफलस्यापि नियमः चोदितः कृतौ ।
उपदेशे तृतीयेऽस्मिन् चिन्त्यते बहुयुक्तिभिः ॥ ६

प्रसङ्गात्तं किमप्यन्यत् प्रथमं च प्रपञ्चयते ।
पञ्चाग्निविद्यामाश्रित्य गतिभेदस्य संहृतेः ॥ ७

[तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यां]

जीवो मुख्यानथ प्राणानिन्द्रियाणि स्वयं तथा ।
मनोविद्याकर्मपूर्वप्रज्ञाश्च परिगृह्य च ॥ ८

पूर्वदेहं विहायासौ देहान्तरगतः खलु ।
भूतसूक्ष्मैः परिवृतः याति जीवो नवेति च ॥ ९

फलं यत्रानुभूयेत तत्र स्युर्भूतमात्रकाः ।
इत्येवं तदुपादानमनर्थकमिति ह्यतः ॥ १०

देहान्तर[1]समापत्तौ देहबीजैश्च सूक्ष्मकैः ।
भूतैश्च संपरिष्वक्तो जीवो रंहति गच्छति ॥ ११

प्रश्नाद्वे[2]त्थादिवाक्योक्ता [3]द्यौराद्याच्चनिरूपणात् ।

[३-१-२ त्र्यात्मकत्वात्तु भूयस्त्वात्]

[4]पञ्चम्यामाहुतावाप इत्यद्भिः परिवेष्टितः ॥ १२

यातीति गम्यते सर्वैर्वेष्टितः कथमित्यतः ।
त्र्यात्मकत्वात्तु भूयस्त्वाद्बह्वापः शुक्लशोणिते ॥ १३

[३-१-३ प्राणगतेश्च]

इतश्च भूतगमनं प्राणानां [5]गतिवर्णनात् ।
निराश्रया हि प्राणानां न गतिर्भवतीत्यतः ॥ १४

[३-१-४ अग्न्यादिगतेरिति चेन्न भाक्तत्वात्]

प्राणानामग्न्यादिगतिर्न जीवेन सहेति चेत् ।
न भाक्तत्वात्तदग्न्यादिगमनं चौपचारिकम् ॥ १५

[३-१-५ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः]

प्रथमेऽग्नौ द्युलोकाख्ये श्रूयन्ते नाऽप इत्यतः ।
तच्छ्रद्धां जुह्वतीत्येवं श्रवणान्नाप इत्यतः ॥ १६

कथं वा तत्र [7]पञ्चम्यामाहुतावाप ईरिताः ।
इति चेन्न हि ता आपः श्रद्धाशब्देन वर्णिताः ॥ १७

उपपत्तेरन्यथा तद्वाक्यं नैवोपपद्यते ।
प्रयोगदर्शना[8]च्छ्रद्धा वा आप इति तत्र च ॥ १८

---

[1] समापत्तिः–गमनम्. [2] वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति. छा-५-३-३. [3] असौ वाव लोको गौतमाग्निस्तस्यादित्य इत्यारभ्य, इति तु पञ्चम्यामित्यन्तेन. छा-५-९-१. [4] छा-५-९-१. [5] तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति (बृ-६-४-२) श्रुत्येति भावः. [6] तस्मिन्नेतस्मिन्नग्नौ देवा श्रद्धां जुह्वति छां-५-४-२. [7] छां-५-९-१. [8] अपः प्रणयति श्रद्धा वा आपः, तृतीयाष्टके २-४-३३.

[३-१-६ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः]

परिष्वक्ताश्च ते जीवा न रंहेयु[1]रतच्छ्रुतेः ।

इति चेन्नेष्टपूर्तादिकारिणां [2] गतिदर्शनात् ॥ १९

[३-१-७ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति]

नच व्याघ्रादिभिरिव भक्षितानां च दैवतैः ।

उपभोगः सम्भवतीत्यतः प्राहात्र सूत्रकृत् ॥ २०

भाक्तं वानात्मवित्त्वात्तथा हि [3] दर्शयतीति च ।

[३-१-८ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च]

कृतात्यये[4]ऽनुशयवान् [5] दृष्टस्मृतिवचोद्वयात् ॥ २१

यथेतं च तथाऽनेवं श्रुत्यैव प्रतिपादितम् ।

[३-१-९ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः]

[6] चरणादवरोहोक्तिः कथमत्रेति चेन्न च ॥ २२

कर्मोपलक्षणार्था सा चरणश्रुतिरित्यथ ।

कार्ष्णाजिनिः किलाचार्यो मन्यते स्वयमत्र तु ॥ २३

[३-१-१० आनर्थक्यमिति चेन्न तदपेक्षत्वात्]

आचारानर्थक्यमिति न तस्यैव ह्यपेक्षणात् ।

आचारहीनं न पुनन्ति वेदा आचारसङ्गाः किल हेतवः स्युः ॥ २४

आचाराः पतिधर्मास्ते शिवपूजादिलक्षणाः ।

[३-१-११ सुकृतदुष्कृते एवेति बादरिः]

बादरिः केवलं प्राह तथा सुकृतदुष्कृतैः ॥ २५

---

1 जीवस्याश्रवणादित्यर्थः. 2 अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते. छां–५ १०–३ इत्यादिनेत्यर्थः. 3 यथा पशुरेवं स देवानां इत्यादिना अनात्मविदः देवोपकरणत्वं दर्शयतीत्यर्थः. 4 अनुशयः भुक्तशिष्टं कर्म. 5 दृष्टं-श्रुतिः. सा च. "तद्य इह रमणीयचरणाः" छां–५–१०–७ इत्यादिः । स्मृतिश्च "वर्णाः आश्रमाश्च" गौ–२ इत्यादिः. 6 रमणीयचरणाः छां–५–१०–७ इत्यादौ.

[३-१-१२ अनिष्टादिकारिणामपि च श्रुतम् ]

इष्टाद्यकारिणां पुंसामपि चन्द्रगतिः श्रुतेः ।
इष्टाद्यकारिणां चैव किं साम्यं तदकारिणाम् ॥ २६

[३-१-१३ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ]

इतरेषां [1] संयमने दुःखमप्यनुभूयते ।
स्यातामारोहावरोहौ चन्द्रमण्डल इत्यपि ॥ २७
[2] वैवस्वतं सङ्गमनमिति प्राह श्रुतिः स्वयम् ।

[३-१-१४ स्मरन्ति च]

[3] स्मरन्ति चैवं यामीया यातना नाचिकेतके ॥ २८

[३-१-१५ अपि सप्त]

अपि चैते सप्तसङ्ख्या नरका रौरवादयः ।
दुष्कृत्यभोगभुक्तेन स्मृताः पौराणिकैः पुनः ॥ २९
चित्रगुप्तादयोऽप्यन्येऽधिष्ठातारः स्मृताः कथम् ।

[३-१-१६ तत्रापि तद्व्यापारादविरोधः]

यमस्याधिष्ठातृतेति तद्व्यापारयतस्ततः ॥ ३०
अविरोधो, रौरवादावाज्ञा तत्र नियामिका ।

[३-१-१७ विद्याकर्मणोरिति तु प्रकृतत्वात्]

प्रकृतत्वात्तु तद्विद्याकर्मणोरिति सूचितम् ॥ ३१
तुशब्दः पूर्वपक्षस्य निवृत्तौ वर्तते स्वयम् ।
इष्टाद्यकारिणां पुंसां चन्द्रारोहावरोहणे ॥ ३२
न स्तः कुतो [4] वेत्थ यथा स लोको नेति वै श्रुतेः ।
प्रश्नप्रत्युत्तरे वाक्ये न श्रूयेते यतो ह्युभे ॥ ३३

---

1 संयमनं-यमशासनम्. 2 तैत्तिरीयारण्यके. 3 ‘ सर्वे चैते वशं यान्ति यमस्य भगवान् किल ’ इत्यादिना वि. पु–२–७–५. 4 वेत्थ यथा केनासौ लोको न सम्पूर्यते छा–५-३-३.

[1] अथैतयोर्नेति वाक्यादिति तत्रैतयोः पथोः ।
तद्विद्याकर्मणोरित्येतत्तस्मात्प्रकृतत्वतः ॥ ३४
ते विद्याकर्मणी देवयानाख्यपितृयानयोः ।
प्रकृते द्वे प्रतिपदौ तद्य इत्थं विदुस्त्विति ॥ ३५
[2] इष्टापूर्ते दत्तमिति कर्म तत्रार्थवर्णनम् ।
विद्यया ये देवयाने कर्मणा पितृयानके ॥ ३६
पुरुषा नैवाऽधिकृतास्तेषामेष उदाहृतः ।

[३-१-१८ न तृतीये तथोपलब्धेः]

क्षुद्रजन्तुस्वरूपोऽसकृदावर्त्यस्तृतीयकः ॥ ३७
पन्था भवत्यतोऽनिष्टकारिणां चन्द्रमण्डले ।
आरोहणावरोहौ द्वौ तृतीयस्थानके न च ॥ ३८
नियमः पञ्च संख्याया देहलाभाय कल्प्यताम् ।

[३-१-१९ स्मर्यतेऽपि च लोके]

अन्तरेणाहुतेः संख्यानियमं तु तृतीयके ॥ ३९
देहप्राप्त्युपलब्धेश्च [3] जायस्वेत्यादिवाक्यतः ।

[३-१-२० दर्शनाच्च]

चतुर्विधे मतग्रामे श्रुत्या सम्प्रतिपादिते ॥ ४०
जरायुजाण्डसञ्जात स्वेदजोद्भिज्जलक्षणे ।
स्वेदजोद्भिज्जयोस्तत्र ग्राम्यधर्मान् विनापि च ॥ ४१
उत्पत्तिदर्शनान्नैवाहुतिसंख्या यमः पुनः ।

[३-१-२१ तृतीयशब्दावरोधः संशोकजस्य]

खल्वेषामिति वाक्येन त्रिविधग्रामवर्णनात् ॥ ४२

---

[1] अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति छा–५-१०-८. [2] अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते छां–५-१०-३. [3] छां. ५-१०-८.

चातुर्विध्यं कथं वा स्यादतः प्राहात्र सूत्रकृत् ।
वाच्य उद्भिज्जशब्देन स्वेदजस्यापि सङ्ग्रहः ॥ ४३
भूजलोत्पत्तिसाम्येन स्वेदजोद्भिज्जयोर्द्वयोः ।

[३-१-२२ तत्स्वाभाव्यापत्तिरुपपत्तेः]

तत्स्वाभाव्यापत्तिरुपपत्तेरन्यस्य नाऽन्यथा ॥ ४४

[३-१-२३ नातिचिरेण विशेषात्]

अत्राऽऽकाशादिप्रपत्तौ प्राग्व्रीहिप्रातिपत्तितः ।
संशयः किं दीर्घकालं पूर्वपूर्वसमानता ॥ ४५
उताल्पकालमिति च तत्र चानियमः पुनः ।
किं चिन्नियामकाभावादिति प्राप्ते तदोच्यते ॥ ४६
अल्पकालेनाऽवरोह आव्रीहिप्राप्ति तत्र च ।
विशेषवचना[2]च्चातो[1] वै खल्वित्यादिवाक्यतः ॥ ४७
व्रीह्यादिभावादूर्ध्वं च दुर्निस्सृतिरिति ब्रुवन् ।
पूर्वत्राचिरकालत्वं दर्शयत्यातिसंस्फुटम् ॥ ४८

[३-१-२४ अन्याधिष्ठिते च पूर्ववदभिलापात्]

जीवान्तराधिष्ठिते च व्रीह्यादौ श्लेषमात्रकम् ।
तत्रानुशयिनः सम्यग्वर्णयेरन् कुतः पुनः ॥ ४९
आकाशादौ यथा कर्मासङ्कीर्तनमथान्तरा ।
अभिलापस्तथात्रापि चाभिलापस्य [3] दर्शनात् ॥ ५०

[३-१-२५ अशुद्धमिति चेन्न शब्दात्]

अशुद्धमिति चेन्नैव [5] शब्दादेव विधानतः ।
इतो व्रीह्यादिसंश्लेषमात्रं व्रीह्यादिभावतः ॥ ५१

---

[1] तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजं उद्भिजमिति (छां. ६-३-१). [2] रोहमात्री–पा. [3] अतो वै खलु दुर्निष्प्रपतरम् छा. ५-१०-६). [4] रमणीयचरणा . . . . . . कपूयचरणाः इत्यादिना (छा. ५-१०-६–७). [5] हिरण्यशरीरः ऊर्ध्वस्स्वर्गं लोकमेति । न वा उवे तन्म्रियसे न रिष्यसि (यजु. ४-९-६).

[३-१-२६ रेतस्सिग्योगोऽथ]

अनन्तरं च रेतस्सिग्भाव आम्नायते श्रुतौ ।
मुख्यो न रेतःसिग्भावः सम्भवत्यत्र वै पुनः ॥ ५२

सिक्च्छब्दार्थो रजोरूढयौवना रेत एव हि ।
तत्कथं नोपचरितं पूर्वोक्तं किल वै पुनः ॥ ५३

तत्तद्भावात्पुमान्नानानुशयी प्रतिपद्यताम् ।
रेतःस्सिग्योग एवातो रेतःस्सिग्भाव उच्यते ॥ ५४

तद्वद्व्रीह्यादिभावोऽपि व्रीहिसंश्लेषमात्रकम् ।

[३-१-२६ योनेः शरीरम्]

योनेः शरीरं रेतस्सिग्योगस्यानन्तरं स्त्रियाः ॥ ५५

योनेरधि शरीरं च श्रितं तद्य इहादिना ।
व्रीह्यादिसंश्लेषमात्रे वाक्यं तदपि युज्यते ॥ ५६

---

[अथ तृतीयाध्याये द्वितीयः पादः]

जीवावस्थाभेदजातमिदानीं तु प्रपञ्चयते ।

[३-२-१ सन्ध्ये सृष्टिराह हि]

उपक्रम्य [1] न यत्र [2] स्वपितीत्याद्यामनन्ति च ॥ ५७

स्वप्ने जीवो रथादीन् किं सृजत्येवोत पश्यति ।
[3] स्वप्नस्थानं तृतीयं तु सन्ध्यं श्रुतिषु दर्शनात् ॥ ५८

भवेत्सन्ध्योर्द्वयोर्लोकस्थानयोः सन्ध्यमुच्यते ।
तत्र सन्ध्ये सृष्टिरेव [4] सृजतीत्याह हि श्रुतिः ॥ ५९

---

[1] न तत्र रथा न रथयोगा इत्यादि (बृ. ६-३-१०). [2] यत्रैतत्पुरुषः स्वपिति नाम (छा. ६-८-१). [3] सन्ध्यं तृतीयं स्वप्नस्थानम् इत्यानुपूर्वी. [4] अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता (बृ. ६-३-१०).

[३-२-२ निर्मातारं चैके पुत्रादयश्च]

निर्मातारं चामनन्ति तत्र केचन शाखिनः ।
[1]य एष सुप्तेष्वित्यादि कामाः पुत्रादयश्च ये ॥ ६०

[३-२-३ मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात्]

मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपतः ।

[३-२-४ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ]

अनात्माभिनिवेशाच्चाप्यैश्वर्यं तत्तिरोहितम् ॥ ६१
अस्य जीवस्यात एव स्यातां बन्धविपर्ययौ ।

[३-२-५ देहयोगाद्वा सोऽपि]

ऐश्वर्यस्य तिरोधानं देहसम्बन्धतोऽथवा ॥ ६२

[३-२-६ सूचकश्च हि श्रुतेराचक्षते हि तद्विदः]

सूचकं च हि वेदोक्तेस्तद्विदश्च प्रचक्षते ।
[2]यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ॥ ६३
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ।
कल्याणं कुञ्जरारोहे तदन्यत् खरवाहने ॥ ६४
स्वयं स्रष्टुं नाऽर्हतीति स्वस्यैव शुभसूचकम् ।

[३-२-७ तदभावो नाडीषु तच्छ्रुतेरात्मनि च]

सुषुप्त्यवस्था चेदानीं सम्यगेव परीक्ष्यते ॥ ६५
अस्य स्वप्नस्य चाभावः सुषुप्तमिति कथ्यते ।
[3]तद्यत्रैतत्सुप्तवाक्ये सुप्तो नाडीष्वितीरितम् ॥ ६६

---

[1] कठ–२-५-८. [2] छा–५-२-९. [3] यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति (छा. ८-६-३).

[1] ताभिः प्रत्यवसृप्येति प्रवेशश्च पुरीततौ ।
[2] सता सौम्येह सम्पत्तिस्तवेति समुदीरितम् ॥ ६७

नाड्यादीनि किमेतानि निरपेक्षाणि वै पुनः ।
स्फुटं सुषुप्तिस्थानानि चान्योन्यापेक्षया किमु ॥ ६८

स्फुटं समुच्चितेषु स्यान्नाडीष्वत्र हि तच्छ्रुतेः ।
नाड्यादीनां च सर्वेषां सुषुप्तिस्थानताश्रुतेः ॥ ६९

पर्यङ्के शेत इतिवच्छेते सा तु पुरीततौ ।
तत्समुच्चितमेवेदं स्थानं सुप्तेर्हि निश्चयः ॥ ७०

[३-२-८ अतः प्रबोधोऽस्मात्]

यतः समुच्चितं स्थानं प्रबोधोऽस्माच्च नित्यवत् ।
प्रबोधोऽनन्तरोक्तस्तु चिन्त्यते सुप्तवांस्तु यः ॥ ७१

[३-२-९ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः]

स एवोत्तिष्ठतीत्येवमुतान्यो वा शरीरके ।
कर्मशेषाद्यनुष्ठानात्पूर्वेद्युः कर्म यत्कृतम् ॥ ७२

परेद्युरनुसन्धाय कर्मण्येष प्रवर्तते ।
[3] अनुस्मृतेः पूर्वशब्दाद्विधिभ्यश्चैक एव हि ॥ ७३

[३-२-१० मुग्धेऽर्धसम्पत्तिः परिशेषात्]

मुग्धो नामास्त्ययं सर्वैर्मूर्च्छितश्चेति वर्णितः ।
चिन्त्यते किमवस्थः स चतस्रश्चाप्यवस्थिकाः ॥ ७४

प्रबोधः प्रथमः स्वप्नः सुषुप्तिस्तदनन्तरम् ।
सम्पत्तिश्च तुरीया सा जीवस्येत्येव वर्णिताः ॥ ७५

---

[1] अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यः द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते (बृ. ४-१-२९). [2] यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति (छा. ६-८-१). [3] य एवाहं सुप्तः स एव प्रबुद्धोऽस्मीति प्रत्यभिज्ञानात् इत्यर्थः ।

नैव जागरितो मुग्धो विषयानीक्षणादिति ।
निस्संज्ञत्वान्न च स्वप्नान् पश्यत्येष ततोऽपि न ॥ ७६
प्राणोद्भवान्नापि मृतः सुषुप्तो न विलक्षणात् ।
सुप्तः प्रसन्नवदनो निमीलितनिजेक्षणः ॥ ७७
तन्मौग्ध्यमर्धसम्पत्तिः कर्मशेषे सति क्षितौ ।
प्रत्यागच्छेद्वाङ्मनसमसति क्षितिमण्डले ॥ ७८
प्राणोष्माणौ ततस्तत्र निर्गच्छत इति स्फुटम् ।
अत एवार्धसम्पत्तिर्मूर्च्छेति परिकीर्तिता ॥ ७९

[३-२-११ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि]

ब्रह्मस्वरूपमधुना सम्यगेवोपवर्ण्यते ।
श्रुतयः सन्त्युभयथा सर्वे कामादयो गुणाः ॥ ८०
सगुणत्वेन निर्वाह्या निर्गुणत्वेन काश्चन ।
तद्ब्रह्मोभयलिङ्गं किं किमन्यतरालिङ्गकम् ॥ ८१
स्वतश्चोभयलिङ्गत्वं परस्य ब्रह्मणो न हि ।
न ह्येकं वस्तु जगति रूपवच्चाप्यरूपि च ॥ ८२
नास्ति तर्हि स्थानतो वा पृथ्व्याद्युपधियोगतः ।
उपाधियोगतश्चापि नह्यन्यादृशवस्तुनः ॥ ८३
अन्यादृशस्वभावः स्यान्न स्वच्छः स्फटिको मणिः ।
अलक्तकादियोगेनाप्यस्वच्छो भवति स्वयम् ॥ ८४

[३-२-१२ भेदादिति चेन्न प्रत्येकमतद्वचनात्]

अस्वच्छतानिवेशस्य भ्रममात्रतया पुनः ।
नैवं तथोपाधिभेदाद्भिन्नत्वं ब्रह्मणः पुनः ॥ ८५
स्यात्तस्योभयलिङ्गत्वमिति चेन्न तथा भवेत् ।
तत्प्रत्युपाधिभेदं च शास्त्रादुक्ता ह्यभिन्नता ॥ ८६

[३-२-१३ अपि चैवमेके]

अपि चैवं [1] भेदनिन्दापूर्वकाभेदवर्णनात् ।

[३-२-१४ अरूपवदेव हि तत्प्रधानत्वात्]

तस्मान्नोभयलिङ्गं स्यादरूपि ब्रह्म केवलम् ॥ ८७

[2] तादृक्छ्रुतेः प्रधानत्वादन्यच्चोपासनापरम् ।
विवक्षितार्थवत्तन्नेत्येवं तत्र व्यवस्थितिः ॥ ८८

[३-२-१५–१७ प्रकाशवच्चावैयर्थ्यात्, आह च तन्मात्रम्, दर्शयति चाथो अपि स्मर्यते]

प्रकाशवच्चावैयर्थ्यं तन्मात्रं श्रुतिराह च ।
दर्शयत्यथ यद्वाक्यं स्मर्यते याज्ञवल्क्यके ॥ ८९

[4] अनन्यविषयं कृत्वा मनो बुद्धिमतीन्द्रियः ।
ध्येय आत्मा स्थिरो योऽसौ हृदये दीपवत्प्रभुः ॥ ९०

[३-२-१८ अत एव चोपमा सूर्यकादिवत्]

[5] एकोऽणुरात्माभिहितः प्रकाशो ह्यत एव हि ।
सूर्यकादिवदित्येवमुपमा चोपपद्यते ॥ ९१

[6] एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ९२

न सूर्यकादितुल्यत्व[7]मुपमाग्रहणादिति ।

[३-२-१९ अम्बुवदग्रहणात्तु न तथात्वम्]

सूर्यादिभ्योऽपि मूर्तेभ्यः पृथग्भूतं च दूरतः ॥ ९३

सर्वं च दृश्यते तत्र प्रतिबिम्बोदयोऽपि च ।
नात्मा मूर्तो न चास्माच्च पृथग्भूता उपाधयः ॥ ९४

---

[1] द्वा सुपर्णा (मु. ३-११) इत्यादिना. [2] आकाशो ह वै नामरूपयोर्निर्वहिता छां–८-१४-१ इत्यादि. [3] सत्यं ज्ञानमनन्तं ब्रह्मेति तै. आन–१-१. [4] याज्ञवल्क्यस्मृतौ. [5] आकाशमेकं हि यथा (याज्ञ. १४४) इत्यादिना. [6] याज्ञ प्रायश्चि, अध्यात्म १४४. [7] त्वं तद्वदग्रहणादिति- पा.

न विप्रकृष्टदेशाच्च सर्वगत्वादभेदतः ।
तस्मादयुक्तो दृष्टान्त इति तत्रोच्यते मया ॥ ९५

[३-२-२० वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च]

युक्त एव हि दृष्टान्तः प्रकृतांशोपमा यतः ।
तद्वृद्धिह्रासभाक्त्वं हि विद्याज्जलगतं हि तत् ॥ ९६
सूर्यस्य प्रतिबिम्बं हि जलवृद्धौ प्रवर्तते ।
ह्रसतीव तथा ह्रासे चलने चलतीव च ॥ ९७
भेदे च भिद्यत इव न ह्येवं परमार्थतः ।
तथात्वं भास्करस्यास्ति तत्त्वदृष्ट्यावधारय ॥ ९८
तथैकमेव हि ब्रह्म देहान्तर्भावतः स्वयम् ।
तद्धर्मान्वहतीहापि वृद्धिह्रासादिकं तथा ॥ ९९
दृष्टान्तदार्ष्टान्तिकयोरविरोधात्समञ्जसम् ।
[1] तत्सृष्ट्वेत्यादिवाक्येन ब्रह्मणो दर्शनात्तथा ॥ १००
[2] नेति नेत्यादिवाक्यैश्चाप्येतावत्त्वं हि मूर्तता ।

[३-२-२१ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः]

प्रकृतत्वान्निषिध्येत प्रपञ्चो न निषिध्यते ॥ १०१
ततः परिच्छिन्नरूपाद्भूयिष्ठं ब्रह्म केवलम् ।
[3] श्रुतिर्वदति ब्रह्मत्वं प्रपञ्चात्मकमेव तत् ॥ १०२

[३-२-२२ तदव्यक्तमाह हि]

[4] श्रुतिरव्यक्तमाहेयं न चाक्ष्याद्याः सरन्ति च ।
[5] अव्यक्तोऽयमचिन्त्योऽयमित्यादि बहुशः श्रुतौ ॥ १०३

---

1. तैत्तिरीयोपनिषत्. 2 बृ–४-३-६. 3 नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्. बृ–४-३-६.
4 न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम् तै. ना–१-१०.
5 गीता–२-२५

[३-२-२३ अपि संराधने प्रत्यक्षानुमानाभ्याम्]

अपि चैवं तमात्मानं ध्यानकाले तु योगिनः ।
पश्यन्ति श्रुतिरत्रेयं [1] ततस्तु तमिति श्रुतिः ॥ १०४
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।

[३-२-२४ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्]

प्रकाशादेर्गुणस्यापि ब्रह्मणश्चाभिधा यथा ॥ १०५
ब्रह्मप्रपञ्चयोरेवमभ्यासादैतदात्म्यके ।
सामानाधिकरण्यं च साधयामीदमत्र हि ॥ १०६
नाभेदस्तस्य मुख्यत्वादन्यत्र गुणयोगतः ।
सामानाधिकरण्यं [2] तद्बहु स्यामिति बोधतः ॥ १०७
तथा सङ्कल्पनं न स्या[3]द्बहु स्यामिति रूपतः ।
तथा च सृष्टिर्न भवेदभिधेयमतः खलु ॥ १०८
गुणत्वं न प्रकाशस्य किं तु ब्रह्मस्वरूपता ।
[4] विज्ञानमानन्दमिति तथैव प्रतिपादनात् ॥ १०९
सदृष्टान्तोपपन्नस्तद्दृष्टान्तो ध्यानकर्मणि ।
अभ्यासादेव वक्तव्यो गुणोऽसौ ब्रह्मणस्त्विति ॥ ११०
[5] यः सर्वज्ञः सर्ववित्च यस्य ज्ञानमयं तपः ।
[6] तमेव भान्तमित्यादौ ज्ञानकर्तृत्वमुच्यते ॥ १११
[7] भातीति लट्प्रत्ययेन कर्तृत्वस्यैव वर्णनात् ।
[8] तदैक्षतेत्यादिवाक्ये श्रुतत्वाच्च तथैव हि ॥ ११२

[३-२-२५ अतोऽनन्तेन तथा हि लिङ्गम्]

[9] सत्यं ज्ञानमनन्तं च ब्रह्मेत्यत्रात एव हि ।
अनन्तज्ञानपदयोः सामानाधिकरण्यकम् ॥ ११३

---

[1] ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः । मु—३-२-८. [2] ऐतदात्म्यमिदं सर्वं छां—६-८-७. [3] छां—६-२-३. [4] बृह—३-९-२८. [5] मु—१-१-९ [6] कठ—५-१५. [7] सोऽमिना ज्योतिषा भाति च तपति च, छां— ३-१८-३. [8] छां—७-२-३. [9] तैत्तिरीये आनन्दवल्ली.

अविरुद्धं नु चैवेदमभेदे किल तद्भवेत् ।
तथा हि लिङ्गमिति च तस्मात्सूत्रितवान्मुनिः ॥ ११४
ज्ञाधातोर्ल्युट्प्रत्ययान्तो ज्ञप्त्यर्थो भावसाधनः ।
नायमत्र ज्ञानशब्दस्तथा चे[1]त्प्रत्ययस्वरात् ॥ ११५
आद्युदात्तो भवेदन्तोदात्तश्चाधीयते ततः ।
ज्ञानमस्यास्तीति तत्र [2]मत्वर्थीयाच्च प्रतीयते ॥ ११६
ज्ञानवद्वचनस्तस्मादन्तोदात्तश्चि[3]तोऽस्त्विति ।
तथाचान्तोदात्तलिङ्गाद्ब्रह्मज्ञानगुणं स्मृतम् ॥ ११७

[३-२-२६ उभयव्यपदेशात्त्वहिकुण्डलवत्]

भेदाभेदाभ्युपगमे विरोध इति चेन्न हि ।
प्रामाणिकत्वेन तस्य विरोधाभाव उच्यते ॥ ११८
यथाहेः कुण्डलमहिः कुण्डलं चोभयस्मृतेः ।
अहिकुण्डलयोर्भेदाभेदौ ब्रह्मप्रपञ्चयोः ॥ ११९
[4]सच्च त्यच्चाभवदिति चोभयव्यपदेशतः ।

[३-२-२७ प्रकाशाश्रयवद्वा तेजस्त्वात्]

यथा प्रकाशाश्रयस्य चातपस्य च वै पुनः ॥ १२०
तदाश्रयस्य सवितुः स्वरूपाभेदकेऽपि च ।
तेजस्त्वेनाभेद एवं ज्ञेयं ब्रह्मप्रपञ्चयोः ॥ १२१

[३-२-२८ पूर्ववद्वा]

प्रकाशादेर्गुणस्यापि गुणिनो ब्रह्मणो यथा ।
भेदाभेदावेवमेव ज्ञेयं ब्रह्मप्रपञ्चयोः ॥ १२२

[३-२-२९ प्रतिषेधाच्च]

भेदाभेदौ विरुद्धौ तौ कथं स्वीकुरुते बुधः ।
अभेद एव चाप्यस्य साधनत्वात्समीहितः ॥ १२३

---

[1] प्रत्ययः, परश्च, आद्युदात्तश्च (अष्टा ३, १, १-३) इति सूत्रैः. [2] अर्श आदिभ्योऽच्. अष्टा. ५-२-१२७. [3] चितोऽन्त उदात्तः, अष्टा. ६-१-१६३
[4] तैत्तिरीयोपनिषत्.

तद्भेदव्यपदेशस्तु कल्प्यतामौपचारिकः।
इति चेत्प्रतिषेधाच्च [1]नेति नेति पुनः पुनः ॥ १२४

[३-२-३०-३२ परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः, सामान्यात्तु, बुद्ध्यर्थः पादवत्]

उपासनार्थं हेतुत्वं [2]पादवद्व्यपदिश्यते ।
कार्षापणचतुर्थोऽशस्तद्वत्पादः समीहितः ॥ १२५

[३-२-३३ स्थानविशेषात् प्रकाशादिवत्]

यन्मानव्यपदेशादि तन्न स्थानविशेषतः।
प्रकाशभेदः प्रासादगोपुराट्टालभेदतः ॥ १२६
तद्वद्ब्रह्मण एकस्य चाक्ष्यादिस्थानयोगतः ।
सम्बन्धभेदता तस्या भेदोऽपि व्यपादिश्यते ॥ १२७

[३-२-३४ उपपत्तेश्च]

एवं परोक्तहेतूंस्तु प्रोन्मथ्य बहुयुक्तिभिः ।
व्यासः सर्वात्मकत्वस्य साधकं हेतुमाह हि ॥ १२८

[३-२-३५-३६ तथान्यप्रतिषेधात्, अनेन सर्वगतत्वमायामशब्दादिभ्यः]

तथा[3]न्यप्रतिषेधाच्च ब्रह्म सर्वात्मकं मतम् ।
अनेन सर्वगततायामदभ्रादिकश्रुतेः[4] ॥ १२९
आयामो व्याप्तिवचनो यावान्वायमिति श्रुतेः ।

[३-२-३७ फलमत उपपत्तेः]

ईश्वरात्फलसम्प्राप्तिः सर्वाध्यक्षतया पुनः ॥ १३०

---

[1] नास्य जरयैतज्जीर्यतीत्यादिना. छा. ८-१-५. [2] चतुष्पाद् ब्रह्म. ३-१८-२ पादोऽस्य विश्वाभूतानि (पुरुषसू.) इत्यादिष्विवति. शेषः. [3] यस्मात्परं नापरमस्ति किं चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् इत्यादिना तताऽन्यस्यापरस्य प्रतिषेधादित्यर्थः (श्वे. ३-९). [4] तेनेदं पूर्णं पुरुषेण सर्वम् श्वे. ३-९.

देशकालविशेषाभिज्ञत्वात्कर्मानुरूपतः ।
कर्मणां फलदातासौ न कर्मान्वक्षनश्वरम् ॥ १३१

[३-२-३८ श्रुतत्वाच्च]

श्रुतत्वाच्चेश्वरादेव [1]स वा एष श्रुतेः फलम् ।

[३-२-३९. धर्मं जैमिनिरत एव]

धर्मं जैमिनिराचार्यः फलदातारमाह हि । १३२
उपपत्तेः श्रुतेश्चैव [2]यजेतेत्यादिदर्शनात् ।
न चापूर्वाख्यव्यापारद्वारा कर्म फलप्रदम् ॥ १३३
कर्मवैचित्र्यतस्तत्र फलवैचित्र्यसम्भवः ।
स्यातां वैषम्यनैर्घृण्ये चेश्वरस्यैकरूपतः ॥ १३४
अतो न फलदातृत्वं ब्रह्मणस्तूपपद्यते ।

[३-२-४० पूर्वं तु बादरायणो हेतुव्यपदेशात्]

बादरायण आचार्यः फलमीश्वरतस्त्विति ॥ १३५
कर्मकारयितृत्वेन फलदत्वेन च श्रुतेः ।
[3]यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥ १३६
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।
स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥ १३७
लभते च ततः कामान् मयैव विहितान् हि तान् ।
इति गीतासु चोक्तत्वात्फलदाता महेश्वरः ॥ १३८
विज्ञेयं ब्रह्मणस्तत्त्वं प्रमाणादि च तत्त्वकम् ।

———

[1] स वा एष महानज आत्मान्नादो वसुदानः बृ. ६-४-६४. [2] यजेत स्वर्गकामः, यजुषि २-५-५. [3] गीता ७-२१.

[अथ तृतीये तृतीयः पादः]

[३-३-१ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्]

व्याख्यातं तादिदानीं तु प्रतिवेदान्तमस्ति किम् ॥ १३९
विज्ञानभेदः किं नेति सम्यगत्र विचार्यते ।
प्रत्ययाः सर्ववेदान्ता विज्ञानस्य च तत्पुनः ॥ १४०
भवेत्तत्सर्ववेदान्तप्रत्ययं चैकमेव हि ।
चोदनाद्यविशेषाच्चाप्यु[1]पासीतेति रूपतः ॥ १४१

[३-३-२ भेदान्नेति चेदेकस्यामपि]

गुणभेदाच्च विद्याया नानात्वमिति चेन्न च ।
एकस्यामपि विद्यायां गुणभेदोपपत्तितः ॥ १४२
[2]न षोडशिग्रहणतस्तदग्रहणतस्तथा ।
अतिरात्रक्रतोर्भेदस्तस्माद्विद्यैक्यमेव हि ॥ १४३

[३-३-३ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः]

स्वाध्यायस्य [3]तथात्वेन [4]समाचारेऽतथाश्रुतेः ।
अधिकाराच्च सववत्तत्र तन्नियमो भवेत् ॥ १४४

[३-३-४ दर्शयति च]

वेदो विद्यैकतां वक्ति वेदैकत्वोपदेशतः ।

[३-३-५ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च]

विद्यैकत्वेऽपि चान्यत्रोक्तगुणानां तथैव च ॥ १४५
समाने चैव विज्ञाने उपसंहार एव हि ।
प्रयोजनैक्याद्विज्ञेयो विद्वद्भिर्विधिशेषवत् ॥ १४६

---

[1] ओमित्येतदक्षरमुद्गीथमुपासीत छां १-१-१. [2] अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीति श्रुतिभ्यामितिशेषः. [3] तथात्वेन—स्वाध्यायाङ्गत्वेन. [4] समाचारे—वेदव्रतोपदेशपरे समाचाराख्ये ग्रन्थविशेषे.

[३-३-६-७ अन्यथात्वं शब्दादिति चेन्नाविशेषात्, न वा प्रकरण भेदात् परोवरीयस्त्वादिवत्]

विद्यायास्तत्र नानात्वं [1]त्वं न इत्यादिकश्रुतेः ।
प्राणस्य कर्तृता तत्र कर्मतान्यत्र तन्न हि ॥ १४७

न विभक्तिकृताद्दोषाद्भेदः स्यादविशेषतः ।
तथैवोद्गीथविद्येति सा समाख्याविशेषतः ॥ १४८

परोवरीयस्त्वादिवन्न वा, प्रक्रमभेदतः ।
अविशिष्टेति न ज्ञेयं विद्यैकत्वं तदत्र चेत् ॥ १४९

तदुक्तं [2]पर इत्यादि सति प्रक्रमभेदके ।

[३-३-८-९ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि, व्याप्तेश्च समञ्जसम्]

संज्ञाया दुर्बलत्वेन संज्ञैकत्वं तदत्र च ॥ १५०

तत्सुप्रसिद्धभेदेषु ह्यग्निहोत्रादिकर्मसु ।
अस्ति कारकसंज्ञैक्यमभिधा तत एव हि ॥ १५१

[3]व्याप्तेरोमित्यादिकस्य ह्युद्गीथं तद्विशेषणम् ।

[३-३-१०-११ सर्वाभेदादन्यत्रेमे, आनन्दादयः प्रधानस्य]

सर्वाभेदात्तदन्यत्र चानन्दाद्या इमे गुणाः ॥ १५२

[३-३-१२-१३ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे, इतरे त्वर्थसामान्यात्]

न हि प्रियशिरस्त्वाद्युपचयापचयौ हि तौ ।
भेदे संभवतस्तौ च स भेदो नोपपद्यते ॥ १५३

[4]इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १५४

---

[1] अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत् बृ ३. ३. ७. [2] स एष परोवरीयानुद्गीथः इति छां. १. ९. २. [3] ओमित्येतदक्षरमुद्गीथं उपासीत. छां १-१-१. [4] कठोपनिषत्. ३-१०.

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ १५५
पुरुषस्तु परो ध्येयो नान्ये तत्रेन्द्रियादयः ।

[३-३-१४-१५ आध्यानाय प्रयोजनाभावात्, आत्मशब्दाच्च]

ध्यातुः प्रयोजनाभावात्पुरुषे तु प्रयोजनम् ॥ १५६
इतश्च पुरुषो ध्येय [1]आत्मशब्दश्रुतेरपि ।

[३-३-१६-१७ आत्मगृहीतिरितरवदुत्तरात्, अन्वयादिति चेत्स्यादवधारणात्]

गृह्यते पर एवात्मा तत्रा[2]त्मा वा इति श्रुतौ ॥ १५७
यथा [3]सदेव सोम्येति तादृगुत्तरवाक्यतः ।
अन्वयादिति चेद्ब्रह्म परं स्यादवधारणात् ॥ १५८
बृहदारण्यशाण्डिल्यविद्या वाजसनेयिनाम् ।

[३-३-१९-२२ समान एवं चाभेदात्, सम्बन्धादेवमन्यत्रापि न वा विशेषात्, दर्शयति च]

समान एवं चाभेदान्मनोमयगुणादिमत् ॥ १५९
सम्बन्धादेवमन्यत्राप्य[4]ध्यात्मं चा[5]धिदैवतम् ।
[6]तस्यैतस्य तदेवेति श्रुतिर्दर्शयतीश्वरम् ॥ १६०

[३-३-२३ संभृतिद्युव्याप्त्यपि चातः]

[7]वीर्यासंभृतिरेवं च [8]द्युनिवेशादिभूतयः ।
तत्र ता नोपसंहार्या आधिदैवैक्यभूतयः ॥ १६१

---

[1] अन्योऽन्तर आत्मानन्दमयः, तैत्तिरीयानन्दवल्ली. [2] आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजै. १-१-१. [3] छां. ६-२-१. [4] तस्योपनिषदहमित्यध्यात्मम्. बृ. ५-५-४ [5] तस्योपनिषदहरित्यधिदैवतम्. बृ. ५-५-३. [6] तस्यैतस्य तदेव रूपं यदमुष्य रूपम्. छां. १-७-५. [7] ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥ [8] यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः छां. ८-१-३.

[३-३-२४ पुरुषविद्यायामपि चेतरेषामनाम्नानात्]

[1] ताण्डिनां ब्राह्मणे चापि विद्या पुरुषसंज्ञिका ।
उक्ताः केचन धर्माश्च तैत्तिरीयकशाखिना ॥ १६२

तथा पुरुषसंज्ञं च [2] तस्यैवं विदुषः श्रुतौ ।
तैत्तिरीयोपसंहार्या धर्माय इतरत्र ये ॥ १६३

किं वा नैवोपसंहार्या इत्येवं विषये सति ।
इति तेषामनाम्नानान्नोपसंहरणं भवेत् ॥ १६४

[३-३-२५ वेधाद्यर्थभेदात्]

मन्त्रा वेधाद्यर्थभेदादाभिचारिककर्मणि ।
विनियुक्ताः प्रवर्ग्यादौ नोपसंहार्यता ततः ॥ १६५

[३-३-२६ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युप-
गानवत्तदुक्तम्]

अस्ति चा[3]श्वीयरोमाणि रूपेयं ताण्डिनां श्रुतिः ।
हानं दुष्कृतमात्रस्य ज्ञानिनां प्रतिपादितम् ॥ १६६

अथ कौषीतकीश्रुत्या[4]शुभे सुकृतदुष्कृते ।
ये ज्ञानिनां तयोर्हाने सुकृतं ज्ञातयः प्रियाः ॥ १६७

उपयन्त्यप्रियाः पापमिति तत्रैव वर्णितम् ।
हानं क्वचित्तयोरेव विभागेन प्रियाप्रियैः ॥ १६८

उपायनं च यत्र स्याद्धानमेव ततः श्रुतौ ।
नोपायनं तत्र तूपायनं सन्निपतेन्न वा ॥ १६९

तत्र च श्रवणाभावात्सन्निपातो नहीति चेत् ।
तथा विद्यान्तरत्वाच्च नोपसंहार एव चेत् ॥ १७०

---

[1] पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि छां. ३-१६-१. [2] तै. नारायणे. ५२ अनुवाकः. [3] अश्व इव रोमाणि विधाय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य छां. ८-१३-१. [4] तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्–कौषीतकी. १-४.

केवलायां चापि हानावुपायनमिदं भवेत् ।
तच्छेषत्वाद्ध्यानवाक्यशेषस्तूपायनं पुनः ॥ १७१

कुशानामविशेषेण वानस्पत्यत्वसंभवे ।
[1]औदुम्बराः कुशाश्चेति वाक्यशेषाद्यथा पुनः ॥ १७२

छन्दतस्तूपधान्यादिसादृश्यं प्रतिपादितम् ।
एवं श्रुत्यन्तरोपात्तोपायनं प्रतिपादितम् ॥ १७३

[३-३-२७-२८ साम्पराये तर्तव्याभावात्तथा ह्यन्ये, छन्दत उभयाविरोधात् ]

तथा ह्यन्ये [2]साम्पराये तर्तव्यविरहादिति ।
विदुषां छन्दतश्चैवाप्यविरोधात्तथोभयोः ॥ १७४

साम्परायेऽप्यध्वानि वा हानं सुकृतपापयोः ।

[३-३-२९ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः]

ननु स्यात्साम्परायेऽपि हानं सुकृतपापयोः ॥ १७५

अनर्थिका गतिः सा हि सङ्कल्प्या तत्कृते पुनः ।
सर्वगत्वेन च ब्रह्मप्राप्तेर्गत्यनपेक्षणात् ॥ १७६

अन्तरेण गतिं चात्र ब्रह्मप्राप्तेरसंभवात् ।
सार्था गतिश्चोभयथाप्यन्यथा हि विरोधतः ॥ १७७

[३-३-३०-३१ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्, यावदधिकारमवस्थितिराधिकारिकाणाम्]

तल्लक्षणार्थोपलब्धेर्गतेरर्थस्तु सङ्गतः ।
[3]ज्ञानिनामपि सर्वेषां आधिकारं स्थितिर्मता ॥ १७८

[३-३-३२ अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ]

यत्रैव श्रूयतेऽत्रैवेत्येवं चानियमः खलु ।
न च श्रुतिविरोधोऽस्ति [4]तद्य इत्थं विदुस्त्विति ॥ १७९

---

[1] औदुम्बराः कुशाः इति शाट्यायनिनः, वानस्पत्याः कुशाः इति कालापिनः. [2] साम्परायः—देहादपक्रमणकालः. [3] "विज्ञानिनां च सर्वेषां देवयानाङ्कता मता" इति पाठान्तरम्. [4] छां. ५-१०-१.

शब्दानुमाने चैवोभे चोक्तार्थप्रतिपादके ।
"[1]शुक्लकृष्णगती ह्येते जगतः शाश्वते मते ॥ १८०
एकया यात्यनावृत्तिमन्यययावर्तते पुनः ।

[३-३-३३ अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ]

अधिकारवतां यावदधिकारमवस्थितिः ॥ १८१
ताः सर्वत्रावरोद्धव्याः सर्वास्त्वक्षरबुद्धयः ।
सामान्यतद्भावतश्च तदौपसदवन्मतम् ॥ १८२
उद्गातृशाखासिद्धानामध्वर्युर्योग उच्यते ।
पुरोडाशप्रदानं तत्प्रोक्तमध्वर्युकर्तृकम् ॥ १८३
प्रधानतन्त्रताङ्गानामिहाप्यक्षरतन्त्रता ।
यत्रापि तद्विशेषाणामक्षरेणैव योजना ॥ १८४

[३-३-३४ इयदामननात् ]

इयदामननाद्वा[2] सुपर्ण इत्यादिमन्त्रके ।
[3]ऋतं पिबन्तावित्यादिमन्त्रे चाथर्वशाखिनः ॥ १८५

[३-३-३५ अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ]

विद्यैक्यं किल नानात्वं प्राप्तं विद्याभिधा इति ।
विद्यैकत्वमथाम्नानाद्वितोपेतस्य केवलम् ॥ १८६
विद्यैकत्वं स्वात्मनश्च भूतग्रामवदन्तरा ।

[३-३-३६ व्यतिहारो विशिंषन्ति हीतरवत्]

विद्यैकत्वे प्रतिवचो भेदसङ्गतिरत्र चेत् ॥ १८७
नोपदेशाच्च विद्यैक्यं यथा [4]तत्त्वमसीति हि ।
व्यतीहारो विशिंषन्ति हीतरे तं गुणा यथा ॥ १८८

---

1 भगवद्गीता ८-२६. 2 श्वेत. ४-६. 3 कठोपनिषत् ३-१.
4 छान्दोग्ये ६-९-४.

[३-३-३७–३८ सैव हि सत्यादयः, कामादीतरत्र तत्र चायतनादिभ्यः]

सैव सत्यादयोह्यत्र चैकस्मिन् संहताः पुनः ।
तत्रायतनसाम्येन कामादन्यत्र तत्र च ॥ १८९
कामानामुपसंहारं विद्यैक्यं च विदुर्बुधाः ।

[३-३-३९–४० आदरादलोपः, उपस्थितेऽतस्तद्वचनात् ]

अलोपो ह्यादराज्ज्ञेयो वैश्वानरसमाह्वये ॥ १९०
उपस्थितस्तद्वचनात्तद्य[1]द्भक्तमिति श्रुतेः ।
प्राणाग्निहोत्रलोपः स्याद्भोजने लोप एव चेत् ॥ १९१

[३-३-४१ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ]

क्रतौ कर्माङ्गविज्ञानस्य स्यादनियमः स्फुटम् ।
तद्दृष्टेर्वेदवचनैः पृथक्कर्मफलं भवेत् ॥ १९२
प्रतिबन्धो नैव कर्म फलसिद्धाविति स्फुटम् ।

[३-३-४२ प्रदानवदेव तदुक्तम् ]

प्रदानवत्तदुक्तं स्यात्संवर्गोपासने पुनः ॥ १९३

[३-३-४३ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि]

लिङ्गभूयस्त्वतस्तद्धि बलीयस्तदपि स्फुटम् ।

[३-३-४४–४७ पूर्वविकल्पः+वत्, अतिदेशाच्च, विद्यैव तु निर्धारणादर्शनाच्च, श्रुत्यादिबलीयस्त्वाच्च न बाधः]

पूर्वो विकल्पः प्रकरणात् स्यान्मानसवत् क्रिया ॥ १९४
अतिदेशाच्च विद्यैव न क्रियाशेष ईरितः ।
तद्विद्या चित एवेति स्फुटं निर्धारणात्पुनः ॥ १९५
दर्शनाच्चापि श्रुत्यादिबलीयस्त्वान्न बाधनम् ।

[३-३-४८–५० अनुबन्धादिभ्यः+क्तम्, न सामान्या+पत्तिः, परेण च शब्दस्य+बन्धः]

अनुबन्धादिकेभ्योऽत्र प्रज्ञान्तरपृथक्त्ववत् ॥ १९६

---

[1] यद्भक्तं प्रथममागच्छेत्–छां. ५-१९-१.

दृष्टश्च राजसूयादौ तदुक्तं पूर्वतन्त्रके ।
मानसग्रहसामान्यात् क्रत्वङ्गत्वं न चेष्यते ॥ १९७
पुरुषार्थत्वोपलब्धेर्यथाग्नेर्मृत्युतो[1]च्यते ।
[2]असौ वावेत्यादिमन्त्रे न लोकस्याग्निभावना ॥ १९८
तत्परेण च शब्दस्य ताद्विध्यं लक्ष्यते पुनः ।
भूयस्त्वात्त्वनुबन्धश्च न कर्माङ्गतया पुनः ॥ १९९
ततो मनश्चिदादीनां सिद्धा विद्यात्मतैव हि ।

[३-३-५१ एक आत्मनः शरीरे भावात्]

शरीरव्यतिरिक्तात्मा स्फुटं चेह प्रसाध्यते ॥ २००
अत्रैक आहुश्चैतन्यादयस्त्वभिमताः पुनः ।
आत्मधर्मतया चान्तर्देहेनैव बहिः पुनः ॥ २०१
तस्मात्तद्देहधर्माः स्युश्चैतन्याद्या गुणाः पुनः ।
तस्माच्छरीरमात्मेति प्राप्ते सूत्रकृदुक्तवान् ॥ २०२

[३-३-५२ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्]

व्यतिरेकस्तु तद्भावभावित्वान्नोपलब्धिवत् ।
देहान्य आत्मा विज्ञेय इति सिद्धमतः स्फुटम् ॥ २०३

[३-३-५३ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्]

नैते चाङ्गावबद्धास्तु प्रतिवेदं तथैव च ।
व्यतिष्ठेरंस्तु शाखासु चाविशेषाच्छ्रुतेः पुनः ॥ २०४

[३-३-५४-५५ मन्त्रादिवद्वाऽविरोधः, भूम्नः क्रतु .......दर्शयति]

मन्त्रादिवद्वाऽविरोधः शाखान्तरगतं परम् ।
समस्तशैवभूम्नश्चोपासनं तु प्रमाणवत् ॥ २०५
सर्वाङ्गयुक्तदर्शादिक्रतुवच्च समीरितम् ।
तथा हि दर्शयत्येषा ज्यायस्त्वं श्रुतिरेव हि ॥ २०६

---

[1] स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः, इत्यनेन इति भावः.
[2] अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव परिश्रिताः इति.

[३-३-५६-५७ नानाशब्दादिभेदात्, विकल्पोऽविशिष्टफलत्वात्]

भिन्नान्येवोपासनानि तत्र शब्दादिभेदतः ।
अविशिष्टफलत्वाच्च विकल्पोऽन्याय्य एव हि ॥ २०७

[३-३-५८-९ काम्यास्तु, अङ्गेषु]

यथाकामं समुच्चीरन् काम्यास्तु किल तन्न वा ।
पूर्वहेतोरभावेन चेच्छानुष्ठानसङ्गतेः ॥ २०८

उपासनाङ्गावबद्धा समुच्चयाथवा न वा ।
यथाश्रयाः पदार्थाः समुच्चीयन्ते तदाश्रयाः ॥ २०९

[३-३-६०-२ शिष्टेश्च, समाहारात्, गुणसाधारण्यश्रुतेश्च]

प्रत्यया अपि चैवं च शिष्टेश्चापि तथा भवेत् ।
समाहाराच्च तत्रैवं गुणसाधारणश्रुतेः ॥ २१०

[३-३-६३-४ नवा तत्सहभावाश्रुतेः, दर्शनाच्च]

न यथाश्रयभावो वा तत्स्वभावाश्रुतेरिति ।
प्रत्ययासहभावस्य दर्शनाच्च श्रुतौ पुनः ॥ २११

तस्मादपि यथाकाम्यमित्येवं च प्रपञ्चितम् ।
वेदान्तजन्यज्ञानस्य पुरुषार्थैकहेतुता ॥ २१२

इति तृतीये तृतीयः पादः

---

[अथ चतुर्थः पादः । पादार्थसङ्ग्रहः]

सहकारिविभेदाश्च निरूप्यन्ते मयाधुना ।
वेदान्तजन्याद्विज्ञानात् पुरुषार्थो हि सिध्यति ॥ २१३

[३-४-१ पुरुषार्थोऽतश्शब्दादिति बादरायणः]

बादरायण आचार्यो मन्यते [1]तरति श्रुतेः ।

[३-४-२ शेषत्वात् पुरुषार्थवादः यथान्येष्विति जैमिनिः]

कर्तृत्वेनात्मनः कर्मशेषत्वाज्ज्ञानमप्यथ ॥ २१४

---

[1] तरति शोकमात्मवित्.

आज्यावेक्षणवत् कर्तृसंस्कारश्च तथा श्रुतिः ।
[1]यदाङ्क्ते चक्षुरेवादिरर्थवादो यथा तथा ।। २१५

[३-४-३–५ आचारदर्शनात्। तच्छ्रुतेः। समन्वारम्भणात्]

आचारदर्शनाज्ज्ञानं कर्माङ्गं तच्छ्रुतेरपि ।
समन्वारम्भणाद्विद्या कर्माङ्गमिति निश्चितम् ।। २१६

[३-४-६-७ तद्वतो विधानात्। नियमात्]

विद्यावतां कर्मविधेर्विद्या कर्माङ्गमीरितम् ।
नियमाच्चायुषः साङ्गे विनियोगाच्च कर्मणि[2] ।। २२७
विद्या कर्माङ्गमित्येव विद्यायास्तु स्वतन्त्रतः ।
फलसाधनतायां च कालाभावेन केवलम् ।। २२८
विद्यानुष्ठानविरहप्रसङ्गाच्च ततः पुनः ।
न विद्या पुरुषार्थस्य हेतुरित्यत्र चोच्यते ।। २२९.

[३-४-८ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्]

जीवाधिकोपदेशात्तु तस्य कर्मण्यकर्तृता ।
न तज्ज्ञानस्य संस्कारतयैवं तत्फलश्रुतेः ।। २३१
अर्थवादत्वमुचितं तथा दर्शयति श्रुतिः ।
[3]यः सर्वज्ञः सर्वविच्च यस्य ज्ञानमयं तपः ।। २३२
तद्बादरायणमतमतियुक्ततरं हि तत् ।

[३-४-९. तुल्यं तु दर्शनम्]

तुल्यत्वं दर्शितं विद्याङ्गत्वेनापि च कर्मणि ।। २३३
आचारस्योपपत्तेश्च कर्माङ्गत्वं च तावता ।

[३-४-१० असार्वत्रिकी]

तदसार्वत्रिकं यच्च [4]विद्ययेत्यादिकश्रुतेः ।। २३७

---

1 यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते. 2 कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः (ईशावास्ये) इत्यनेनेति शेषः. 3 मुण्डक १-१-९. 4 छां. १-१-१०.

वीर्यवत्तरता यत्र विषयाः कर्मणः पुनः ।

[३-४-११ विभागः शतवत्]

तत्र कर्माङ्गविद्या सा या विद्या तु फलान्तरा ॥ २३८

मोक्षप्रयोजनाच्चैव न तदङ्गमिति स्फुटम् ।

समन्वारम्भणं शब्दादिभ्य इत्येव वर्णितम् ॥ २३९

शतं च दक्षिणेत्युक्ते ऋत्विग्भ्यः प्रविभज्य च ।

दीयते तद्वदेवात्र विभागः परिकीर्त्यते ॥ २४०

[३-४-१२ अध्ययनमात्रवतः]

[1]अधीत्याचार्यकुलत इत्यत्राधीतिमात्रतः ।

कर्माधिकारः प्रोक्तः स्यान्नैव विद्यावतः खलु ॥ २४१

दृष्टत्वेनाधीतिविधिरर्थबोधेऽपि कारणम् ।

अतो विद्यावतः पुंसो ह्यधिकारो न चान्यथा ॥ २४२

[३-४-१३ नाविशेषात्]

सत्यं कर्मावबोधे तु ब्रह्मबोधस्य नाङ्गता ।

नहि क्रत्वन्तरज्ञानं क्रत्वन्तरमपेक्षते ॥ २४३

एवं विद्या न कर्माङ्गं किं तु कर्मावबोधनम् ।

[2]कुर्वन्नेवेह कर्माणीत्यादौ तत्र प्रमाणके ॥ २४४

विद्या साधारणं कर्म तथानुष्ठेयमात्रकम् ।

कर्मशब्देन सम्प्रोक्तं सकाम्यमविशेषतः ॥ २४५

[३-४-१४ स्तुतयेऽनुमतिर्वा]

स्तुतयेऽनुमतिर्वापि कर्म यज्ञादिकं यदि ।

विद्यायाः पुरुषार्थस्य हेतुता न निषिध्यते ॥ २४६

उत्तरस्मिन् तथा वाक्ये फलहेतुत्ववर्णनात् ।

---

[1] छां. ८-१५-१. [2] ईशावास्ये. २

[३-४-१५-१७ कामकारेण चैके। उपमर्दं च। ऊर्ध्वरेतस्सु च शब्दे हि]

कामकारेण चाप्येके उपमर्दं च केचन॥ २४७
आश्रमेषूर्ध्वरेतस्सु विद्यैव श्रूयते स्फुटम्।
न काम्यानि तु कर्माणि तेषु सन्ति महात्मसु॥ २४८
विद्या ततो न कर्माङ्गमित्येवं श्रुतिराह हि।
[1]धर्मस्कन्धास्ततो यज्ञोऽध्ययनं दानमेव च॥ २४९
प्रथमस्तप एवासौ द्वितीयो ब्रह्मचर्यवान्।
तृतीयोऽत्यन्तसन्मानमाचार्ये चावसाययन्॥ २५०
सर्व एते पुण्यलोका भवन्तीति श्रुतीरणात्।
[2]ब्रह्मसंस्थामृतत्वं च तथेतीति च दर्शनात्॥ २५१
ऊर्ध्वरेतस्स्वाश्रमोक्ताः कृतप्रायाः श्रुतीरिताः।
अतश्च वीरशैवानां मतमभ्यर्हितं श्रुतम्॥ २५२

[३-४-१८ परामर्शं जैमिनिरचोदनाच्चापवदति हि।]

परामर्शं जैमिनिश्च तथैवाचोदनादिति।
[3]वीरहा वेत्यादिवेदास्तथैवापवदन्ति हि॥ २५३

[३-४-१९ अनुष्ठानं बादरायणस्साम्यश्रुतेः]

गार्हपत्यं त्वनुष्ठेयमाश्रमान्तरमित्यपि।
साम्यश्रुतेर्मन्यते च मुनिर्वै बादरायणः॥ २५४

[३-४-२० विधिर्वा धारणवत्]

विधिर्वायं [4]धारणवद्यथाधस्तादिति स्थले।
विधिराश्रीयते तद्वद्विधिरत्रापि गीयते॥ २५५
ऐकाश्रम्यं त्विति प्राह गौतमोऽपि स्वधर्मके।
प्राह्लादिहादिवाक्ये च बोधायनमुनिस्तथा॥ २५६

---

[1] छां. २-२३. [2] छां. २-२३-२. [3] यजु. १-५-२. [4] अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति.

तथाश्रमान्तराणां चाप्यदृष्टत्वमपीपठत् ।
कथं गृहाद्वनाद्वेति प्रत्यक्षेणाव्यवस्थिते ॥ २५७
आपस्तम्बप्रभृतयः प्रव्रजेद्ब्रह्मचर्यवान् ।
तस्याश्रमविकल्पं चाप्येके ब्रुवत इत्यपि ॥ २५८
अत एवाश्रमाचाररराहित्यं वीरशैवके ।
अत्याश्रमीयधर्माश्च बहवो भान्ति चागमे ॥ २५९
त एव चर्षिभिर्दृष्टा स्वस्वधर्मेषु निर्मिताः ।
अतोऽपि वीरशैवानामाचारा वैदिकोत्तराः ॥ २६०
अतः पूर्वं मया प्रोक्तं पाशत्वं कर्मणां पुनः ।
ब्रह्मज्ञानेन मुक्तेस्तु प्राप्यत्वं नान्यथा पुनः ॥ २६१
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ।
इति युष्माभिरेवोक्तं तथैवागमसंहिताः ॥ २६२
ज्ञानप्राबल्यमत्राहुः कर्मणां नाङ्गता पुनः ।
वागद्वैतं न कार्यं हि कार्यमाचरणेऽपि च ॥ २६३
अत एवाहुरमृतं लिङ्गं काटमिति [1] स्फुटम् ।
अष्टावरणविज्ञानं पञ्चाचारानुवर्तनम् ॥ २६४
उद्गीथविद्यासाम्येन वीर्यवत्वं प्रयाति हि ।
वीरशैवाचारसङ्गो वीर्यवत्तर उच्यते ॥ २६५
अभेदं च पुरस्कृत्य धर्मास्तेषु च वर्णिताः ।
गुरुर्लिङ्गं जङ्गमश्च त्रितयं चैकमेव हि ॥ २६६
अत एव पदोदाभिषेचनं शिवलिङ्गके ।
कुर्वन्त्यभेददृष्ट्या च भेदकृत्पापमश्नुते ॥ २६७
मनो यस्य तु संलग्नं शिवे चैव चरे गुरौ ।
स विज्ञानी च वेदान्तज्ञानी श्रुतिविभागवान् ॥ २६८

---

1 'स्मृतं' इति पा.

यैर्भेददृष्ट्या मर्त्यत्वं गुरोर्लिङ्गस्य चाश्मता ।
कल्पिताज्ञाततत्त्वास्ते तत्त्वज्ञानपराङ्मुखाः ॥ २६९
गुरोश्वरस्य चाभेदं लिङ्गस्य च तथा भिदाम् ।
यो जानाति स एवासौ नीलकण्ठो भवेद्बुधः ॥ २७०
अस्मत्प्रमाणजालं तु जागर्ति किरणागमे ।
युष्मत्स्मृतिपुराणेषु विस्तरेणैव वर्तते ॥ २७१

[३-४-२१–२ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्, भावशब्दाच्च]

स्तुतिमात्रमुपादानादितिचेन्न हि तत्तथा ।
अपूर्वत्वात्तदुद्गीथोपासनोक्तपरार्थ्यता ॥ २७२

[३-४-२३ पारिप्लवार्था इति चेन्न विशेषितत्वात् ]

[1]पारिप्लवार्था इति चेदा[2]ख्यानश्रुतयः पुनः ।
विशेषितत्वात्पारिप्लवमाचक्षीत च श्रुतौ ॥ २७३
पारिप्लवार्था नैवेमा इति सम्यक् सुनिश्चितम् ।

[३-४-२४ तथा चैकवाक्योपबन्धात् ]

[3]एकवाक्योपबन्धाच्च तथा चाख्यायिकाः पुनः ॥ २७४
अत एवागमेष्वेवमुक्ता आख्यायिका इति ।

[३-४-२५ अत एव चाग्नीन्धनाद्यनपेक्षा]

निगमागमसारूप्यं स्फुट एवाभवत्ततः ॥ २७५
इदानीं चिन्त्यते विद्या कर्मसापेक्षणा न वा ।
विद्यायाः पुरुषार्थस्य हेतुतायां च केवलम् ॥ २७६
अग्नीन्धनादिकर्मानपेक्षा स्यादिति चेच्छृणु ।

[३-४-२६ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ]

सर्वापेक्षा च [4]यज्ञादिश्रुतेरश्ववदीरिता ॥ २७७

---

[1] आख्यानानि शंसन्तीति विहिताख्यान शंसनार्था इत्यर्थः. [2] श्वेतकेतुर्हारुणेय आस (छां. ६-१-१) इत्यादयः. [3] आत्मा वा अरे इत्यादि विद्याविधिनैकवाक्यत्वात्. [4] तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति (बृ. ६-४-२२).

[३-४-२७ शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्त-
दङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ]

शान्तिदान्त्याद्युपेता स्यात्तथापि तु तद्विधेः ।
विद्याङ्गत्वेन दान्त्यादिविधेः[1]तस्मादिति श्रुतेः ॥ २७८
तेषामावश्यकतयानुष्ठेयत्वात्तथैव हि ।
कर्मापेक्षैव विद्येति राद्धान्तितमभूत्तथा ॥ २७९

[३-४-२८ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ]

श्रूयते प्राणसंवादे छान्दोग्ये न [2]ह वा इति ।
[3]एवं विदीत्यादिवाक्यात् किंचनानन्नमित्यपि ॥ २८०
सर्वमस्यादनीयं च भवतीत्यर्थ ईरितः ।
सर्वान्नानुज्ञानमिदं किं शमादिमदुच्यते ॥ २८१
विद्याङ्गं वोत नुत्यर्थं किं वा सङ्कीर्त्यते पुनः ।
किं तावत् प्राप्तमधुना तावद्विधिरिति स्थितम् ॥ २८२
उपदेशस्तत्प्रवृत्तिविशेषकर उच्यते ।
अत एव प्राणविद्यासन्निधानात्तथा पुनः ॥ २८३
तदङ्गत्वेन नियमनिवृत्तिरुपादिश्यते ।
भक्ष्याभक्ष्यविवेकार्थशास्त्रव्याघात एव चेत् ॥ २८४
बाधोपपत्तेस्सामान्ये विशेषोद्भावनादिति ।
एवं प्राप्ते वयं ब्रूमस्तत्त्वमार्गानुसारतः ॥ २४५
सर्वान्नानुज्ञानमिदमत्र नैव विधीयते ।
श्रुतावथ विभक्तिर्न युक्तं कल्पयितुं न च ॥ २८६
अशक्यार्थविधानत्वात् श्वादिमर्यादमत्र हि ।
प्राणस्यान्नं तथैवोक्त्वा [3]नैवंविदिति किंचन ॥ २८७

---

[1] तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुः (बृ. ६-४-२२). [2] न ह वा अस्यानन्नम् (बृ. ८-१-१४) [3] न ह वा एवं विदि किञ्चनानन्नम् (छा. ५-२-१).

अन्नं न भवतीत्येवं छान्दोग्योपनिषच्छ्रुतिः ।
न श्वादिमर्यादमन्नमुपभोक्तुं हि शक्यते ॥ २८८
प्राणस्यान्नमिदं सर्वमिति चिन्तयितुं पुनः ।
तस्मात्प्राणान्नविज्ञानप्रशंसार्थोऽयमत्र हि ॥ २८९
सर्वान्नानुज्ञानविधिस्तदेतन्नेति निर्णयः ।
परस्यामापदि पुनः सर्वस्याप्यदनीयता ॥ २९०

[३-४-२९-३० अबाधाच्च, अपि स्मर्यते]

[1]आहारशुद्धौ सत्त्वस्य शुद्धिरित्येवमादिका ।
श्रुतिर्न बाध्यते तस्मादपि च [2]स्मर्यते पुनः ॥ २९१
विदुषोऽविदुषश्चाविशेषेणैव बहुस्थले ।
प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ॥ २९२
न लिप्यते स पापेन पद्मपत्रमिवाम्भसा ।

[३-४-३१ शब्दश्चातोऽकामकारे]

[3]शब्दे चातोऽकामकारे ह्यनन्नप्रतिषेधतः ॥ २९३

[३-४-३२ विहितत्वाच्चाश्रमकर्मापि]

विहितत्वादाश्रमोक्तकर्म मोक्षैकसाधनम् ।

[३-४-३३-३५ सहकारित्वेन च, सर्वथापि त एवोभयलिंगात् अनभिभवञ्च दर्शयति]

सहकारितया चापि पुरुषार्थैकहेतुता ॥ २९४
[4]नान्यः पन्थेति वाक्येन मार्गान्तरनिषेधतः ।
अत्याश्रमीयधर्मास्तु वीरशैवे समीरिताः ॥ २९५
तेषां विद्याङ्गता प्रोक्ता नान्यथेति हि निश्चयः ।
ब्रह्मचर्यादिसम्पन्ने क्लेशानशितवच्छ्रुतेः ॥ २९६

---

1 छा. ७-२६-२. 2 प्राणसंशयमापन्न इत्यादि वक्ष्यमाणरीत्या इत्यर्थः.
3 तस्माद्ब्राह्मणः सुरां नपिबति पाप्मना नोत्सृजा इति (कठसंहिता).
4 पुरुषसूक्तम्.

[३-४-३६-३८ अन्तरा चापि तु तद्दृष्टेः, अपि स्मर्यते, विशेषानुग्रहश्च]

अन्तरापि तु तद्दृष्टेरपि च [1]स्मर्यते पुनः ।
विशेषानुग्रहाच्चापि विद्यायाः संभवे पुनः ॥ २९७

[2]जप्येनैव तु संसिध्येज्ज्ञानवान्नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मन्त्रज्ञानी स उच्यते ॥ २९८

[३-४-३९-४० अतस्त्वितरज्ज्यायो लिङ्गाच्च, तद्भूतस्य तु नात+भावेभ्यः]

[3] लिङ्गाच्चातस्तु तज्ज्यायस्त्वपवर्गैकसाधनम् ।
तद्भूतस्य तु तद्भावो नियमाच्चापि जैमिनेः ।

[३-४-४१ न चाधिकारिकमपि पतनानुमानात्तदयोगात्]

नचाधिकारिकमपि पतनस्यानुमानतः ॥ २९९

तदयोगाच्च सर्वं तदुक्तमत्र समञ्जसम् ।

[३-४-४२ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम्]

उपपातकमित्येके मधुमांसाशने यथा ॥ ३००

व्रतलोपे च संस्कारस्तथात्रापीति मन्वते ।

[३-४-४३-४४ बहिस्तूभयथापि स्मृतेराचाराच्च, स्वामिनः फलश्रुतेरित्यात्रेयः]

[4]बहिस्तूभयथाप्यत्र [5]स्मृतेराचारतोऽपि च ॥ ३०१

फलश्रुतेः स्वामिन इत्यात्रेयो मन्यते पुनः ।
[6]एवं दृष्टौ पञ्चविधं सामोपास्त इति श्रुतेः ॥ ३०२

---

[1] जप्ये नेत्यादि वक्ष्यमाणरीत्या. [2] जप्येनापि च संसिध्येत् ब्राह्मणोनात्र संशयः । कुर्यादन्यन्नवाकुर्यात् मैत्रीब्राह्मणउच्यते इति तु मनुस्मृतौपाठः (मनु. २-८७). [3] अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः इत्यादिस्मृतिः. [4] आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नर । प्रायश्चित्तं न पश्यमि येन शुध्येत्स आत्महा आग्नेय (१६-५-२३) इति तस्य पातकत्वस्मृतेरित्यर्थः. [5] ब्रह्मविद्याबहिष्कृताः इत्यर्थः. [6] छां. २-२-३.

[३-४-४५ आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते]

आर्त्विज्यमित्यौडुलोमिस्तत्परिक्रियते यतः ।
[1]श्रुतेश्च यां वैकां चेति यजमानस्य तत्फलम् ॥ ३०३

[३-४-४६ सहकार्यन्तरविधिः पक्षेण+विधिः]

[2]सहकार्यन्तरविधिर्बृहदारण्यके पुनः ।
पाण्डित्यबाल्यमौनानां विधिरेव विभक्तितः ॥ ३०४
पक्षेण तु तृतीयं तु दृष्टो विद्यादिवत् पुनः ।

[३-४-४७ कृत्स्नभावात्तु गृहिणोपसंहारः]

कृत्स्नभावात्तु गृहिण उपसंहार उच्यते ॥ ३०५

[३-४-४८ मौनवदितरेषामप्युपदेशात्]

[3]उपदेशान्मौनवादितरेषामपि च स्फुटम् ।

[३-४-४९ अनाविष्कुर्वन्नन्वयात्]

बालो यथानाविष्कुर्वन्नन्वयात्स्फुटमेव हि ॥ ३०६

[३-४-५० ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात]

प्रस्तुतात्प्रतिबन्धे [4]तद्दर्शनादैहिकं पुनः ।

[३-४-५१ एवंमुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः]

तस्माद्दार्ष्टान्तिकश्चैवमिह वामुत्र वा फलम् ॥ ३०७
अपवर्गफलत्वं हि विद्याया ब्रह्मणो न वा ।
नेति तावत् प्राप्तमभूद्ब्रह्मविद्याविदामपि ॥ ३०८
वामदेवादिकानां च तज्जन्मान्तरदर्शनात् ।
एवं प्राप्ते वयं ब्रूमस्तदवस्थावधारणात् ॥ ३०९

---

[1] यां वै कां च (अथर्व.) [2] पाण्डित्यं निर्विद्यबाल्येन तिष्ठासेत् (बृ. ५-५-१). [3] ब्रह्मसंस्थोऽमृतत्वमिति (छां. २-२३-१). [4] यदेव विद्यया (छां. १ १-१०).

[1] तस्य तावदिति श्रुत्या मोक्ष्ये सम्पत्स्य इत्यपि ।
प्रारब्धकर्मणि क्षीणे त्वपवर्गस्य वर्णनात् ॥ ३१०
वामदेवादिकानां च प्रारब्धेनैव कर्मणा ।
देहान्तरारम्भणाच्च प्रारब्धस्य तु संक्षये ॥ ३११
मुक्तिरित्यविरोधस्तु सम्यगेव निरूपितः ।

इति तृतीयाध्याये चतुर्थः पादः । समाप्तश्चाध्यायः.

[शैवधर्माणां प्रधानतया मुक्त्यङ्गत्वम् ।]

वीरशैवोक्तधर्मास्तु ब्रह्मविद्योपयोगिनः ॥ ३१२
नैवं स्युः पशुधर्मास्ते श्रुताः कामफलप्रदाः ।
सामरस्यं च लिङ्गस्य तथैवाङ्गस्य च द्वयोः ॥ ३१३

[प्रश्नोत्तरमुखेन तद्दार्ढ्यसंवादनारम्भः ।]

अस्मिन्नर्थे प्रमाणानि शैवेषु प्रसरन्ति हि ।
साध्यसाधनखण्डेषु मुनीनां प्रश्नरूपतः ॥ ३१४
बन्धमोक्षस्वरूपं च ब्रूहि सर्वार्थवित्तम ।
बन्धमोक्षं तथोपायं वक्ष्येऽहं श्रुणुतादरात् ॥ ३१५

[मुक्तमोक्षयोः स्वरूपम् ।]

प्रकृत्याद्यष्टबन्धेन निर्मुक्तो मुक्त उच्यते ।
प्रकृत्यादिवशीकारो मोक्ष इत्युच्यते बुधैः ॥ ३१६
बद्धजीवस्तु निर्मुक्तो मुक्तजीवः स उच्यते ।

[अष्टौ प्रकृतयः ।]

प्रकृत्यग्रे ततो बुद्धिरहङ्कारो गुणात्मकः ॥ ३१७
पञ्चतन्मात्रं इत्येते ह्यष्टौ प्रकृतयः स्मृताः ।

[देहकर्मणोः परस्परहेतुकत्वम् ।]

प्रकृत्याद्यष्टजं देहं देहजं कर्म तूच्यते ॥ ३१८

---

[1] छान्दोग्ये ६-१-४२.

पुनश्च कर्मजं देहं तज्जं कर्म पुनः पुनः ।

[शरीरभेदाः फलं च ।]

शरीरं त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं च कारणम् ॥ ३१९

स्थूलं तु भोगदं प्रोक्तं सूक्ष्ममिन्द्रियभोगदम् ।
कारणं त्वात्मभोगार्थं जीवकर्मानुरूपतः ॥ ३२०

सुखदुःखं पुण्यपापैः कर्मभिः फलमश्नुते ।
तस्माद्धि कर्मरज्वा हि बद्धो जीवः पुनःपुनः ॥ ३२१

शरीरत्रयकर्मभ्यश्चक्रवद्भ्राम्यते सदा ।

[कर्मनिवारणोपायः]

चक्रभ्रमनिवृत्त्यर्थं चक्रकर्तारमीडयेत् ॥ ३२२

[परमेश्वरस्वरूपम् तन्महिमा च]

प्रकृत्यादिमहाचक्रं प्रकृतेः परतः शिवः ।
चक्रकर्ता महेशो हि प्रकृतेः परतो यतः ॥ ३२३

पिबतीवाथ वमति जीवो लालाजलं यथा ।
शिवस्तथा प्रकृत्यादीन् वशीकृत्याधितिष्ठति ॥ ३२४

सर्वं वशीकृतं यस्मात्तस्माच्छिव इति स्मृतः ।
शिव एव हि सर्वज्ञः परिपूर्णश्च निस्पृहः ॥ ३२५

सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च महेश्वरस्य
षण्मानमैश्वर्यमवैति वेदः ॥ ३२६

अतः शिवप्रसादेन प्रकृत्यादि वशं भवेत् ।

[शिवपूजाविधिः फलं च ।]

शिवप्रसादलाभार्थं शिवमेव प्रपूजयेत् ॥ ३२७

निस्पृहस्य च पूर्णस्य तस्य पूजा कथं भवेत्।
शिवोद्देशकृतं कर्म प्रसादजनकं भवेत् ॥ ३२८
लिङ्गबेरे भक्तजने शिवमुद्दिश्य पूजयेत् ।
कायेन मनसा वाचा धनेनापि च पूजयेत् ॥ ३२९
पूजयेत्तु महेशं हि प्रकृतौ परमं शिवम् ।
प्रसादं कुरुते सत्यं पूजकस्य विशेषतः ॥ ३३०
शिवप्रसादात्कर्माद्यं क्रमेणैव वशं भवेत् ।
[1]कर्मारंभात् समाप्त्यन्तं यदा सर्वं वशं भवेत् ॥ ३३१
तदा मुक्त इति प्रोक्तः स्वात्मारामो विराजते ।

[शिवसालोक्यस्वरूपम् ]

प्रसादात्परमेशस्य कर्म देहं यदा वशम् ॥ ३३२
तदा वै शिवलोके तु वासः सालोक्यमुच्यते ।

[तत्सामीप्यस्वरूपम् ]

समीपं याति साम्बस्य तन्मात्रे च वशं गते ॥ ३३३
तत्सामीप्यमिति प्रोक्तं शिवस्यैव प्रसादतः ।

[सारूप्यस्वरूपम् ]

पुनः शिवप्रसादेन स्वाहङ्कारे वशं गते ॥ ३३४
तदा तु शिवसारूप्यमायुधाद्यैः क्रियादिभिः ।

[सार्ष्टिस्वरूपम् ]

महाप्रसादलाभेन बुद्धिश्चापि वशे भवेत् ॥ ३३५
बुद्धिस्तु कार्यप्रकृतिस्तत्सार्ष्टिरिति कथ्यते ।

[सायुज्यस्वरूपम् ]

पुनर्महाप्रसादेन प्रकृतिर्वशमेष्यति ॥ ३३६
शिवस्यामानमैश्वर्यं तदा लब्धं भवेत्स्वतः ।

---

[1] कर्मारंभप्रकृत्यन्तं (पा).

सार्वज्ञ्याद्यं शिवैश्वर्यं लब्ध्वा स्वात्मनि राजते ॥ ३३७
तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः ।

[ततो मुक्तिः]

एवं क्रमेण मुक्तिः स्याल्लिङ्गादौ पूजया स्वतः ॥ ३३८
अतः शिवप्रसादार्थं क्रियाद्यैः पूजयेच्छिवम् ।

[मुमूक्षूणां कालक्षेपक्रमः]

शिवक्रिया शिवतपः शिवमन्त्रजपः सदा ॥ ३३९
शिवज्ञानं शिवध्यानमुत्तरोत्तरमभ्यसन् ।
आसुप्तेरामृतेः कालं नयेद्वै शिवचिन्तया ॥ ३४०
सत्यादिभिश्च कुसुमैरर्चयञ्छिवमेष्यति ।

[लिङ्गपूजाविधानप्रश्नः]

इति श्रुत्वा तु तत्सर्वं मुनयः पुनरब्रुवन् ॥ ३४१
लिङ्गादौ शिवपूजाया विधानं ब्रूहि सुव्रत ।

[तदुत्तरारम्भः]

लिङ्गानां च क्रमं वक्ष्ये यथावच्छृणुतादरात् ॥ ३४२

[सूक्ष्मलिङ्गम्]

तदेव लिङ्गं प्रथमं प्रणवं सार्वगामिकम् ।
सूक्ष्मं प्रणवरूपं हि सूक्ष्मरूपं तु निष्कलम् ॥ ३४३
स्थूललिङ्गं तु सकलं तत्पञ्चाक्षरमुच्यते ।
तयोः पूजा जपः प्रोक्तः साक्षान्मोक्षप्रदे उभे ॥ ३४४

[भूताङ्गानि]

पौरुषप्रकृती भूतिलिङ्गानि सुबहूनि च ।
तानि विस्तरतो वक्तुं शिवः कर्ता न चापरः ॥ ३४५

[लिङ्गविशेषभेदाः]

भूविकाराणि लिङ्गानि ज्ञातानि प्रब्रवीमि वः ।
स्वयम्भुलिङ्गं प्रथमं बिन्दुलिङ्गं द्वितीयकम् ॥ ३४६
प्रतिष्ठितं चरं चैव गुरुलिङ्गं च पञ्चकम् ।

[तत्राद्यस्य स्वयम्भुलिङ्गत्वे हेतुः, तत्पूजाफलं च]

देवर्षितपसा तुष्टः सान्निध्यार्थं तु [1] तत्तु वै ॥ ३४७
पृथिव्यन्तर्गतः शम्भुर्बीजं वै नादरूपतः ।
स्थावराङ्कुरवद्भूमिमुद्भिद्य व्यक्त एव सः ॥ ३४८
स्वयं भूतं जातमिति स्वयम्भूरिति तं विदुः ।
तल्लिङ्गपूजया ज्ञानं स्वयमेव प्रवर्धते ॥ ३४९

[तल्लिङ्गरचनाक्रमाः, तत्प्रतिष्ठादिकं च]

सुवर्णेन कृतं शैवं पृथिव्यां स्थण्डिलेऽपि वा ।
स्वहस्ताल्लिखितं लिङ्गं शुद्धं प्रणवयन्त्रकम् ॥ ३५०
यन्त्रलिङ्गं समारभ्य प्रतिष्ठावाहनं चरेत् ।
बिन्दुनादमयं लिङ्गं स्थावरं जङ्गमं च यत् ॥ ३५१
भावनामयमेतद्धि शिवो द्रष्टा न संशयः ।
यावद्विश्वस्यते शम्भुस्तावत्तस्मै फलप्रदः ॥ ३५२
स्वहस्ताल्लिखिते यन्त्रे स्थावरादावकृत्रिमे ।
आवाह्य पूजयेच्छम्भुं षोडशैरुपचारकैः ॥ ३५३
स्वयमैश्वर्यमाप्नोति ज्ञानमभ्यासतो भवेत् ।
देवैश्च ऋषिभिश्चापि स्वात्मासिध्यर्थमेव हि ॥ ३५४
समन्त्रेणात्महस्तेन कृतं यच्छुद्धभूतले ।
शुद्धभावनया चैव स्थापितं लिङ्गमुत्तमम् ॥ ३५५

---

[1] तत्र—पा.

तल्लिङ्गं पौरुषं प्राहुस्तत्प्रतिष्ठितमुच्यते ।
तल्लिङ्गपूजया नित्यं पौरुषैश्वर्यमाप्नुयात् ॥ ३५६

महाद्भिश्चैव शास्त्रज्ञै राजभिश्च महाधनैः ।
शिल्पेन कल्पितं लिङ्गं मन्त्रेण स्थापितं च यत् ॥ ३५७

प्रतिष्ठितं प्राकृतं हि प्राकृतैश्वर्यभोगदम् ।
यद्दूर्जितं च नित्यं च तद्धि प्राकृतमुच्यते ॥ ३५८

लिङ्गं नाभिस्तथा जिह्वा नासाग्रं च शिखा क्रमात् ।
कट्यादिषु त्रिकोणेषु लिङ्गमाध्यात्मिकं चरम् ॥ ३५९

पर्वतं पौरुषं प्रोक्तं भूतलं प्राकृतं विदुः ।
वृक्षादि पौरुषं ज्ञेयं गुल्मादि प्राकृतं विदुः ॥ ३६०

षाष्टिकं प्राकृतं ज्ञेयं शालिगोधूमपौरुषम् ।
ऐश्वर्यं पौरुषं विद्यादणिमाद्यष्टसिद्धिकम् ॥ ३६१

सुस्त्रीधनादिविजयं प्राकृतं प्राहुरास्तिकाः ।
यावद्विश्वस्यते शम्भुस्तावत्तस्मै फलप्रदः ॥ ३६२

प्रथमं चरलिङ्गेषु रसलिङ्गं प्रकथ्यते ।
शिलालिङ्गं ब्राह्मणानां सर्वकामफलप्रदम् ॥ ३६३

रत्नलिङ्गं क्षत्रियाणां महाराज्यप्रदं शुभम् ।
स्वर्णलिङ्गं तु वैश्यानां महाधनवतां प्रदम् ॥ ३६४

मृल्लिङ्गं च तु शूद्राणां महदैश्वर्यदं विदुः ।
स्फाटिकं बाणलिङ्गं च सर्वेषां सर्वकामदम् ॥ ३६५

स्वीयाभावेऽन्यदीयं तु पूजायां न निषिध्यते ।
स्त्रीणां तु पार्थिवं लिङ्गं सभर्तॄणां विशेषतः ॥ ३६६

विधवानां निवृत्तानां रसलिङ्गाद्यनुक्रमम् ।
बाल्ये वा यौवने वापि वार्धके वापि सुव्रताः ॥ ३६७

शुद्धस्फटिकलिङ्गं तु स्त्रीणां तत्सर्वभोगदम् ।
प्रवृत्तानां पीठपूजा सर्वाभीष्टप्रदा भुवि ॥ ३६८

पात्रेणैव प्रवृत्तस्तु सर्वपूजां समाचरेत् ।
अभिषेकान्तनैवेद्यं शाल्यन्नेन समाचरेत् ॥ ३६९

पूजान्ते स्थापयेल्लिङ्गं पुटे शुद्धे पृथग्गृहे ।
करपूजानिवृत्तानां स्वभोज्यं तु निवेदयेत् ॥ ३७०

निवृत्तानां परं सूक्ष्मं लिङ्गमेव विशिष्यते ।
विभूत्यभ्यर्चनं कुर्याद्विभूतिं विनिवेदयेत् ॥ ३७१

पूजां कृत्वाथ तल्लिङ्गं शिरसा धारयेत्सदा ।
विभूतिस्त्रिविधा प्रोक्ता लोकवेदशिवाग्निभिः ॥ ३७२

लोकाग्नेयमथो भस्म द्रव्यशुद्ध्यर्थमावहेत् ।
मृद्दारुलोहरूपाणां धानानन्यांस्तथैव च ॥ ३७३

तिलादीनां द्रवाणां च वस्त्रादीनां तथैव च ।
तथा पर्युषितानां च भस्मना शुद्धिरिष्यते ॥ ३७४

शुनादिदूषितानां च भस्मना शुद्धिरिष्यते ।
सजलं निर्जलं भस्म यथायोग्यं तु योजयेत् ॥ ३७५

वेदाग्निजं तथा भस्म तत्कर्मान्तेषु धारयेत् ।
मन्त्रेण क्रियया जन्यं कर्माग्नौ भस्मरूपधृत् ॥ ३७६

तद्भस्मधारणात्कर्म स्वात्मन्यारोपयेद्द्विजः ।
अघोरेणात्ममन्त्रेण बिल्वकाष्ठं प्रदाहयेत् ॥ ३७७

शिवाग्निरिति विख्यातस्तेन दग्धं शिवाग्निजम् ।
कपिलागोमयं पूर्वं केवलं गव्यमेव वा ॥ ३७८

शम्यश्वत्थपलाशान्वा वटारग्वधबिल्वकान् ।
शिवाग्निना दहेच्छुद्धान् तद्वै भस्म शिवाग्निजम् ॥ ३७९

दर्भाग्नौ वा दहेत्काष्ठाञ्छिवमन्त्रं समुच्चरन् ।
सम्यक् संशोध्य वस्त्रेण नवकुम्भे निधापयेत् ॥ ३८०

भदीप्त्यर्थं हि सङ्ग्राह्यं मन्यते पूज्यतेऽपि च ।
भस्मशब्दार्थमेवं हि शिवः पूर्वं तथाकरोत् ॥ ३८१

यथा स्वविषये राजा सारं गृह्णाति यत्करम् ।
यथा मनुष्याः सस्यादीन् दग्ध्वा सारं भजन्ति वै ॥ ३८२
यथा हि जाठराग्निश्च भक्ष्यादीन्विविधान् बहून् ।
जग्ध्वा सारतरं सारात्स्वदेहं परिपुष्यति ॥ ३६२ ॥ ३८३
तथा प्रपञ्चकर्तापि स शिवः परमेश्वरः ।
स्वाधिष्ठेयप्रपञ्चस्याद्ग्ध्वा सारं गृहीतवान् ॥ ३८४
दग्ध्वा प्रपञ्चं तद्भस्म स्वात्मन्यारोपयच्छिवः ।
उद्धूलनेन व्याजेन जगत्सारं गृहीतवान् ॥ ३८५
स्वरत्नं स्थापयामास स्वकोशे हि शरीरके ।
केशमाकाशसारेण वायुसारेण वै मुखम् ॥ ३८६
हृदयं चाग्निसारेण ह्यपां सारेण वै कटिम् ।
जानुं चावनिसारेण तद्वत्सर्वं तदङ्गकम् ॥ ३८७
ब्रह्मविष्ण्वोश्च रुद्राणां सारं चैव त्रिपुण्ड्रकम् ।
तथा तिलकरूपेण ललाटान्ते महेश्वरः ॥ ३८८
स्वबुद्ध्या[1] सर्वमेतद्धि मन्यते स्वयमित्यसौ ।
प्रपञ्चरससर्वस्वमनेनैव वशीकृतम् ॥ ३८९
तस्मादस्य वशीकर्ता नास्तीति स शिवः स्मृतः ।
यथा सर्वमृगाणां च हिंसको मृगहिंसकः ॥ ३९०
अस्य हिंसामृगो नास्ति तस्मात्सिंह इतीरितः ।
शं नित्यसुखमानन्दमिकारः पुरुषः स्मृतः ॥ ३९१
वकारः शक्तिरमृतं मेलनं शिव उच्यते ।
तस्मादेव स्वमात्मानं शिवं कृत्वार्चयेच्छिवम् ॥ ३९२
तस्मादुद्धूलनं पूर्वं त्रिपुण्ड्रं धारयेत्परम् ।
पूजाकाले हि सजलं शुद्धयर्थं निर्जलं भवेत् ॥ ३९३

---

[1] भवृद्धया—पा.

दिवा वा यदि वा रात्रौ नारी वाथ नरोऽपि वा ।
पूजार्थं सजलं भस्म त्रिपुण्ड्रं चैव धारयेत् ॥ ३९४
त्रिपुण्ड्रं सजलं भस्म धृत्वा पूजां करोति यः ।
शिवपूजाफलं साङ्गं तस्यैव हि सुनिश्चितम् ॥ ३९५
भस्म वै शिवमन्त्रेण धृत्वा ह्यत्याश्रमी भवेत् ।
शिवाश्रमीति सम्प्रोक्तः शिवैकपरमो यतः ॥ ३९६
शिवव्रतैकनिष्ठस्य नाशौचं न च सूतकम् ।
ललाटाग्रे सितं भस्म तिलकं धारयेत्सदा ॥ ३९७
स्वहस्ताद्गुरुहस्ताद्वा शिवभक्तैकलक्षणम् ।
गुणान् रुन्ध इति प्रोक्तो गुरुशब्दस्य विग्रहः ॥ ३९८
सविकारान् राजसादीन् गुणान् रून्धे व्यपोहति ।
गुणातीतः परशिवो गुरुरूपमुपाश्रितः ॥ ३९९
गुणत्रयं व्यपोह्याग्रे शिवं बोधयतीति सः ।
विश्वस्तानां तु शिष्याणां गुरुरित्यभिधीयते ॥ ४००
तस्माद्गुरुशरीरं तु गुरुलिङ्गं भवेद्बुधाः ।
गुरुलिङ्गस्य पूजा तु गुरुशुश्रूषणं भवेत् ॥ ४०१
श्रुतं करोति शुश्रूषा कायेन मनसा गिरा ।
उक्तं यद्गुरुणा पूर्वं शक्यं वाशक्यमेव वा ॥ ४०२
करोत्येव हि पूतात्मा प्राणैरपि धनैरपि ।
तस्माद्वै शासने योग्यः शिष्य इत्यभिधीयते ॥ ४०३
शरीराद्यर्थकं सर्वं गुरोर्दत्वा सशिष्यकः ।
अग्रपाकं निवेद्याग्रे भुञ्जीयाद्गुर्वनुज्ञया ॥ ४०४
शिष्यः पुत्र इति प्रोक्तः शिष्यः शिष्यत्वयोगतः ।
जिह्वालिङ्गान्मन्त्रशुक्लं कर्णयोनौ निषिच्य वै ॥ ४०५
जातः पुत्रो मन्त्रपूतः पितरं पूजयेद्गुरुम् ।
निमज्जयंति वै पुत्रं संसारे जनकः पिता ॥ ४०६

सन्तारयति संस्काराद्गुरुर्वै बोधकः पिता ।
उभयोरन्तरं ज्ञात्वा पितरं सम्प्रपूजयेत् ॥ ४०७
अङ्गशुश्रूषया वापि धनाद्यैः स्वार्जितैर्गुरुम् ।
पादादिकेशपर्यन्तं लिङ्गान्यङ्गानि वै गुरोः ॥ ४०८
धनरूपैः पादुकाद्यैः पादसङ्ग्रहणादिभिः ।
स्नानाभिषेकनैवेद्यभोजनैश्चापि पूजयेत् ॥ ४०९
गुरुपूजैव पजा स्याच्छिवस्य परमात्मनः ।
गुरुशेषं तु तत्सर्वमात्मशुद्धिकरं भवेत् ॥ ४१०
गुरुशेषं शिवोच्छिष्टं जलमन्नादिनिर्मलम् ।
शिष्याणां शिवभक्तानां ग्राम्यं भोज्यं भवेद्विजाः ॥ ४११
गुर्वनुज्ञाविरहितं चोरवत्सकलं भवेत् ।
गुरोरपि विशेषज्ञं गुरुं गृह्णीत वै बुधाः ॥ ४१२
अज्ञानमोचकं साध्यं विशेषज्ञो हि मोचकः ।
तस्माद्गुरुमुखात्कर्म ज्ञानं चापि विशेषतः ॥ ४१३
ज्ञात्वा कर्तव्यमखिलं भोगमोक्षसमृद्धये ।
गुरुशुश्रूषया लब्धं कर्म ज्ञानं फलाय हि ॥ ४१४
कल्पते ह्यन्यथा लब्धं प्रयच्छत्यप्यमङ्गलम् ।
पुनर्वक्ष्ये हितं कर्म कर्तव्यं शिवमिच्छुना ॥ ४१५
शिवमेव शिवध्यानं प्रार्थयेन्मतिमान्नरः ।
देवाः सर्वं प्रयच्छन्ति शिवाज्ञापरिपालकाः ॥ ४१६
शिवाज्ञापालकान् देवान् भोगार्थं कर्मणा यजेत् ।
आदौ च विघ्नशमनं कर्तव्यं कर्मपूर्तये ॥ ४१७
निर्विघ्नेन कृतं साङ्गं कर्म वै सफलं भवेत् ।
तस्मात्सकलकर्मादौ गणनाथं प्रपूजयेत् ॥ ४१८
महाभिषेकनैवेद्यं शिवस्यान्ते तु कारयेत् ।
शिवभक्तान् भोजयेच्च भूरिभोजनरूपतः ॥ ४१९

ततः शिवं नमस्कुर्यान्मन्त्रेणाष्टोत्तरं शतम् ।
सहस्रमयुतं लक्षं कोटिं वा कारयेद्बुधैः ॥ ४२०
नमस्कारात्मयज्ञेन तुष्टः स्यात्परमेश्वरः ।
सत्स्वरूपोऽर्पितो बुध्या ननशून्ये परे चिति ॥ ४२१
ननास्ससमदहन्तेति त्वयि दृष्टे विवर्तितः ।
समोऽहं हि स्वदेहेन यो महान् त्वमसि प्रभो ॥ ४२२
न शून्यो मत्स्वरूपो वै तव [1]दासोऽस्मि साम्प्रतम् ।
यथायोग्यं त्वात्मयज्ञं नमस्कारं प्रकल्पयेत् ॥ ४२३
ततः प्रदक्षिणं कुर्यादष्टोत्तरसहस्रकम् ।
अयुतं लक्षकोटीस्तु कारयेच्छिवभक्तकैः ॥ ४२४
शिवप्रदक्षिणात्सर्वपातकं नश्यति क्षणात् ।
दुःखस्य मूलं व्याधिर्हि व्याधेर्मूलं हि पातकम् ॥ ४२५
धर्म एव हि पापानामपनोदनमीरितम् ।
शिवोद्देशकृतो धर्मः क्षमः पापापनोदने ॥ ४२६
अध्यक्षं शिवधर्मेषु प्रदक्षिणमितीरितम् ।
क्रियया जपरूपं हि प्रणवं तु प्रदक्षिणम् ॥ ४२७
जननं मरणं ध्वंसमायाचक्रमितीरितम् ।
शिवस्य मायाचक्रं हि जगदेतच्चराचरम् ॥ ४२८
निर्गमाज्जननं प्राप्तं नमस्स्वात्मसमर्पणम् ।
जननं मरणं द्वन्द्वं शिवमाया[2]समार्पितम् ॥ ४२९
शिवमायार्पितं द्वन्द्वं न पुनः स्वात्मभाग्भवेत् ।
यावद्देहत्रयाधीनं स जीवो बद्ध उच्यते ॥ ४३०
देहत्रयवशीकारो मोक्ष इत्युच्यते बुधैः ।
मायाचक्रप्रणेता हि शिवः परमकारणम् ॥ ४३१

---

[1] शक्तोऽस्मि–पा. दास–पा. [2] समर्पणम्–पा.

शिवमायार्पितं द्वन्द्वं शिवस्तु परिमार्जति ।
शिवेन कल्पितं द्वन्द्वं तस्मिन्नेव समर्पयेत् ॥ ४३२
शिवस्यातिप्रियं विद्या प्रदक्षिणनमो बुधाः ।
प्रदक्षिणनमस्कारैः शिवस्य परमात्मनः ॥ ४३३
षोडशैरुपचारैश्च कृतपूजा फलप्रदा ।
प्रदक्षिणाविनाश्यं हि पातकं नास्ति भूतले ॥ ४३४
तस्मात्प्रदक्षिणेनैव सर्वाभीष्टं प्रसाधयेत् ।
शिवप्रदक्षिणेनैव [1] सर्वाभीष्टं प्रसाधयेत् ॥ ४३५
शिवपूजापरो मौनी सत्यादिगुणसंयुतम् ।
क्रियातपोजपज्ञानध्यानेष्वेकैकमाचरेत् ॥ ४३६
ऐश्वर्यं दिव्यदेहं च ज्ञानमज्ञानसंक्षयः ।
शिवसान्निध्यमित्येवं क्रियादीनां फलं भवेत् ॥ ४३७
करणेन फलं याति तमस्यपरिहापनात् ।
जन्मनः परिमार्जित्वाज्ज्ञबुध्या जानतेति च ॥ ४३८
ध्यै चिन्तायां नतेत्येवं तेषामर्थः क्रमाद्भवेत् ।
यथादेहं यथाकालं यथागेहं यथाधनम् ॥ ४३९
यथायोग्यं प्रकुर्वीत क्रियादीन् शिवभक्तिमान् ।
न्यायार्जितस्य प्राप्त्यैव वसेत्प्राज्ञः शिवस्थले ॥ ४४०
जीवहिंसाविरहितमतिक्लेशविवर्जितम् ।
पञ्चाक्षरेण जप्तं च भोज्यमन्नं विदुः सुखम् ॥ ४४१
अथवाभूद्दरिद्रस्य भिक्षान्नं ज्ञानसंभवे ।
शिवभक्तस्य भिक्षान्नं शिवभक्तिविवर्धनम् ॥ ४४२
शम्भुसत्रमिति प्राहुर्भिक्षान्नं शिवयोगिनः ।
येन केनाप्युपायेन यत्र कुत्रापि भूतले ॥ ४४३

---

[1] सर्वपापं विनाशयेत्–पा.

सिद्धान्नभुक् सदा मौनी रहस्यं न प्रकाशयेत् ।
प्रकाशयन् स्वभक्तानां शिवमाहात्म्यमेव हि ॥ ४४४

रहस्यं शिवतन्त्रं हि शिवो जानाति नापरः ।
शिवभक्तो वसेन्नित्यं शिवलिङ्गं समाश्रितः ॥ ४४५

स्थाणुलिङ्गाश्रये नैवास्थाणुर्भवति भासुरः ।
पूजया चरलिङ्गस्य क्रमात्पूर्णो भवेद्ध्रुवम् ॥ ४४६

सर्वमुक्तं समासेन साध्यसाधनमुत्तमम् ।
व्यासेन यत्पुरा प्रोक्तं यच्छ्रुतं न मया पुरा ॥ ४४७

इत्यादिभिश्च बहुभिः प्रमाणैर्वीरशैवकम् ।
साधनं मुख्यमेवेदमन्यद्गौणं च साधनम् ॥ ४४८

तस्माद्विद्वान् वीरशैवमते बुद्धिं प्रसारयेत् ।
वीरशैवं साधनं च व्यासतात्पर्यतः स्फुटम् ॥ ४४९

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञनीलकण्ठशिवाचार्यकृते निगमागमसारसङ्ग्रहे क्रियासारे ब्रह्मसूत्रतृतीयाध्यायव्याख्यारूपः तृतीयोपदेशः समाप्तः ॥



॥ श्रीः ॥

॥ श्री सदाशिवाय नमः ॥

# अथ चतुर्थोपदेशः

[संगतिः, अध्यायार्थसंग्रहश्च]

साधनानां विचारस्तु तार्तीयीके निरूपितः ।
चतुर्थे चोपदेशेऽस्मिन् कुर्वे फलविचारणाम् ॥ १

कतिभिश्चाधिकरणैस्ततस्साधनशेषकम् ।

[4-1-1 आवृत्तिरसकृदुपदेशात्]

सूत्रकारोऽनुसरति, तत्र [1] ब्रह्मविदा श्रुतौ ॥ २

[2] तरतीत्यादिके मोक्षसाधनत्वेन बोधिताः ।
वेदनं किं सकृत्कार्यमसकृद्वा किमत्र च ॥ ३

सकृत्कर्तव्यमित्याप्तं सार्थक्यं तावता पुनः ।
शास्त्रस्याश्रूयमाणायामावृत्तौ च तथैव हि ॥ ४

तावत्तु क्रियमाणायामशास्त्रार्थः कृतो भवेत् ।
कर्तव्या प्रत्ययावृत्तिरसकृच्चोपदेशतः ॥ ५

[3] श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
निदिध्यास्यस्तथेत्येवमसकृच्चोपदेशतः ॥ ६

आवृत्तिः सूचिता सेयं श्रुतिभिर्मुनिभिः पुनः ।
[4] आत्मेत्येवं ह्युपासीत [5] ध्यायीतेशानमित्यपि ॥ ७

विदेरुपास्तिध्यायत्योरावृत्तिश्च पुनः पुनः ।
विशिष्टप्रत्ययस्यैव प्रकृतत्वात्तथैव हि ॥ ८

---

[1] ब्रह्मविदाप्नोति परम् (तै. आन. १-१). [2] तरति शोकमात्मवित (छां. ७-१-३). [3] आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यः (बृ. २-४-५). [4] बृ. १-४-७. [5] ध्येयमीशानं प्रध्यायन्ति (अथर्वशिखा २).

लोकेऽप्युत्पत्तिरुदिता शास्त्रज्ञैस्तत्त्वदृष्टिभिः ।

[वेदनोपासनयोः पर्यायत्वसमर्थनम्]

विद्युपास्योश्च वेदान्तशास्त्रे व्यतिकरेण तु ॥ ९

प्रयोगो दृश्यते क्वापि विदिनोपक्रमः स्मृतः ।

उपासनोपसंहारो [1]यस्तद्वेदेति च श्रुतौ ॥ १०

यां देवतामुपास्ते चेत्यादौ चोपासनाक्रमः ।

विदिना चोपसंहारो [2]मनो ब्रह्मेति च श्रुतौ ॥ ११

य एवं वेद इत्यादौ विदेश्चोपासनार्थता ।

तस्मा[3]द्ब्रह्मविदाप्नोति परमित्यादिकश्रुतौ ॥ १२

प्रत्ययावृत्तिसिद्धिस्तु सम्यगेवोररीकृता ।

[लिङ्गाच्च (4-1-2)]

लिङ्गाच्च प्रत्ययावृत्तिं सूचयत्यथ तच्छृणु ॥ १३

प्रस्तुत्योद्गीथविज्ञानं रश्मींस्त्वमिति चाप्यथ ।

पर्यावर्तयवाक्ये च प्रत्ययावृत्तिसूचनात् ॥ १४

अत्रायमेव राद्धान्तो वीरशैवमुदावहः ।

लिङ्गाद्धृदयदेशे तु धृतादमृतवाक्यतः ॥ १५

रश्मींस्त्वमिति वाक्ये च ज्योतिश्चरणसूत्रतः ।

ज्योतिर्लिङ्गं च गुरुणा दत्तं समरसात्मना ॥ १६

दृष्ट्वा दृष्ट्वा प्रतिदिनं ध्यात्वा ध्यात्वा पुनः पुनः ।

लिङ्गाङ्गयोस्तदुभयोः सामरस्यं फलात्मकम् ॥ १७

तथा [3]ब्रह्मविदाप्नोतिश्रुतौ लिङ्गविदुच्यते ।

वेदनं नाम लिङ्गस्य धारणं प्रतिपादितम् ॥ १८

---

[1] यस्तद्वेद यत्स वेद स मयैतदुक्तः (छा. ४-१-४) इत्युपक्रम्य, अनु म एतां भगवो देवतां शाधि (छा. ४-२-२) इति उपासिनोपसंहृतं इत्यर्थः.
[2] मनो ब्रह्मेत्युपासीत (छा. ३-१८-१) इत्युपासिनोपक्रम्य, भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद (छा. ३-१८-३) इतिविदिनोपसंहृता इत्यर्थः. [3] तै. आन. १-१.

अनावृत्तीतिसूत्रे च ह्ययमर्थः स्फुटीभवेत् ।
[1]आत्माय नम इत्यत्र आत्मलिङ्गाय इत्यपि ॥ १९
ज्वलाय नम इत्यादि ज्वललिङ्गाय इत्यपि ।
ज्योतिश्चरणसूत्रोक्ततात्पर्यानुगुणेन च ॥ २०
असकृल्लिङ्गशब्दस्य ह्युपदेशाद्धृदम्बुजे ।
धार्यं ध्येयं च सम्पूज्यं मुमुक्षुभिरहर्निशम् ॥ २१
धृतस्यैव तु लिङ्गस्य दर्शनावृत्तिरुच्यते ।
दर्शनं चैव मनसा निर्मलेन च चक्षुषा ॥ २२
[2]अन्तर्बहिश्च तत्सर्वं व्याप्येत्यादिश्रुती[3]रणात् ।
बाह्यान्तरसमानेन पुरुषेणाप्यथो फलम् ॥ २३
वैलक्षण्यं बहिश्चान्तः फलनाशाय कल्पते ।
अन्तर्बहिः साम्यमतः प्रार्थनीयं विपश्चिता ॥ २४
[4]वीरशैवं सङ्घटते सर्वं श्रुतिसमीरितम् ।
वीरशैवतरेषां तु वेदानुगुणता न हि ॥ २५
[5]अङ्गुष्ठमात्रः पुरुषो हृदयाकाशशोभितः ।
लिङ्गाकृतिर्ज्योतिरेव शिवः सत्यादिलक्षणः ॥ २६
बहिर्धृतं लिङ्गमपि साम्यमत्र तदेतयोः ।
बहिरन्तर्लिङ्गधृतिर्लिङ्गधारणमन्तरा ॥ २७
नैव सङ्घटते पुंसां तस्माल्लिङ्गं हृदम्बुजे ।
बहिरिन्द्रिययोग्यं च बाह्यलिङ्गमुदाहृतम् ॥ २८
अन्तरिन्द्रिययोग्यं च ह्यान्तरं लिङ्गमुच्यते ।
प्रायः पाठानुगुण्यं च श्रुतौ वेदान्तसारके ॥ २९
सङ्गच्छते नान्यथा तल्लिङ्गं बहिरकुर्वताम् ।
उपक्रमोपसंहारौ तथा श्रुतिरहस्यके ॥ ३०

---

1 तैत्तिरीयारण्यके. 2 नारायणसूक्ते आरण्यके च. 3 रणम्—पा.
4 वीरशैवे—पा. 5 कठोपनिषत् ४-१२, ४-१३, ६-१७, महानारायणे, १६-१३.

अनेकेषां प्रमाणानां व्याकुलीभावभीतितः ।
तादृक्छ्रुत्यानुगुण्येन लिङ्गावृत्तिः समुच्यते ॥ ३१

आवृत्तिश्चैकरूप्येण हृदयाम्बुजवासिनः ।
बहिः स्फुटं सज्जिकायां लसतो लिङ्गरूपिणः ॥ ३२

अन्तश्च दहराकाशे लसतो लिङ्गरूपिणः ।
दर्शनं ज्ञानमित्युक्तं बाह्येनान्तरचक्षुषा ॥ ३३

मोक्षेच्छुभिस्तथावृत्तिः कर्तव्येत्युररीकृतम् ।
[1]शब्दादेव प्रमित इत्यस्मिन् सूत्रेऽयमेव हि ॥ ३४

समीहितार्थो विज्ञेयः सूत्रस्वरसतः पुनः ।
अत्रायमर्थनिष्कर्षो वीरशैवैर्मुमुक्षुभिः ॥ ३५

अन्तर्बहिर्धृतं लिङ्गमावर्त्यं नेत्रयुग्मतः ।
[2]आत्माय नम इत्यादिवाक्येनासकृदीरणात् ॥ ३६

लिङ्गाच्च हृदयाकाशे सज्जिकायामधिष्ठितात् ।
बहिरान्तरनेत्रेण दर्शनद्वयवर्णनात् ॥ ३७

सिद्धेयं प्रत्ययावृत्तिः शैवशास्त्रोक्तमार्गतः ।

[४-१-३-आत्मेति तूपगच्छन्ति]

आत्मेति तूपगच्छन्ति ग्राहयन्ति च वैदिकाः ॥ ३८

ब्रह्मोपासनमित्युक्तं भिन्नाभिन्नं च जीवतः ।
अंशो नानेति किं तत्र मदन्यद्ब्रह्म इत्यथ ॥ ३९

उपासनीयं किं वाहं ब्रह्मेत्येवमुपासनम् ।
किं तावत्प्राप्तमधुना मदन्यद्ब्रह्म चेत्ययम् ॥ ४०

[3]अन्योऽन्तरादिवाक्येन भेदेनैवोपवर्णनात् ।
एवं प्राप्ते वयं ब्रूमः पदार्थानां विवेचने ॥ ४१

जीवेश्वरावथान्योन्यं व्यावृत्तत्वेन वर्णितौ ।
अथाप्युपासनाकालेऽप्यहं ब्रह्मेत्युपासनम् ॥ ४२

---

[1] ब्रह्मसूत्रे प्रथमाध्यायः. [2] आरण्यकम्. [3] तैत्तिरीयोपनिषत्.

यस्मात्पूर्वे ब्रह्मविद आत्मा ब्रह्म वदन्ति ते ।
स आत्मेत्यथवा विद्यादहं ब्रह्मेति वै तथा ॥ ४३
उपदेष्टार एवं च तत्त्वमस्येष ते इति ।
आत्मा सर्वान्तरः साक्षादेष आत्मा त इत्यपि ॥ ४४
अभेदेन ग्राहयन्ति तदभेदादुपासनम् ।
भेददृष्ट्यपवादाच्चाप्यथ [1] योऽन्यामिति श्रुतौ ॥ ४५
अन्योऽसावन्योऽहमस्मि न स वेदेति च श्रुतेः ।

[४-१-४-न प्रतीकेन हि सः]

आदित्यादिप्रतीकेषु बध्नीयादात्मबुद्धिताम् ॥ ४६
न हि चात्माप्रतीकानि शिवः सत्यादिलक्षणः ।
यान्यात्मत्वेनाकलयेद्यच्च ब्रह्मविकारतः ॥ ४७
ब्रह्माभेदः प्रतीकानां ब्रह्मभेदस्तथैव च ।
आत्माभेद इति ह्येतदज्ञान [2]परिकल्पितम् ॥ ४८
जीवप्रतीकयोर्ब्रह्मभेदेऽप्यत्र परस्परम् ।
अभेदविरहात्फेनवीच्यादीनां यथा पुनः ॥ ४९
समुद्राभेदसत्त्वेऽपि न चाभेदः परस्परम् ।
तद्वद्ब्रह्माभेदसत्त्वान्नचाभेदः परस्परम् ॥ ५०

[४-१-५-११-ब्रह्मदृष्टिः, आदित्यादि, आसीनः, ध्यानाच्च, अचलत्वं, स्मरन्ति, यत्रैकाग्रता]

तद्ब्रह्मदृष्टिरुत्कर्षात् आदित्यादिमतिस्तथा ।
उद्गीथादौ च कर्तव्या चोपपत्तेः क्रतुष्वपि ॥ ५१
आसीन संभवात्कर्मावबद्धोपासनेषु तु ।
ध्यानाच्चासीनकर्मेदमङ्गावबद्धमुपासनम् ॥ ५२

---

[1] अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद, बृ. ३-४-१०. [2] तेन कल्पि–पा.

अचलत्वं तथापेक्ष्य [1] ध्यायतीवेति च श्रुतेः ।
अङ्गत्वेनोपासनायां स्मरन्ति मुनयस्त्विति ॥ ५३

[2] शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
यत्र काले च देशे च ह्येकाग्रत्वं हि तत्र च ॥ ५४

[४-१-१२-१४ आ प्रयाणात्, तदधिगम, इतरस्याप्येवं]

विशेषश्रवणाभावादाप्रयाणं मुमुक्षुभिः ।
कार्या हि प्रत्ययावृत्तिर्न मध्ये विरमेच्छ्रुतेः ॥ ५५

स यावत्क्रतुरस्माल्लोकात्प्रैतीति च दर्शनात् ।
गतस्तृतीयशेषोऽसावथेदानीं निरूप्यते ॥ ५६

ब्रह्मविद्या फलं तस्य ब्रह्मणोऽधिगमे सति ।
अश्लेष उत्तराघस्य पूर्वपापप्रणाशनम् ॥ ५७

[3] यथेषीकातूलमग्नौ प्रोतमित्यादिदर्शनात् ।
इतरस्यापि पुण्यस्य ह्यश्लेषश्च विनाशनम् ॥ ५८

शरीरपाते विज्ञेयो यतस्तद्बन्धसाधनम् ।
[4] क्षीयन्ते चास्य कर्माणीत्यविशेषश्रुतेः पुनः ॥ ५९

पूर्वाधिकरणप्रोक्ते तदश्लेषविनाशने ।

[४-१-१५-१७ अनारब्धकार्ये, अग्निहोत्रादि, अतोन्यापि]

केवलानारब्धकार्ये शरीरपतनावधेः ॥ ६०

[5] तस्य तावदिति श्रुत्यां तथान्यत्रापि दर्शनात् ।
मोक्षायैवाग्निहोत्रादि तथैव श्रुतिदर्शनात् ॥ ६१

---

[1] ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं, ध्यायतीव द्यौः, ध्यायन्तीवापः ध्यायन्तीव पर्वताः छा. ७-६-१. [2] शुचौ देशे . . . त्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युंज्यात् योगमात्मविशुद्धये । गी. ६-११-१२. [3] छा ५-२४-३. [4] मुण्डके २-२ ८. [5] छा. ६-१-२.

[1] तमेतं वेद इत्यादिश्रुत्यापि विदुषां श्रुतेः ।
अग्निहोत्रादिकान्नित्यादन्यापि ह्यस्ति काचन ॥ ६२
एकेषामुभयोर्बादरायणस्य च जैमिनेः ।

[४-१-१८ यदेव भोगेन त्वितरे क्षपयित्वा]

[2] यदेव विद्ययेत्येवं पूर्वोक्ते काम्यकर्मणाम् ॥ ६३
पुण्यपापे ह्यनारब्धकार्ये विद्यावशात्पुनः ।
क्षीयते चेतरे त्वारब्धकार्ये पुण्यदुष्कृते ॥ ६४
क्षपयित्वोपभोगेन ब्रह्म सम्पद्यते बुधः ।

इति प्रथमः पादः

---

अथ द्वितीयः पादः

ब्रह्म सम्पद्यत इति क्रमेणात्र च केन वा ॥ ६५
इति प्राप्ते देवयानं पन्थानमवतारयन् ।
आदौ तावद्यथाशास्त्रमुत्क्रान्तिक्रममाह हि ॥ ६६
उत्क्रान्त्युपक्र[3]माद्देशप्रयाणविषया श्रुतिः ।

[४-२-१-४ वाङ्मनसि, अत एव, तन्मनः, सोऽध्यक्षे]

[4] अस्य सौम्यादिवाक्ये च केवलं वाच एव तु ॥ ६७
मनस्सम्पत्तिरुदिता शब्दाद्वाङ्मनसीति च ।
अतश्च दर्शनाद्वाचो मनस्युपरतावपि ॥ ६८
इन्द्रियान्तरसङ्घानां तथा व्यापारदर्शनात् ।
सम्पद्यते वाक् प्रथममिन्द्रियान्तरमप्यनु ॥ ६९
प्राणे सम्पद्यते तत्र सम्पन्नेन्द्रियकं मनः ।
[5] मनः प्राण इति श्रुत्या तथैव प्रतिपादनात् ॥ ७०

---

[1] बृ. ६-४-२२. [2] छा. १-१-१०. [3] माद्धेदात्प्र—पा. [4] छा. ६-८-६.
[5] छा. ६-८-६.

[1] प्राणस्तेजसि वाक्येन प्राणोऽध्यक्षे समीरितः ।

[४-२-५-१० भूतेषु, नैकस्मिन् समाना, तदापीतः, प्रमाणतः, नोपमर्दनातः]

न च प्राणेन सम्प्रोक्तो भूतेष्वेवावतिष्ठते ॥ ७१

जीव इत्युपगन्तव्यं प्राणस्तेजसि वाक्यतः ।
नैकस्मिन्नेव जीवोऽसौ तेजस्येवावतिष्ठते ॥ ७२

किंत्वनेकेषु दृष्टश्च ह्ययमर्थः श्रुतौ पुनः ।
आसृत्युपक्रमादूर्ध्वं समाना च द्वयोरपि ॥ ७३

विदुषश्चाप्यविदुष ऊर्ध्वं विद्वान् विशिष्यते ।
अमृतत्वं चानुपोष्य द्वयोस्तत्तुल्यमेव हि ॥ ७४

संभूतान्तरकं तेज आब्रह्मप्राप्ति वर्तते ।
संसारव्यपदेशात्तयोर्ध्वमायन्निति श्रुतेः ॥ ७५

सभूतान्तरकं तेजः सूक्ष्मं तत्परिमाणतः ।
ततोपलब्धेर्निर्गच्छन् पार्श्वस्थैर्नोपलभ्यते ॥ ७६

सूक्ष्मत्वादेव चास्य स्थूलदेहोपमर्दतः ।
दाहादिकनिमित्तेन चेदं नैवोपमृद्यते ॥ ७७

[४-२-११-१३ अस्यैवचो, प्रतिषेधा, स्मर्यते]

अस्यैव चोपपत्तेर्स्स्यादेष ऊष्मा शरीरके ।
उष्ण एव हि जीविष्यन् मरिष्यन् शीतलो भवेत् ॥ ७८

तदुच्चिक्रमिषोर्जीवादपक्रामन्ति नैव हि ।
प्राणाः सहैव ते तेन भवन्तीत्यर्थ ईरितः ॥ ७९

तथा च सप्राणकस्य देहादुत्क्रान्तिरेव हि ।
[2] स्मर्यते च महाभागैर्भारते विदुषो गतिः ॥ ८०

---

[1] छा. ६-८-६. [2] ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् । याज्ञवल्क्य अध्यात्म प्र. १६७ श्लोकः.

शुकस्तु मारुताच्छीघ्रगतिं गत्वान्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥ ८१
सर्वभूतात्मभूतस्य सम्यग्भूतान्विपश्यतः ।
देवाश्वमार्गे मुह्यन्ति चापदस्य पदैषिणः ॥ ८२
भूतेषु तच्छ्रुतेश्चेति जीवसम्पत्तिरुच्यते ।

[४-२-१४-१८ तानि पर, अविभागो, तदोकोग्र, रश्म्यनु, निशि नेति]

तानि भूतानि च परे तथा ह्याह श्रुतिः स्वयम् ॥ ८३
[1]वाचो मनसि सम्पत्तिरित्यादीनि च यानि तु ।
अविभागापत्तिरेव नान्यत्पश्यति वाक्यतः ॥ ८४
आसृत्युपक्रमात्तत्र समाना चेति चोदितम् ।
सृतेरुपक्रमश्चायं दर्शयत्यधुना स्वयम् ॥ ८५
उपसंहृतवागादिकलापस्य तु तस्य हि ।
जीवस्य हृदयं ह्योकः स ओका इति वाक्यतः ॥ ८६
तदग्रज्वलनद्वारा स्थानापादानिका पुनः ।
उत्क्रान्तिः श्रूयते तस्य ह्यैतस्यादिकवाक्यतः ॥ ८७
प्राप्तण्यलोको जीवोऽसौ प्रकाशित इतीरितम् ।
विद्वान् मूर्धन्यनाड्यासौ विद्यासामर्थ्यतः स्वयम् ॥ ८८
निष्क्रामति [2]शतं चैका वाक्ये सम्यगुदीरितम् ।
अथ रश्म्यनुसारी च निष्क्रामति पुनः स्वयम् ॥ ८९
अस्त्यह्नि नाडीरश्मीनां मृतस्याह्नि भवेत्तथा ।
रात्रौ प्रेतस्य न स्यात्तत्संबन्धविरहादिति ॥ ९०
नाडीरश्म्यभिसम्बन्धो यावद्देहं हि वर्तते ।
एतमर्थं दर्शयति श्रुतिश्छान्दोग्यनामिका ॥ ९१

---

[1] छा. ६-८-६. [2] कठ. २-६-१६.

[४-२-१९-२० अनश्चायने, योगिनः प्रति]

दक्षिणेऽप्ययनेऽतश्च ऊर्ध्वमाक्रमते मृतः ।
अहराद्यश्च कालोऽयं सकलो योगिनः प्रति ॥ ९२
स्मार्ते चैते योगसाङ्ख्ये न श्रौते परिकीर्तिते ।
नास्य स्मार्तस्य कालस्य श्रौते च करणं भवेत् ॥ ९३
इत्यनेन प्रकारेण सामरस्यं गुरूदितम् ।
वीरशैवागमैरुक्तं सङ्गृह्य मुनिरादिमः ॥ ९४
अस्त्रत्रयदयं व्यासः साक्षात्सत्यवतीसुतः ।
निगमानामागमानामैकरूप्यमतोऽभवत् ॥ ९५
शब्दभेदो नार्थभेदः सौत्रार्थस्वागमार्थयोः ।
लोके कालुष्यनिर्मग्ना विरोधं स्फुटयन्ति ते ॥ ९६
आगमार्थमजानन्तो नरास्ते मन्दबुद्धयः ।
तत्वदृष्ट्या च विबुधा आगमार्थानुशीलिनः ॥ ९७
तेषां सूत्रैकरूप्यं हि शैवतात्पर्यवर्णनम् ।
पुराणेषु समुत्कृष्टा कलौ पाराशरी स्मृतिः ॥ ९८
द्रढयत्यथ सैवेमसुक्तमर्थं पुनः पुनः ।

[पापकर्मिणां चरितानि]

अथातः सम्प्रवक्ष्यामि चरितं पापकर्मिणाम् ॥ ९९
शृणु तत्परिहाराय विप्र वेदार्थवित्तम ।
महादेवं च विष्णुं च ब्रह्माणं देवतान्तरम् ॥ १००
सदा निन्दन्ति मोहेन मनुष्याः पापकर्मिणः ।
महादेवसमं विष्णुं ब्रह्माणं देवतान्तरम् ॥ १०१
मन्यन्ते विप्र मोहेन मनुष्याः पापकर्मिणः ।
देवानां प्रथमं देवं जन्मनाशविवर्जितम् ॥ १०२

---

[1] श्च—पा.

रुद्रं विश्वाधिकं नैव मन्यन्ते पापकर्मिणः ।
चेतनाचेतनस्यास्य जगतो मूलकारणम् ॥ १०३
मन्यन्ते न शिवं साम्बं मर्मिणः पापकर्मिणः ।
आगमान्तसमुत्पन्नमतिनिर्मलमास्तिक ॥ १०४
आत्मज्ञानं च निन्दन्ति मर्मिणः पापकर्मिणः ।
शान्तिदान्त्यादिविज्ञानसाधनानि महान्ति च ॥ १०५
न स्वीकुर्वन्ति मोहेन मर्मिणः पापकर्मिणः ।
रागद्वेषादिदोषांश्च न निकृन्तन्ति सन्ततम् ॥ १०६
नैव कुर्वन्ति यज्ञांश्च मर्मिणः पापकर्मिणः ।
वेदसिद्धेन मन्त्रेण त्रिपुण्ड्रं भस्मकुण्ठनम् ॥ १०७
नैव कुर्वन्ति मोहेन मर्मिणः पापकर्मिणः ।
शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः ॥ १०८
अङ्किताश्च भवन्त्यज्ञा मर्मिणः पापकर्मिणः ।
त्यजन्ति सकलं कर्म सदा विध्युक्तमास्तिक ॥ १०९
निषिद्धं कर्म कुर्वन्ति मर्मिणः पापकर्मिणः ।
त्यजन्ति वेदं वेदोक्तं सदा स्मृतिपुराणकम् ॥ ११०
वेदाङ्गानि च मोहेन मर्मिणः पापकर्मिणः ।
पाञ्चरात्रे च कापाले पाषण्डेष्वपरेषु च ॥ १११
दीक्षिताश्च भवन्त्येवं मर्मिणः पापकर्मिणः ।
अविमुक्तं कुरुक्षेत्रं पुण्डरीकपुरं तथा ॥ ११२
आश्रयं नैव गच्छन्ति मर्मिणः पापकर्मिणः ।
कीकटेषु च देशेषु देशसम्बन्धवर्जिताः ॥ ११३
वर्तन्ते प्रीतियुक्ताश्च मर्मिणः पापकर्मिणः ।
वश्याकर्षणविद्वेषमारणादिषु कर्मसु ॥ ११४
यतन्ते भ्रान्तिविज्ञानान्मर्मिणः पापकर्मिणः ।
वेदमार्गपरिभ्रंशं वेदबाह्यपरिग्रहम् ॥ ११५

कुर्वन्ति स्वात्मनो मोहान्मर्मिणः पापकर्मिणः ।
अभिषिक्तं च राजानं ब्राह्मणं च बहुश्रुतम् ॥ ११६
निर्भयं च तथा राष्ट्रं बाधन्ते पापकर्मिणः ।
बहुनोक्तेन किं वेदमर्यादाबाधनं तथा ॥ ११७
श्रद्धयैव प्रकुर्वन्ति मर्मिणः पापकर्मिणः ।
श्रुत्यादिभिः प्रमाणैश्च वर्णितस्तत्त्वमार्गतः ॥ ११८
आगमैरेष एवार्थो द्रढीयानुपपादितः ।

इति द्वितीयः पादः

---

अथ तृतीयः पादः

[४-३-१ अर्चिरादिना तत्प्रथितेः]

अर्चिराद्येन मार्गेण विद्वान् ब्रह्म प्रपद्यते ॥ ११९
तत्प्रतीतिश्रुतिर्दृष्टा[1] ह्येष देवपथादिका ।

[४-३-२ वायुमब्दादविशेषविशेषाभ्याम्]

अविशेषविशेषाभ्यां वायुमब्दादितीरितम् ॥ १२०

[४-३-३ तडितोऽधि]

उपरिष्टाद्विद्युतश्च निवेश्यो वरुणः कुतः ।
सम्बन्धादस्ति सम्बन्धो विद्युद्वरुणयोः पुनः ॥ १२१

[४-३-४-आतिवाहिकाः]

श्रूयमाणानार्चिराद्यान् मार्गान्भिन्नानिमे पुनः ।
गन्तॄणां किल नेतारः स एतान् ब्रह्मवाक्यतः ॥ १२२
उक्तं गमयितृत्वं च तस्मान्नेतार एव हि ।

[४-३-५ वैद्युतेनैव]

वैद्युतेनैव च ततस्त[2]च्छ्रुतेः श्रवणात्पुनः ॥ १२३

---

[1] एष देवपथः ब्रह्मपथः इत्यादि छा. ४-१५-६. [2] स एनान् ब्रह्म गमयतीति श्रुतेरित्यर्थः छा. ४-१५-६.

[४-३-५ कार्यं बादरिः]

कार्यं बादरिराचार्यः सत्यलोकं ब्रवीति च ।
वैद्युतस्यास्य च गतेरुपपत्तेरिति ध्रुवम् ॥ १२४

[४-३-७-१० विशेषितत्वाच्च, सामीप्यात्तु, कार्यात्यये, स्मृतेश्च]

तथा विशेषितत्वाच्च [1] सभां वेश्मेति वाक्यतः ।
सामीप्येत्यत्र गङ्गावद्व्यपदेशोऽत्र तस्य हि ॥ १२५
प्रजापतेस्तु लोकस्य कार्यस्य प्रलये सति ।
तल्लोकसम्पादितया परया ब्रह्मविद्यया ॥ १२६
तदध्यक्षेण सह [2] ते ब्रह्मलोकं परात्परम् ।
प्राप्नुवन्तीति ते ब्रह्मलोके त्वित्यादिवाक्यतः ॥ १२७

[४-३-११-१४ परं जैमिनिः, दर्शनाच्च, न च कार्ये, अप्रतीकालंबनात्]

परं जैमिनिराचार्यो मुख्यत्वाद्ब्रह्मयेदिति ।
[3] दर्शनाद्बृहदारण्यश्रुतौ वाक्यादिके तथा ॥ १२८
नायं तु कार्यविषयः प्रतिपत्त्यभिसन्धिकः ।
नामधेयादिवाक्येन प्रोक्तं कार्यविलक्षणम् ॥ १२९
अहंग्रहोपासकांस्तु तद्ब्रह्म नयति ह्यसौ ।
प्रतीकालम्बनात्कार्यं ब्रह्मलोकमिति स्फुटम् ॥ १३०
एवं चोभयथाभावे दोषाभावस्तदत्र च ।
नियामककृतं चैतद्यथैवोपासते बुधः ॥ १३१
तदेव भवतीत्यादि श्रुतिस्तत्र नियामिका ।

[४-३-१५ विशेषं च दर्शयति]

विशेषं दर्शयति च ह्यहमेवेति वै श्रुतिः ॥ १३२

इति तृतीयः पादः

---

[1] छा. ८-४-११. [2] तै. ना. १०-२४. [3] छा. ८-३-४. [4] जाबाल-३

अथ चतुर्थाध्याये चतुर्थः पादः । तत्र सङ्गतिः ।

उत्क्रान्तिर्गतिगन्तव्ये त्रितयं निश्चितं ततः ।
[1]गन्तव्यमधुना प्राप्तः किमवस्थो भवेदिति ॥ १३३

[2]एवमेवेति वाक्ये च संशयं चैवमेव हि ।
आगन्तुना केनचिद्रूपेण सम्पद्यतेऽथवा ॥ १३४

प्राक्सिद्धेनैव रूपेण प्राप्तमागन्तुनेति च ।
मोक्षणस्याफलत्वेनाप्यभिनिष्पद्यतेऽथ च ॥ १३५

प्राक् च स्वरूपमात्रस्य सत्त्वात्प्राप्ते तदुच्यते ।
[४-४-१-४ सम्पद्याविर्भावः, मुक्तः, आत्मा, अविभागेन]
स्वेनैव निष्पद्यतेऽसौ [3]छान्दोग्ये तच्छ्रुतेरिति ॥ १३६

अथ मुक्तः प्रतिज्ञानाद्य [4]आत्मेत्यादिवाक्यतः ।
आत्मा प्रकरणाच्चापि सम्प्रसादेन गृह्यते ॥ १३७

अविभागेन दृष्टत्वाद्भेदे नैव व्यवस्थितिः ।
[४-४-५-९ ब्राह्मेण, चिति, एवमपि, सङ्कल्पादेव, अत एव]
ब्राह्मेणैव स्वरूपेण ह्यभिनिष्पद्यते बुधः ॥ १३८

[5]य आत्मेत्याद्युपन्यासैरिति जैमिनिरुक्तवान् ।
चिति तन्मात्रेण तदात्मकत्वादिति विद्यया ॥ १३९

ज्ञानरूपत्वमुदितं तत्र चाप्यौडुलोमिना ।
चिति तन्मात्रतायां च रूपोपन्यासतस्तथा ॥ १४०

सद्भावादविरोधं च बादरायण उक्तवान् ।
सङ्कल्पादेव स यदि पितृलोकादिकश्रुतेः ॥ १४१

अनन्याधिपतिर्मुक्तः सत्यसङ्कल्पताश्रुतेः ।
[४-४-१०-१६ अभावं, भावं, द्वादशाहवत्, तन्वभावे, भावे, प्रदीपवत्, स्वाप्ययसम्पत्त्योः]
एवं बादरिराचार्यः शरीराभावमाह हि ॥ १४२

---

[1] अधुना गन्तव्यप्राप्तः जीवः किमवस्थः भवेदिति विचार्यते इत्यर्थः.
[2] छा. ८-१२-२. [3] छा. ८-३-४. [4] छा. ८-७-१. [5] ८-७-१.

[1] एकधा भवतीत्यादिविकल्पामननादपि ।
मनोवद्देहसद्भावं जैमिनिर्मन्यते बुधः । १४३
द्वादशाह इवाहीनं सत्रं चोभयलिङ्गतः ।
द्विविधश्रुतिवाक्याच्च द्वैविध्यं बादरायणः ॥ १४४
देहाभावे तु मुक्तस्य भोगस्तस्योपपद्यते ।
यथा सन्ध्ये किल स्वप्ने देहव्यापारिकेऽपि च ॥ १४५
भोगस्तद्वद्देहभावे जाग्रद्वद्भोगसम्भवः ।
यथा प्रदीप एकोऽपि प्रदीपानेकभावताम् ॥ १४६
विकारशक्तियोगेन विद्वानेकस्तथैव हि ।
अनेकभावमैश्वर्ययोगादापद्य शक्तितः ॥ १४७
आविशत्येष सर्वाणि शरीराणि विचक्षणः ।
कुतस्तथाहि शास्त्रं हि चैकधा भवति त्रिधा ॥ १४८
पञ्चधेत्यादि च कथं मुक्तः स्यान्नैकवर्त्मसु ।
स्वाप्ययः सुषुप्तिः स्वमपीतो भवति श्रुतेः ॥ १४९
सम्पत्तिरथ चोत्क्रान्तिर्वाङ्मनस्यादिमश्रुतेः ।
तयोरन्यतरावस्थामपेक्ष्यैतद्विशेषणम् ॥ १५०
विज्ञानाभाववचनमाविष्कृतमभूत्पुनः ।

[४-४-१७-१९. जगद्व्यापारवर्जं, प्रत्यक्षोपदेशात्, विकारावर्ति,]

तदसन्निहितत्वाच्च तथा प्रकरणादपि ॥ १५१
जगद्व्यापारवर्जं स्यादैश्वर्यमणिमादिकम् ।
प्रत्यक्षेणोपदेशादि तथा मह इति श्रुतौ ॥ १५२
[2] आप्नोति स्वराज्यमिति विकारान्तस्तथैव चेत् ।
आधिकारिकसूर्यादिमण्डलस्थोक्तितत्त्वतः ॥ १५३

---

[1] छा. ७-२६-२. [2] तैत्तिरीये. १-६-२.

तदेवात्र ब्रह्मशब्दादुच्यते न तु तत्पुनः ।
मुक्तप्राप्यं चाविकृतं ब्रह्म सत्यादिलक्षणम् ॥ १५४
विकारावर्ति च तथा स्थितिमाह हि सा श्रुतिः ।
[४-४-२०-२१ दर्शयतः, भोगमात्रसाम्यलिंगाच्च]
एवं प्रत्यक्षानुमाने विकारावर्तितां पुनः ॥ १५५
परस्य ज्योतिषश्चैवं दर्शयेते श्रुतिस्मृती ।
[1] न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥ १५६
तथा विद्वान् पुण्यपापे विधूयाथ निरञ्जनः ।
उपैति परमं साम्यमिति यत्साम्यमीरितम् ॥ १५७
न तज्जगद्व्यापृतौ तु भोगमात्रे तु केवलम् ।
[2] श्रूयते सोऽश्नुते सर्वान् कामानित्यादिकश्रुतेः ॥ १५८
[४-४-२२ अनावृत्तिः शब्दादनावृत्तिश्शब्दात्]
विद्यया देवयानेन ब्रह्म चाविकृतं परम् ।
प्राप्तानां पुनरावृत्तिरथ न क्वापि दृश्यते ॥ १५९
[3] तयोर्ध्वमायन्नमृतत्वमेतीत्यादिकश्रुतेः ।
तेषां न पुनरावृत्तिः शब्दादेव त्विति श्रुतेः ॥ १६०
इति चतुर्थः पादः अध्यायश्च समाप्तः

निगमनम्

एतादृशं सामरस्यं लिङ्गस्याङ्गस्य च द्वयोः ।
स्थलस्यैकशतस्यापि विवेकेन भवेद्ध्रुवम् ॥ १६१
क्रमेण व्याससूत्राणामानुकूल्यं च वर्णितम् ।
आगमोक्तपदार्थानामन्योन्याभेददर्शनात् ॥ १६२
अप्रमेयाद्यया शक्त्या समेतं ब्रह्मशब्दितम् ।
पातु सर्वाणि भूतानि सच्चिदानन्दलक्षणम् ॥ १६३
विद्यासारा संहितेममर्थमेव ह्यपुस्फुटत् ।
इति चतुर्थोपदेशे ब्रह्मसूत्रव्याख्याभागः समाप्तः

[1] भगवद्गीता. १५-६. [2] तै. आनन्द १-२. [3] छा. ८-६-६.

॥ श्रीः ॥

जगत्सृष्ट्यादिविवरणम् शिवाधिक्यप्रतिपादनं च ।

अथातः सम्प्रवक्ष्यामि तव सृष्टिक्रमं द्विज ॥ १६४

श्रद्धया शृणु वेदोक्तं ब्रह्मविज्ञानसिद्धये ।
इदं स्थितं जगत्सर्वं प्रळये परमेश्वरे ॥ १६५

मायाभिन्ने स्वमायाख्यकारणाभिन्नरूपतः ।
वासनाभावरूपेण वासनाभावरूपतः ॥ १६६

कालकर्मविपाकेन वासनाबलतोऽपि च ।
मायया स्वरूपिणीवास्मिन् महानात्मा प्रजायते ॥ १६७

स्रष्टव्यविषयं ज्ञानं सत्वजं मुक्तिसाधनम् ।
महानात्मेति विद्वाद्भिः पठ्यते स परः शिवः ॥ १६८

सृष्ट्वा महान्तमात्मानं शिवोऽनुप्राविशत्स्वयम् ।
न पुनस्तत्प्रधानेन स्वरूपेण महेश्वरः ॥ १६९

सर्वज्ञ इति विद्वाद्भिः पठ्यते परमेश्वरः ।
ऐक्षतेतीक्षणोपाधिप्रधानः परमेश्वरः ॥ १७०

स पुनश्चेक्षते सत्वगुणमात्मतयैव तु ।
मनुते सर्वसंहर्ता तमसा भवति स्वयम् ॥ १७१

तथैवात्मतया नित्यं मनुते च तमोगुणम् ।
पालकश्च भवेन्नित्यं सत्वेनैव गुणेन तु ॥ १७२

रजसा केवलेनैव सर्वस्रष्टा भवेच्छिवः ।
स्रष्टा ब्रह्माऽभिसम्प्रोक्तः पालको विष्णुरुच्यते ॥ १७३

संहर्ता तु महेशानः शिवः साधारणः परः ।
रजः सर्वत्र चोत्पत्तौ सत्त्वं सर्वत्र पालने ॥ १७४

तमः सर्वत्र संहारे हेतुः स्यान्नात्र संशयः ।
यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः ॥ १७५

अधिष्ठानतया स्थित्वा सदैवोपकरोति हि ।
पुण्यपापे च कालश्च वासना च महेश्वरः ॥ १७६

सृष्टिस्थित्यन्तकार्येषु सदैवोपकरोति च ।
त्रिमूर्तीनां तु सर्गस्यानन्तरं शब्दपूर्विका ॥ १७७

भूतसृष्टिर्यथापूर्वं मायायास्तु प्रवर्तते ।
शब्दादिपञ्चभूतेभ्यः पञ्च सत्त्वगुणेन तु ॥ १७८

जायन्ते च यथापूर्वं तथैव ज्ञानशक्तयः ।
शब्दादिपञ्चभूतेभ्यो जायन्ते कृतिशक्तयः ॥ १७९

यथापूर्वं बुधश्रेष्ठ रजसा कालकर्मतः ।
शब्दादिपञ्चभूतेषु विज्ञाताः ज्ञानशक्तयः ॥ १८०

स्वकारणैक्यमायाख्यविद्यया सकलीकृताः ।
एकाकारत्वमापाद्य कालकर्मविपाकतः ॥ १८१

व्यष्ट्यन्तःकरणानां तु समष्टिः स्यान्न संशयः ।
शब्दादिपञ्चभूतेषु विज्ञाताः कृतिशक्तयः ॥ १८२

एकाकारत्वमापाद्य पूर्ववत्कालकर्मतः ।
व्यष्टिप्राणस्य सर्वस्य समष्टिः स्यान्न संशयः ॥ १८३

शब्दादिपञ्चभूतस्थाः सत्वजा ज्ञानशक्तयः ।
ज्ञानेन्द्रियाणां सर्वेषां भवन्ति च समष्टयः ॥ १८४

तथा शब्दविरूपस्थाः क्रियारूपास्तु शक्तयः ।
कर्मेन्द्रियाणां सर्वेषां भवन्ति च समष्टयः ॥ १८५

चतुर्विधसमष्ट्यन्तःकरणं भवति क्रमात् ।
मनोबुद्धिरहङ्कारश्चित्तं चेति तथैव च ॥ १८६

प्राणापानादि भेदेन पञ्चधा भवति क्रमात् ।
समष्टिप्राणसंज्ञाश्च तेषामेवाभिमानिनः ॥ १८७

हिरण्यगर्भः सूत्रात्मा दिग्वाय्वादित्यसंज्ञिताः ।
वरुणश्च तथाभूमिस्तथा देवस्त्रिविक्रमः ॥ १८८

साम्बश्च तच्छासनेन ब्रह्मणा विष्णुनापि च ।
रुद्रेण च स्मृतिः सर्वैः क्रियते तन्निरन्तरम् ॥ १८९
इन्द्राग्नी च प्रजानाथो मित्रश्चन्द्रो बृहस्पतिः ।
कालाग्निरुद्रो भगवान् शिवा भोगप्रदायिनी ॥ १९०
विशिष्टा विश्वसृष्ट्यश्च विश्वयोनिरजायत ।
सर्वाभिमानी भगवान् साम्बः सत्यादिलक्षणः ॥ १९१
सर्वाभिमानिनं साम्बं संसाराम्भोधितारकम् ।
रुक्माभं सूक्ष्मधीगम्यं विदित्वा मुच्यते जनः ॥ १९२
तस्य देवस्य साम्बस्य शिवसत्यस्वरूपिणः ।
मायया च शिवादेव साम्बात्सत्यादिलक्षणात् ॥ १९३
अण्डभेदाश्च जायन्ते लोकभेदास्तथैव च ।
भोक्तृभोग्यादिभेदाश्च देवादीनां भिदा अपि ॥ १९४
वर्णाश्रमादिभेदाश्च धर्माधर्मभिदा अपि ।
सुखदुःखादिभेदाश्च स्वर्गश्वभ्रभिदा अपि ॥ १९५
सर्वकारणमीशानः साम्बः सत्यादिलक्षणः ।
न विष्णुर्न विरिञ्चिश्च न रुद्रो नापरः पुमान् ॥ १९६
स एव सर्ववेदान्तैः सादरं प्रतिपाद्यते ।
वेदानुसारिस्मृतिभिः पुराणैर्भारतादिभिः ॥ १९७
श्रौतस्मार्तसमाचारैः स एवाराध्यते द्विजैः ।
तच्छेषत्वेन चाराध्यास्तदन्याः सकला अपि ॥ १९८
क्वचित्कदाचिद्वेदेषु तदन्याः सर्वदेवताः ।
ज्ञेयत्वेनैव चोद्यन्ते ध्येयत्वेन तथैव च ॥ १९९
ताश्च तद्रूपतस्तासामुच्यन्ते न कदाचन ।
किन्तु साम्बस्य रुद्रस्य शिवस्यैवान्वयेन हि ॥ २००
श्रुतयश्च पुराणानि भारतादीनि सत्तम ।
शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ॥ २०१

शिवशङ्कररुद्रेशब्रह्मेशानादिनामभिः ।
श्रुतिस्मृतिपुराणाद्यैरुच्यते परमं पदम् ॥ २०२

विष्णुनारायणाद्यैश्च नामभिः सकलैरपि ।
श्रुतिस्मृतिपुराणाद्यैर्नोच्यते परमं पदम् ॥ २०३

रूढ्या रुद्रादिशब्दास्तु वर्तन्ते परमेश्वरे ।
योगवृत्त्या हि विष्ण्वादिशब्दाः सत्यमुदीरिताः ॥ २०४

सर्वमूर्तिः स्वयं साक्षी साम्बः सत्यादिलक्षणः ।
[1] लक्ष्याभिधः स्थितः साक्षात्तदधीनमिदं जगत् ॥ २०५

विहाय तं महाभ्रान्त्या ब्रह्मविष्ण्वादिदेवताः ।
परतत्त्वतया वेदा ब्रुवन्तीति ब्रुवन्ति च ॥ २०६

तथा स्मृतिपुराणानि भारतप्रमुखानि च ।
वदन्ति मायावन्मर्त्यान् सा माया दुस्तरा खलु ॥ २०७

महापापवतां नृणां शिवः सत्यादिलक्षणः ।
परतत्त्वतया साम्बः स्वप्रभो न विभासते ॥ २०८

अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
परतत्त्वतया साम्बः शिवो भाति सनातनः ॥ २०९

शिवदृष्टिस्तु सर्वत्र कर्तव्या सर्वजन्तुभिः ।
राजदृष्टिर्यथाऽमात्ये क्रियते सर्वजन्तुभिः ॥ २१०

राजाधिराजः सर्वेषां त्र्यम्बकस्त्रिपुरान्तकः ।
तस्यैवानुचराः सर्वे ब्रह्मविष्ण्वादयः सुराः ॥ २११

मुक्तिहेतुपरिज्ञानं तत्प्रसादेन केवलम् ।
नैव विष्ण्वादिदेवानां प्रसादेन न संशयः ॥ २१२

विहाय [2] साम्बमीशानं यतन्ते ये विमुक्तये ।
ते महातमसाऽऽक्रान्ता न तेषां परमा गतिः ॥ २१३

---

[1] लक्ष्यभूतः–पा. [2] विज्ञाय–पा.

विहाय साम्बमीशानं यजन्ते देवतान्तरम् ।
ते महाघोरसंसारे पतन्ति परिमोहिताः ॥ २१४
महादेवस्य साम्बस्य शेषत्वेनैव केवलम् ।
देवताः सकला ध्येयाः सुविज्ञेया मनीषिभिः ॥ २१५
सर्वमन्यत्परित्यज्य शिव एव शिवङ्करः ।
ध्येय इत्याह परमा श्रुतिराथर्वणी खलु ॥ २१६
अथ किं बहुनोक्तेन शिवः साम्बः सनातनः ।
साक्षान्निष्ठा हि शास्त्राणां नापरः सत्यमीरितम् ॥ २१७
तदन्यत्सकलं विश्वं स हि विश्वाधिकः शिवः ।
स एव जगतां नाथः स हि संसारमोचकः ॥ २१८
अथाप्यन्यत्प्रवक्ष्यामि देवताधिक्यमादरात् ।
यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः ॥ २१९
अचेतनेभ्यः सर्वेभ्यश्चेतना अधिकाः स्मृताः ।
चेतनेषु मनुष्याश्च मनुष्येष्वधिका द्विजाः ॥ २२०
द्विजेषु ब्राह्मणास्तेषु कुलीना अधिकाः स्मृताः ।
तेभ्यो मनुष्यगन्धर्वा अधिकाः परिकीर्तिताः ॥ २२१
तेभ्योऽपि देवगन्धर्वाः पितरश्च ततः परम् ।
कर्मदेवाः समाख्यातास्तथा देवास्ततः परम् ॥ २२२
तेभ्य इन्द्रोऽधिकस्तस्मादधिकस्तु बृहस्पतिः ।
बृहस्पतेरपि प्राज्ञः प्रजानामधिपः स्मृतः ॥ २२३
प्रजापतेरपि ब्रह्मा ब्रह्मणो विष्णुरेव च ।
विष्णोरपि हरस्तस्मान्मायी साक्षान्महेश्वरः ॥ २२४
विश्वाधिकपराण्येव नैव विश्वपराणि वै ।
तथा स्मृतिपुराणादि भारतादीनि वै पुनः ॥ २२५
शास्त्रान्तराणि तर्काश्च श्रुत्यनुग्राहकास्तथा ।
विना साक्षाच्छिवं साम्बं प्रमाणान्यखिलान्यपि ॥ २२६

विश्वाधिकतया नान्यं प्रवदन्ति कदाचन ।
महेश्वरपुराणानि समस्तानि महामुने ॥ २२७
असाधारणया मूर्त्या नाम्नाऽसाधारणेन च ।
वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम् ॥ २२८
नृत्यन्तं स्वपरानन्दप्रमोदं चन्द्रशेखरम् ।
त्रिमूर्तीनां हरं चापि तदंशं तस्य वैभवम् ॥ २२९
तदंशस्यापि मानं च वदन्ति च सदाशिवम् ।
वैष्णवानि पुराणानि समस्तानि च वै पुनः ॥ २३०
त्रिमूर्तीनां हरेर्नाम्ना मत्यो तस्य परं पदम् ।
प्रवदन्ति पुराणे द्वे ब्राह्मे चैवानया दिशा ॥ २३१
आग्नेयं च तथा सौरं पुराणं पण्डितोत्तम ।
अष्टादशपुराणानां निष्ठा काष्ठा महेश्वरः ॥ २३२
गुणाभिमानिनो नैव ब्रह्मविष्णुमहेश्वराः ।
वैष्णवानि पुराणानि त्रिमूर्तीनां हरेरपि ॥ २३३
तदंशस्य तदंशस्य वैभवं च वदन्ति हि ।
योऽपकर्षो हरेर्दृष्टः शाम्भवेष्वखिलेष्वपि ॥ २३४
पुराणेषु हरेस्साक्षान्मूलभूतस्य सत्तम ।
वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते ॥ २३५
[1] रुद्रस्यासौ हरस्यापि विभूतेरेव केवलम् ।
उत्कर्षो यः पुराणेषु दृश्यते शाम्भवेषु च ॥ २३६
रुद्रस्यासौ स्वरूपेण मुने तत्त्वात्मनापि च ।
उत्कर्षो यः पुराणेषु दृश्यते वैष्णवेषु च ॥ २३७
असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तम ।
एवं पुराणयोः साक्षाद्ब्रह्मणो दर्शिता च दिक् ॥ २३८

---

[1] रुद्रस्यापि-पा.

पावकस्य पुराणे च तथा सौरे च सत्तम ।
आधिक्यं देवदेवस्य शिवस्य परमात्मनः ॥ २३९
अविज्ञाय नरा विष्णुं वरिष्ठं मन्वते भ्रमात् ।
रुद्राधिक्यमाविज्ञाय ब्रह्मनारायणौ पुरा ॥ २४०
अहं ब्रह्म त्वहं चेति भ्रमादकुरुतां रणम् ।
क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः ॥ २४१
शशाप विष्णुं गर्भस्थो भवत्वामिति मोहितः ।
त्वद्भक्ता ब्राह्मणाः साक्षात् त्रिपुण्ड्रे भस्मकुण्ठने ॥ २४२
भवेयुर्विमुखा नित्यं वेदासिद्धे विमुक्तिदे ।
त्रिशूले चतुरस्रे वा वेणुपत्रोपमे तथा ॥ २४३
पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः ।
आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता जनाः ॥ २४४
अग्नितप्तैर्महामोहाद्भवेयुश्चांसयोर्द्वयोः[1] ।
वेदाध्ययनमार्गेण त्वदीयाराधने द्विजाः ॥ २४५
त्वदीये पाञ्चरात्रे च तन्त्रे भागवतेऽपि च ।
दीक्षिताश्च द्विजा नित्यं भवेयुर्निर्भया हरे ॥ २४६
श्रौतस्मार्तसदाचारे सद्योमुक्तिकरे शुभे ।
त्वद्भक्ता विमुखा नित्यं भवेयुः परिमोहिताः ॥ २४७
एवं विष्णुर्विरिञ्चेन शप्तो मोहवशं गतः ।
महाक्रोधेन संयुक्तः शशाप चतुराननम् ॥ २४८
शङ्करेण भवेच्छिन्नं त्वदीयं पञ्चमं शिरः ।
पङ्कजोद्भव केनापि कारणेनाचिरेण तु ॥ २४९
त्वद्भक्ता ब्राह्मणा लोके क्षत्रिया वैश्यसंभवाः ।
शूद्राश्च सङ्करा नित्यं भवेयुश्चतुरानन ॥ २५०

---

[1] भवन्ति च वदन्ति च—पा.

तन्त्रं त्वदीयं विच्छिन्नं भवेत्सर्वत्र सर्वदा ।
न भवेत्त्वत्प्रतिष्ठा च स्वतन्त्रा पद्मसंभव ॥ २५१
एवं प्रस्खलितौ मोहात्तावप्यभवतां द्विज ।
अविज्ञाय शिवाधिक्यं महामोहस्य वैभवात् ॥ २५२
आधिक्यं सर्वदेवेभ्यो मनुते शङ्करस्य यः ।
संसारसागरोत्तीर्णो मुक्तिपारं स गच्छति ॥ २५३
रुद्रं विश्वाधिकं साक्षात्सर्वदा सर्वसाक्षिणम् ।
सर्वस्मादधिकं चैव मनुते स तु शङ्करः ॥ २५४
सर्वस्मादधिकत्वं ये न वदन्ति पिनाकिनः ।
सममन्यैर्वदन्त्येनं ते महापातकैर्युताः ॥ २५५
आधिक्यं सर्वमानानां यथा वेदस्य विद्यते ।
तथा रुद्रस्य देवानामाधिक्यं विद्यतेऽनघ ॥ २५६

इति सकलश्रुतिसार आदरात्
तव कथितः कृपयैव केवलम् ।
शुक हृदये प्रतिभाति चेदयं
तरति जनः स्वकशोकसागरम् ॥ २५७

---

देवतालिङ्गादरणविधिः, शिवभक्तेरावश्यकत्वप्रतिपादनं च ।

अतः परं प्रवक्ष्यामि देवतालिङ्गमादरात् ।
यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः ॥ २५८
देवता द्विविधा प्रोक्ता श्रौताश्रौतविभागतः ।
श्रौतधर्मैकनिष्ठानां श्रुतिसिद्धा हि देवताः ॥ २५९
अश्रौततन्त्रनिष्ठानां श्रुतिसिद्धा न देवताः ।
अश्रौतधर्मनिष्ठानां अश्रौता एव देवताः ॥ २६०
श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि ।
अश्रौतधर्मनिष्ठानामश्रौतं लिङ्गमीरितम् ॥ २६१

देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम् ।
अश्रौततन्त्रनिष्ठा यास्तासामश्रौतमेव हि ॥ २६२
श्रौतं लिङ्गं तु विज्ञेयं त्रिपुण्ड्रोद्धूलनात्मकम् ।
अश्रौतमूर्ध्वपुण्ड्रादि न वै तिर्यक् त्रिपुडकम् ॥ २६३
वेदसिद्धो महादेवः साक्षात्संसारमोचकः ।
उमार्धविग्रहः शुद्धश्चन्द्रार्धकृतशेखरः ॥ २६४
लोकानामुपकाराय श्रौतं लिङ्गं दधाति च ।
वेदसिद्धस्य विष्णोश्च श्रौतं लिङ्गं न चेतरत् ॥ २६५
प्रादुर्भावविशेषाणामपि तस्य तदेव हि ।
ब्रह्मणो वेदसिद्धस्य श्रौतलिङ्गं न चेतरत् ॥ २६६
प्रादुर्भावविशेषाणामपि तस्य तदेव हि ।
देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम् ॥ २६७
प्रादुर्भावविशेषाणामपि तासां तदेव हि ।
तन्त्रसिद्धो महादेवस्तन्त्रसिद्धेन वर्त्मना ॥ २६८
दधाति भस्मना तिर्यक्त्रिपुण्ड्रं भस्मवत्सलः ।
तन्त्रसिद्धो महाविष्णुस्त्रिशूलं चोर्ध्वपुण्ड्रकम् ॥ २६९
दधाति भक्तरक्षार्थं ललाटे चतुरश्रकम् ।
तन्त्रसिद्धो विरिञ्चिश्च वर्तुलं तन्त्रवर्त्मना ॥ २७०
दधाति भक्तरक्षार्थं ललाटे करुणानिधिः ।
इन्द्रादिदेवतानां च वज्रपाशाङ्कुशादयः ॥ २७१
लिङ्गत्वेनैव निर्दिष्टास्तन्त्रोक्तेनैव वर्त्मना ।
तन्त्रनिष्ठः शिवे भक्तस्तन्निष्ठेनैव वर्त्मना ॥ २७२
त्रिपुण्ड्रं धारयेन्नित्यं ललाटे भस्मनैव तत् ।
तन्त्रनिष्ठस्तथाविष्णोर्भक्तस्तान्त्रेण वर्त्मना ॥ २७३
त्रिशूलं चतुरश्रं वा धारयेदूर्ध्वपुण्ड्रकम् ।
तन्त्रनिष्ठस्तथा नित्यं भक्तस्साक्षाच्चतुर्मुखे ॥ २७४

ललाटे वर्तुलं भक्त्या धारयेत्तन्त्रवर्त्मना ।
इन्द्रादिदेवताभक्तस्तन्त्रनिष्ठस्तथा नरः ॥ २७५
ललाटे धारयेन्नित्यं वज्रपाशाङ्कुशादिकम् ।
तान्त्रिकाणां च सर्वेषां भस्मनैव त्रिपुण्ड्रकम् ॥ २७६
वरिष्ठं सर्वलिङ्गेभ्यः सत्यमेव न संशयः ।
तन्त्रनिष्ठो महादेवभक्तास्तिर्यक्त्रिपुण्ड्रकम् ॥ २७७
विना पुण्ड्रान्तरं मोहाद्धारयेन्नारकी भवेत् ।
ललाटे भस्मना तिर्यक्त्रिपुण्ड्रं यत्तु तन्मयम् ॥ २७८
लिङ्गं माहेश्वरं प्रोक्तं वैष्णवं ब्राह्ममेव च ।
शैवं भागवतं ब्राह्मं तल्लिङ्गं परिकीर्तितम् ॥ २७९
वैदिकस्तल्ललाटे तु धारयेद्वेदवर्त्मना ।
महापापवतां नृणां वेदसिद्धे महेश्वरे ॥ २८०
त्रिपुण्ड्रोद्धूलनादौ च प्रद्वेषश्च प्रजायते ।
यस्य स्यात्पितरि द्वेषः सर्वेषां जगतां गुरौ ॥ २८१
उत्पत्तौ तस्य साङ्कर्यमनुमेयं विपश्चिता ।
वेदमार्गसमं मार्गमितरं मनुते तु यः ॥ २८२
अधिकं वास्य साङ्कर्यमनुमेयं विपश्चिता ।
शिवरुद्रमहेशानब्रह्मेशानादिनामभिः ॥ २८३
समं विष्ण्वादिशब्दं यो मनुते स हि सङ्करः ।
यस्य स्याद्भस्मनि द्वेषस्त्रिपुण्ड्रोद्धूलनेऽपि च ॥ २८४
उत्पत्तौ तस्य साङ्कर्यमनुमेयं विपश्चिता ।
महादेवाधिकं विष्णुं मनुते यस्तु मानवः ॥ २८५
तस्य वंशस्य साङ्कर्यमनुमेयं विपश्चिता ।
पापानामपि बाहुल्याद्दधीचस्य च शापतः ॥ २८६
सतां मार्गतया प्राज्ञाः प्रवदन्ति महर्षयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २८७

वर्णधर्मतया प्राज्ञाः प्रवदन्ति महेश्वरि ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २८८
महापातकसङ्घाततमसश्चण्डभास्करम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २८९
गौतमस्य मुनेः शापाच्छ्रौतं लिङ्गं न रोचते ।
प्रत्युत्तरं तु विज्ञानादश्रौते चोर्ध्वपुण्ड्रके ॥ २९०
ब्राह्मणाः क्षत्रिया वैश्याः श्रद्धां कुर्वन्ति चापरे ।
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ॥ २९१
वेदोक्तेनैव मार्गेण त्रिपुण्ड्रे जायते रतिः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रं चावकुण्ठनम् ॥ २९२
यस्य सिद्ध्येत्प्रयत्नेन शाम्भवं तस्य पुष्कलम् ।
वेदवेदान्तनिष्ठानां भस्मनैव त्रिपुण्ड्रकम् । २९३
सम्यग्ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९४
सर्वपापहरं प्रोक्तं सत्ययुक्तं न संशयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९५
पार्वत्याश्च महालक्ष्म्या भारत्यास्तृप्तिकारणम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९६
विना मुक्तिर्मनुष्याणां देवानां च न सिद्ध्यति ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९७
शिवस्य विष्णोर्देवानां ब्रह्मणस्तृप्तिकारणम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९८
विना वेदान्तविज्ञानं जायते नैव कस्यचित् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ २९९
विना वेदोदिताचाराः स्मार्ताश्चानर्थकारणम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ ३००

आश्रमाणां च सर्वेषां धर्मत्वेनाहुरास्तिक ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ॥ ३०१
रक्षार्थं मङ्गलार्थं च प्रवदन्ति महर्षयः ।
बहुनात्र किमुक्तेन सर्वसिद्धिकरं परम् ॥ ३०२
त्रिपुण्ड्रधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ।
विषपानेन नित्यत्वं कुरुते आत्मनो हि सः ॥ ३०३

ततस्त्रिपुण्ड्रं रचयेत वैष्णवं
ब्राह्मं च शैवं मनुजस्सदैव हि ।
विमुक्तिकामस्तु सितेन भस्मना
श्रुतिप्रसिद्धेन हि वर्त्मना यदा ॥ ३०४

इत्यादिभिस्तु वचनैः पराशरसुभाषितैः ।
कलौ कालुष्यनाशाय शिवलिङ्गं प्रपूजयेत् ॥ ३०५
अष्टावरणविज्ञानी पञ्चाचारपरायणः ।
वैदिकं कर्म कुर्वीत ज्ञानैकफलसाधनम् ॥ ३०६
न कुर्यात्पाशवं कर्म वीरशैवः कदाचन ।
वैदिका एव यतयो नाचरन्ति यथा बुधाः ॥ ३०७
तत्त्वज्ञानैकसाध्यानि कुर्वीतागमतत्परः ।
आगमार्था वेदसिद्धा वैदिका आगमोदिताः ॥ ३०८
उभयज्ञानकुशलस्तद्धर्मानाचरेद्बुधः ।
मोक्षमार्गैकविमुखाः कलिकल्मषचेतसः ॥ ३०९
परस्परं विनिन्दन्ति न स्वात्महितकारिणः ।
वीरशैवोक्तधर्मास्ते पाराशरपुराणतः ॥ ३१०
बृंहिता वेदसिद्धाश्च स्मृतिष्वपि त एव हि ।
अतो वेदपुराणस्मृत्युक्ता आगमचोदिताः ॥ ३११
प्रत्येकमभिधास्यन्ते [1] शिवधर्माः [2] समीहिताः ।

[1] स्यास्ते–पा. [2] समीरिताः–पा.

ब्रह्मविद्याङ्गमित्येव मन्त्रवर्णनसङ्गतिः ॥ ३१२

ब्रह्मविद्याङ्गता तेषां तत्तत्प्रकरणे पुनः ।
स्फुटीभविष्यति प्रांशुयुक्तिभिस्तत्त्वमार्गतः ॥ ३१३

व्याससूत्रानुकूलत्वं वर्णितं प्रतिसूत्रके ।
वैदिकत्वं सिद्धमेव यत्तेषामेकरूपता ॥ ३१४

वैदिकाचरणीयत्वं वैदिकत्वादनिन्दितम् ।
तान्त्रिकं द्विविधं वेदविहितं तद्विरुद्धकम् ॥ ३१५

प्रमाणमुभयं चापि परमार्थोपदेशतः ।
तान्त्रिकं वेदविहितं वीरशैवमुदाहृतम् ॥ ३१६

केवलाद्वैदिकाद्धर्मादेतदेव विशिष्यते ।
यथार्थाधानिनां पुंसामग्निहोत्रमुपासनम् ॥ ३१७

अवाधानी नोभयार्हः श्रौतसूत्रं हि तस्य च ।
गृह्याग्निकर्मणां लोपाद्यथा नैव विशिष्यते ॥ ३१८

उभयार्हो वीरशैवस्तान्त्रिको वैदिकोत्तमः ।
वैदिकस्तान्त्रिकान् धर्मान्नार्हत्येव ह्यदीक्षितः ॥ ३१९

यच्च वेदनिषिद्धं स्यात्कापालादिमतं पुनः ।
अवेदाधिकृतानां तदेतदुक्तं समञ्जसम् ॥ ३२०

[अध्यासखण्डनम्]

अत्रेदं विचार्यते—

केश्चित् "[1]अथातो ब्रह्मजिज्ञासा" इत्यत्रासूत्रित एवाध्यासः प्रपञ्चितः। नचाद्यसूत्रस्य विषयप्रयोजनसूचकत्वात्, विषयस्य च जीवब्रह्मणोः स्वरूपैक्यलक्षणस्य तज्ज्ञानस्य वाध्यासाधीनत्वात् सोऽर्थात्सूत्रित एवेति वाच्यम्। जीवब्रह्मणोः स्वरूपैक्यस्यैवाभावेन तस्य विषयत्वासम्प्रतिपत्तेः। न हि जीवब्रह्मणोः स्वरूपैक्यस्यैवाभावेन तस्य विषयत्वसम्प्रति-

---

[1] ब्र. सू.—१-१-१.

पत्तिः। न हि जीवब्रह्मणोः स्वरूपैक्यं क्वचित्सूत्रितम्। प्रत्युत "[1]अंशो नाना व्यपदेशात्" इति जीवो ब्रह्मणोऽशो भिन्ना-भिन्नश्च [2]अग्नेरिव विस्फुलिङ्गाः" इत्युक्तम्। नह्यग्निविस्फु-लिङ्गयोः स्वरूपैक्यमस्ति, येन जीवब्रह्मणोरपि भवेत्।

नच भेदाभेदयोर्विरोधेनैकत्रासम्भवादविद्यालक्षणोपाधि-कृतो मिथ्याभेद एवात्राभिहित इति वाच्यम्। [3]उभयव्यप-देशात्त्वहिकुण्डलवत्" "[4]प्रकाशाश्रयवद्वा तेजस्त्वात्" "[5]पूर्व-वद्वा" "[6]अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" [7]तत्स्वाभाव्यापत्तिरुपपत्तेः "[8]प्रदीपवदावेशस्तथा हि दर्श-यति" इति च भेदाभेदयोः प्रमाणसिद्धत्वेन दृष्टान्तेषु दृष्टत्वेनाविरोधस्यैव व्यवस्थापनात्। तथाच तत्रैव वक्ष्यते।

तथा "[9]भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इत्यत्रा-प्यविरोधः समर्थितः। तथाहीदं सूत्रं तैरेवैवं व्याख्यातम्। अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते। यद्यपि श्रुतिः प्रमाणं स्वविषये भवति; तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति। यथा मन्त्रवादे तर्कोऽपि स्वविषयादन्यत्र प्रतिष्ठितः स्यात्। यथा धर्माधर्मयोः। किमतो यद्येवं अत इदमुक्तम्। यत्पुनः प्रमाणान्तरसिद्धार्थ-बोधनं श्रुतेः। कः पुनः प्रमाणान्तरासिद्धोऽर्थः श्रुत्या [10]बाध्यत इति,—उच्यते। प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके। भोक्ता चेतनः [11]शारीरः; भोग्याश्च शब्दादयो विषया इति। यथा भोक्ता देवदत्तः ओदनश्च भोग्य इति। अस्य च भोक्तृभोग्यविभागस्याभावः प्रसज्येत; यदि भोक्ता भोग्य-

---

[1] ब्र.सू. २-३-४३. [2] मैत्रेय ६-२६. [3] ब्र.सू.३-२-२६. [4] ब्र.सू.३-२-२७. [5] ब्र.सू ३-२-२८. [6] ब्र.सू.२-३-४७. [7] ब्र.सू.३-१-२२. [8] ब्र.सू.४-४-१५. [9] ब्र.सू.२-१-१४. [10] बाध्यत—पा. [11] शारीरी-पा.

भावमापद्येत, भोग्यं वा भोक्तृभावम्। तयोश्च इतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्यते। न चास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम्। अतो न युक्तं ब्रह्मकारणत्वावधारणमिति चेत् कश्चिद्ब्रूयात्, तं प्रति ब्रूयात्—स्याल्लोकवदिति। उपपद्यत एवायमस्मत्पक्षेऽपि विभागः। एवं लोके दृष्टत्वात्, यथा समुद्रादुदकात्मनोऽनन्यत्वेऽपि फेनवीच्यादीनामितरेतरभावापत्तिर्भवति। नच तेषामितरेतरभावानापत्तौ समुद्रादुदकात्मनोऽन्यत्वं न भवति। एवमिहापि न भोक्तृभोग्ययोरितरेतरभावापत्तिः। नापि ब्रह्मणः सदात्मकादनन्यत्वाभाव इति भविष्यतीति।

नन्विदमविरोधसमर्थनमभ्युपगमवादमात्रं, [1]"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रेण वाचारम्भणादिश्रुत्या सर्वस्यापि भेदप्रपञ्चस्य बाधितत्वसमर्थनादिति चेत्; न, नह्यनेन सूत्रेण कृत्स्नस्य प्रपञ्चस्य बाधितत्वं समर्थ्यते। तथाहि—प्रत्यक्षादिप्रमाणसिद्धो भेदप्रपञ्चः श्रुत्या बाधितुं न शक्यते। प्रत्यक्षविरोधे श्रुतीनामेवान्यपरत्वदर्शनात्। यथा "कृष्णलं श्रपयेदि" ति विधेः स्वर्णमाषे प्रत्यक्षेण विक्लित्ति बाधे उष्णीकरणमात्रपरता। यथा वा "[2]सोमेन यजेत" इत्यत्र यागेन भावयेदित्यर्थाङ्गीकारात् सोमेन यागेनेत्यनयोः सामानाधिकरण्येनान्वये सति सोमलतायागयोरभेदस्य प्रत्यक्षबाधितत्वात् सोमवता यागेनेति सोमशब्दस्य लक्षणाया तत्सम्बन्धिपरताश्रिता। परैरपि "[3]तत्त्वमसि"इति वाक्ये, वाच्यार्थयोरभेदस्य प्रत्यक्षबाधितत्वात् लक्ष्यार्थाभेदपरताङ्गीकृता। अपि च यदि कृत्स्नस्य प्रपञ्चस्य बाधोऽभ्युपगम्येत तर्हि श्रुतिस्वरूपस्य तज्जन्यपदार्थस्मरणस्य वाक्यार्थज्ञानस्य च

---

[1] ब्र.सू. २-१-१५. [2] तै.सं. ३-२-२. [3] छां. ६-९-४.

प्रपञ्चान्तःपातित्वात्तेषामपि बाधे सति कथं प्रपञ्चबाधसिद्धिः? कथं वा 'मे जननी वन्ध्या, मम जिह्वा नास्ति' इतिवन्न व्याहतिः?

न च प्रपञ्चबाधेऽपि तत्स्वरूपं तिष्ठत्येव, ततस्तत्कार्यमप्युपपद्यत इति वाच्यम्। प्रतियोग्यप्रतिषेधकेऽभावव्यपदेशस्य परिभाषामात्रत्वात्। न च न श्रुत्या प्रपञ्चस्वरूपं बाध्यते, येन व्याघातः स्यात्; किन्तु तस्य सत्यत्वमिति वाच्यम्। स्वरूपबाधाभावेऽबाधितस्वरूपसत्यत्वस्यापि प्रपञ्चेऽभ्युपगमेन सत्यत्वबाधस्यानुपपत्तेः। तस्मान्नानेन प्रपञ्चबाधः समर्थ्यते। किन्त्वभेद एवेति नास्ति भेदाभेदयोर्विरोध इति स्थितम्।

तथान्यत्रापि "[1]इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति, "[2]तत्त्वमसि"इति जीवब्रह्मणोरभेदव्यपदेशात्, ब्रह्मकर्तृका सृष्टिर्जीवकर्तृकैवेति जीवः स्वहितमेव सृजेत्, नापि तन्नरकादि, इत्याशङ्क्य "[3]अधिकं तु भेदव्यपदेशात्"-इत्यनेन जीवो न कर्ता; किन्तु तदधिकं ब्रह्मैव कर्तृ। तच्च जीवस्याहितमपि सृजत्येवेत्युक्त्वा, कथमभेदे हीनाधिकभावः? कथं वेश्वरः सर्वज्ञतया सर्वान् जीवान् स्वात्मत्वेन पश्यन् तेषु शोकमोहादिकं सृजेत्? शोकादेः [4]स्ववृत्तितायामनुभवप्रसङ्गादित्याशङ्क्य, "[5]अश्मादिवच्च तदनुपपत्तिः" इत्यनेन यथा अश्मनां वैदूर्यसूर्यकान्तप्रभृतीनां पाषाणत्वेन सामान्यात्मना अभेदेऽपि व्यक्तिभेदात् हीनमध्यमोत्तमस्वभावेन स्वरूपवैचित्र्यं च, एवं जीवपरमात्मनोरपि व्यक्तिभेदात् हीनाधिकभावः कार्यवैचित्र्यं चोपपद्यत इत्युक्तम्।

---

[1] ब्र. सू. २-१-२१. [2] छां. ६-९-४ [3] ब्र. सू. २-१-२२.

[4] स्ववृत्तितयानुभव–पा. [5] ब्र. सू. २-१-२३.

न च पाषाणत्वसामान्यमभिन्नं, व्यक्तयस्तु भिन्ना एवेति नैकत्र भेदाभेदाविति वाच्यम्। पाषाणत्वसामान्यावच्छिन्नप्रतियोगिताकभेदाभावरूपाभेदस्य वैडूर्यत्वावच्छिन्नप्रतियोगिताकभेदस्य च, व्यक्तिष्वेव सम्प्रतिपन्नत्वात्। न चैवं वज्रवैडूर्ययोरपि सामानाधिकरण्यव्यवहारप्रसङ्गः। सामान्याभेदोल्लेखिनस्तस्यावश्याभ्युपेयत्वाद्विशेषाभेदस्य चाभावात्। अत एवेश्वरेऽपि आत्मत्वेनैव जीवाभेददृष्टिः सूचिता, "[1]आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। अत एव च परैरपि व्यक्तिस्थानीयमहङ्कारांशमपहाय, समान्यस्थानीयस्य चैतन्यस्यैवाभेदोऽभ्युपगतः। एवं च यद्यपि सामानाधिकरण्यव्यवहारस्य [2]भेदाभावोपलक्षितं विशिष्टं वा स्वरूपं विषयः। तथापि सर्वात्मना यत्र भेदग्राहि प्रमाणं नास्ति तत्र स्वरूपैक्यं विषयः, सोऽयं देवदत्त इत्यादौ। यत्र तु भेदग्राहकप्रमाणमस्ति कार्यकारणादौ, तत्र पृथक् सत्तावच्छेदकभेदाभावोपलक्षितस्वरूपद्वयं सामान्यभेदाभावलक्षितस्वरूपद्वयं वा विषयः। प्रकृते च "[3]उत तमादेशमप्राक्ष्य" इत्येकविज्ञानेन सर्वविज्ञानोक्त्या सर्वात्मकत्वं प्रतिज्ञाय, तदुपपादके ग्रन्थे "[4]एतदात्म्यमिदं सर्वं" इति नवकृत्वोऽभ्यस्तोऽपि, सामानाधिकरण्यव्यपदेशो यथा ब्रह्मप्रपञ्चयोर्न स्वरूपैक्यं विषयीकरोति, एवं तत्त्वमसीति व्यपदेशोऽपि। भेदाभेदव्यपदेशस्योभयत्रापि तुल्यत्वात्। [5]"नान्योऽतोऽस्ति द्रष्टा" [6]"यत्र नान्यत् पश्यति" [7]"यस्मात्परं नापरमस्ति किञ्चित्" इति भेदनिषेधे चेतनत्वाचेतनत्वाभ्यां संसारित्वासंसारित्वाभ्यां विरुद्धधर्मत्वस्य

---

[1] ब्र. सू. ४-१-३. [2] भेदाभावोपलक्षितविशिष्टं—पा. [3] छां. ६-१-३.
[4] छां. ६-८-७ [5] बृ. ३.७-२३ [6] छां. ७-२४ [7] श्वे. ३-९.

चोभयत्रापि तुल्यत्वात् । ततश्च भेदनिषेधात् भेदप्रतिपादनाच्च भेदाभेदौ सिद्ध्यतः । तस्मान्नास्ति भेदाभेदयोर्विरोधः ।

यदुक्तमविद्यालक्षणोपाधिकृतो मिथ्याभेद इति तन्न; अविद्यायास्तदुपाधित्वेऽस्य मिथ्यात्वस्य कुत्राप्यसूत्रितत्वात् । नच "[1]आनुमानिकमप्येकेषां" इत्यत्र "[2]सूक्ष्मं तु तदर्हत्वात्" इत्यविद्या सूत्रितेति वाच्यम् । तत्र "[3]महतः परमव्यक्तं" इत्यत्राव्यक्तशब्देन त्रिगुणं प्रधानं गृह्यत इति शङ्कायां "[4]शरीररूपकविन्यस्तगृहीतेः" इत्यनेन "[5]आत्मानं रथिनं विद्धि शरीरं रथमेव च" इति रथत्वेन निरूपितं शरीरमेव गृह्यते, न तु प्रधानमित्युक्त्या शरीरस्य व्यक्तत्वात्, कथमव्यक्तमित्याकाङ्क्षायां "[6]सूक्ष्मं तु तदर्हत्वात्" इत्यनेन सूक्ष्मशरीरमेवाव्यक्तशब्देन गृह्यते, न स्थूलशरीरमित्येवोक्तम् । न त्रिगुणाविद्या अव्यक्तशब्देन गृह्यते इति सम्प्रतिपन्नसूक्ष्मशरीरसम्भवेऽप्रसिद्धाविद्याग्रहणायोगादविद्याया उपादानतया ब्रह्माण्डव्यापित्वस्य च "अहमज्ञ" इति सर्वप्रत्यक्षस्य चाभ्युपगमेन सूक्ष्मत्वाव्यक्तशब्दार्हत्वयोरयोगाच्च । अन्यथा पूर्वसूत्रेऽव्यक्तशब्दे शरीरं गृह्यत इत्युक्त्वोत्तरत्राविद्या गृह्यत इत्युच्यमाने व्याघातापत्तेः, प्रधानवादापत्तेश्च । नच "तदधीनत्वादर्थवत्" इत्यनेन प्रधानं स्वतन्त्रं अविद्यात्वीश्वराधीनेति वैलक्षण्यमुक्तमिति वाच्यम् । सेश्वरसाङ्ख्यानां [7]मते प्रधानस्यापीश्वराधीनतया अभ्युपगमेन तावन्मात्रेण वैलक्षण्यासिद्धेः । यथा इन्द्रियप्रवृत्तेरर्थाधीनत्वात् "[8]इन्द्रियेभ्यः परा ह्यर्था" इत्यर्थानामेवात्मत्वप्रवृत्तेः शरीराधीनत्वाच्छरीरस्यात्मनः परत्वमित्येवमर्थकत्वात्सूत्रस्य ।

---

[1] ब्र.—१-४-१. [2] ब्र.—१-४-२. [3] कठ. ३-११. [4] ब्र.—१-४-१. [5] कठ.—१-४-३. [6] ब्र.—१-४-३. [7] ब्र.—१-४-३. [8] कठ—३-१०.

किं च यद्यत्राविद्या सूत्रिता स्यादुत्तराधिकरणमनारम्भणीयं स्यात्। अजामन्त्रेऽपि तस्या एव ग्रहणसम्भवेन प्रधानग्रहणे विशेषकारणाभावेन पूर्वपक्षानुत्थानात्। प्रत्युत पूर्वत्र "[1]देहात्मशक्तिं स्वगुणैर्निगूढां" इति, उत्तरत्र च "[2]मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" इत्यादिना चेश्वराधीनतयैव प्रकृतेः प्रतिपादनेन मध्येऽजामन्त्रेऽपि तत्परामर्शस्यैव न्याय्यत्वात् "[3]ज्योतिरुपक्रमात्तथाह्यधीयत एके" "[4]कल्पनोपदेशाच्च मध्वादिवदविरोधः" इति सर्वथाप्यनुपपन्नमेव स्यात्। अनादिभूताया अविद्याया अजाशब्देन मुख्यत्वात्प्रकृतत्वाच्च ग्रहणसंभवे तत्परित्यागेन तेजोबन्नलक्षणां प्रकृतिमजाशब्देन शाखान्तरानुसारात् गृहीत्वा तस्या जनिमत्वादजत्वाभावाच्चाजाशब्दानुपपत्तिरिति शङ्कायां; यथा अमधुन एवादित्यस्य "[5]असौ वा आदित्यो देवमधु" इति मधुत्वकल्पनं तथा अनजाया एव तेजोबन्नप्रकृतेरजावदजेत्यजात्वकल्पनमित्यस्यासम्भवदुक्तिकल्पत्वात्। तस्मात्तेजोबन्नलक्षणव्यतिरेकेणानादिभूताऽविद्या सूत्राभिमता नचास्ति। प्रमाणाभावात्।

नचाविद्यां विना निरवयवस्य ब्रह्मणो जगत्परिणामानुपपत्तिरिति वाच्यम्। [6]"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यादिना सूत्रेणैवाशङ्क्य परिहृतत्वात्। तथाहि— परिणामो नाम—पदार्थानां पूर्वरूपपरित्यागेन रूपान्तरापत्तिः। तत्र किं ब्रह्म सर्वात्मना परिणमते? उतावयवेन परिणमते अवयवान्तरेणावतिष्ठते? इति वक्तव्यम्। तत्र आद्ये प्रपञ्चकाले ब्रह्म न स्यात्। स्वरूपपरित्यागेन कृत्स्नस्य

---

1 श्वे—१-३. 2 श्वेत—४-१०. 3 ब्र.—१-४-४०. 4 ब्र.—१-४-११.
5 छां.—२-१-१. 6 ब्र. सू. २-१-२६.

कार्यरूपापन्नत्वात्। अन्त्ये निरवयवत्वश्रुतिव्याकोप इत्याशङ्क्य "[1]श्रुतेस्तु शब्दमूलत्वात्" इत्यनेन परिहृतम्।

भवेदेवमनुमानगम्येऽर्थे एवंविधतर्कस्यावतारः। श्रुत्यैकसमधिगम्ये तु श्रुत्यैवार्थतत्त्वं व्यवस्थापनीयम्। न तर्केण प्रयोजनमस्ति। यथोक्तं "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति। श्रुतिश्च निरवयवं ब्रह्म परिणमते वा न स्वरूपं जहातीत्याह। तथा हि — तेजोबन्नानां सृष्टिमुक्त्वा अनन्तरमेवमाम्नायते "[2]सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति तेजोबन्नलक्षणपरिणामव्यतिरेकेण ईक्षितुः परमेश्वरस्य पृथगवस्थानाभिधानात्। लोकेऽपि न पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणामः। उपादाननाशे निराश्रयस्य परिणामस्यासम्भवात्। किंतु स्थित एवोपादाने तद्भिन्नव्यवहारयोग्यकार्योत्पत्तिरेव परिणामः। शरीरादौ गत्यादिरेवेत्युक्तं "[3]आत्मनि चैवं विचित्राश्च हि" इति। यथा जीवात्मनि जीवस्वरूपानुपमर्देनैव विचित्राः बुद्धीच्छादयः परिणामविशेषा उत्पद्यन्ते, यथा च मृत्तन्त्वादिषु घटपटादयः। इयांस्तु विशेषः— यत्रोत्पादने उत्पत्स्यमानविरोधिकार्यान्तरं वर्तते, तत्रोपमर्देनैव कार्यान्तरोत्पत्तिः। यथा पिण्डोपमर्देन घटोत्पत्तिः। यत्र तु विरोधि कार्यान्तरं नास्ति, तत्राभावोपमर्देनैव भावोत्पत्तिः यथा तन्तुषु पटाभावोपमर्देनैव पटोत्पत्तिः। अङ्कुरादावपि न बीजादिकमुपादानम्। कार्यानन्वयित्वात्। कार्यानन्वयिन एवोपादानत्वाच्च। किंतूभयानुस्यूतावयवा एव। तथा च श्रुतिः "[4]एतस्य वै सोम्यैषोणिम्न एव महान् न्यग्रोधस्तिष्ठति" इति। तेषां च स्वरूपानुपमर्देनैवाङ्कुरादिजनकत्वम्।

---

[1] ब्र.२-१-२७ [2] छां. ६-३-२. [3] ब्र. सू. २-१-२८. [4] छां. ६-१२-२.

उक्तं च सूत्रकृता तर्कपादे "[1]नासतो दृष्टत्वात्" इति। विवृतं च तैरपि तथैव। एवं ब्रह्मणोऽपि निरवयवस्य स्वरूपानुपमर्देनैव जगत्परिणाम उपपद्यते। विपक्षे च बाधकमुक्तं "[2]स्वपक्षदोषाच्च" इति। प्रधानस्य सत्त्वादीनां कार्त्स्न्येन परिणामे स्वरूपनाशापत्तिः। एकदेशपरिणामाभ्युपगमे च निरवयवत्वाभ्युपगमव्याकोपः। सोऽयमविद्यायामपि समानो दोषः। अविद्याया अपि प्रधानतुल्यत्वात्।

नचाविद्याया विचित्रशक्तियोगात् परिणामः सम्भवति, न ब्रह्मण इति वाच्यम्। [3]"परास्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुत्या "[4]सर्वोपेता च तद्दर्शनात्" इति सूत्रेण च ब्रह्मण एव विचित्रशक्तिप्रतिपादनात्। अविद्यायां तादृशशक्तौ च प्रमाणाभावात्।

एवं सूत्रार्थे ब्रह्मपरिणामेऽवस्थिते अविद्या परिणमते ब्रह्म विवर्तत इत्यभिधानमयुक्तम्। "[5]आत्मकृतेः परिणामात्" इति सूत्रविरुद्धं च। यद्यविद्यैव परिणमते, न ब्रह्म, तदा "[6]न विलक्षणत्वादस्य तथात्वं च शब्दात्" इत्यधिकरणमनुपपन्नं स्यात्। अविद्याजगतोर्वैलक्षण्याभावात्। ब्रह्मणश्च परिणामाभ्युपगमात्। किं च यद्यविद्या नाम काचिदनादिसिद्धा आश्रियते, (तदा) तस्या ब्रह्मविकारत्वाभावेन ब्रह्माभेदाभावात् ब्रह्मणि विज्ञातेऽपि सा न विज्ञातैवेति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत। तस्मान्नास्त्येवाविद्या। नापि जीवपरभेदस्यौपाधिकत्वं क्वचित्सूत्रितम्।

न च "[7]अत एवचोपमा सूर्यकादिवत्" इत्यत्रौपाधिकत्वं क्वचित्सूत्रितमिति वाच्यम्। तत्र हि जीवपरभेदस्यौपाधि-

---

[1] ब्र.सू. २-२-२६. [2] ब्र.सू. २-१-१०. [3] विष्णुपुराणम्. [4] ब्र.सू. २-१-३०. [5] ब्र. सू. १-४-२६. [6] ब्र. सू. २-१-४. [7] ब्र. सू. ३-२-११.

कत्वं न सूच्यते। किं तर्हि; ब्रह्मण एव[1] "अणोरणीयान् महतो महीयान्" इत्यादिना अणुत्वमहत्वादिप्रतीतेस्तदुभयमस्तीति शङ्कायां "[2]न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति एकत्वाद्ब्रह्मणस्तस्मिन् विरुद्धरूपद्वयं न सम्भवतीत्युक्त्वा क्षेत्राणां भिन्नपरिणामत्वादन्तरनुप्रविष्टस्यापि परमात्मनो भिन्नपरिमाणत्वप्रतिभासे दृष्टान्त उपादीयते "[3]सूर्यकादिवत्" इति। अत्रैव जलसूर्ययोर्मूर्तद्रव्यत्वाद्रूपवत्त्वाच्च तत्र प्रतिबिम्बः संभवति, ब्रह्मणस्त्वमूर्तत्वादरूपत्वाच्च प्रतिबिम्बानुपपत्तिरिति "[4]अम्बुवदग्रहणात्तु न तथात्वं" इत्यनेनाशङ्क्य, न ह्यत्र बिम्बप्रतिबिम्बभावेन जीवेश्वरभेदोऽभिप्रेतः; किंतु ब्रह्मण एव क्षेत्रपरिणामानुरूपपरिणामप्रतिभास इत्ययमेवार्थो दृष्टान्तोपादानेन विवक्षित इति स्पष्टीकृतं "[5]वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" इति। तस्मान्नास्ति भेदस्यौपाधिकत्वम्। अत एवैकस्मिन्नेवान्तरनुप्रविष्टयोर्जीवेश्वरयोर्भेदः प्रतिपाद्यते "[6]गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इत्यादौ। तस्माज्जीवपरभेदस्य स्वाभाविकत्वान्नास्ति जीवपरयोः स्वरूपैक्यम्। नापि स शास्त्रविषयः।

किंच जीवपरयोर्यदि स्वरूपैक्यं शास्त्रविषयः, तर्हि तदेव प्रत्यधिकरणं प्रतिपाद्येत; न च प्रतिपाद्यते। किंतु प्रत्यधिकरणं तेन तेन विषयवाक्येन जीवः प्रतिपाद्यते ईश्वरो वेति संशये जीव इति पूर्वपक्षं कृत्वा तत्तद्वाक्यप्रतिपाद्यधर्माणां जीवेऽसंभवात् तद्व्यतिरिक्त ईश्वरः प्रतिपाद्यत इति प्रतिष्ठाप्यते। "[7]नेतरोऽनुपपत्तेः" "[8]भेदव्यपदेशाच्चान्यः"

---

[1] तै. ना. [2] ब्र. सू. ३-२-१८. [3] ब्र. सू. ३-२-१८. [4] ब्र. सू. ३-२-१९. [5] ब्र. सू. ३-२-२०. [6] ब्र. सू. १-२-११. [7] ब्र. १-१-१६ [8] ब्र. १-१-१७.

" जीवमुख्यप्राणलिङ्गान्नेति चेत्" "[2]सुषुप्त्युत्क्रान्त्योर्भेदेन" "[3]अनुपपत्तेस्तु न शरीरः" "[4]कर्मकर्तृव्यपदेशाच्च" "[5]स्मृतेश्च" "[6]शब्दविशेषात्" "[7]अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" "[8]संभोगप्राप्तिरिति चेन्न वैशेष्यात्" "[9]अनवस्थितेरसंभवाच्च नेतरः" "[10]शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" [11]विशेषणभेदव्यपदेशाभ्यां च नेतरौ" "[12]प्राणभृच्च" [13]भेदव्यपदेशाच्च" "[14]प्रकरणाच्च" "[15]स्थित्यदनाभ्यां च" "[16]ईक्षतिकर्मव्यपदेशात्सः" "[17]इतरपरामर्शात्स इति चेन्नासंभवात्" "[18]उत्तराच्चेदाविर्भूतस्वरूपस्तु" "[19]अन्यार्थश्च परामर्शः" "[20]नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" "[21]अधिकं तु भेदनिर्देशात्" "[22]अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" इत्यादिना च जीवत्वस्यौपाधिकत्वात्तेन स्वरूपेण प्रतिपाद्यता स्यात्। स्वरूपमात्रस्यैव स्वाभाविकत्वात्। नच तेन स्वरूपेण प्रतिपाद्यता परं निषिध्यते। न स्वरूपेणेति वाच्यम्। एवंसतीश्वरस्यौपाधिकत्वात्तेनापि रूपेण न प्रतिपाद्यता स्यात्। स्वरूपमात्रस्यैव स्वाभाविकत्वात् प्रतिपाद्यता स्यात्। न च तथा प्रतिपाद्यते। तत्प्रतिपादने हेत्वसम्भवात्। किं तु जीवव्यावृत्तेन ईश्वरत्वेनैव रूपेण प्रतिपाद्यते। "[23]अन्तस्तद्धर्मोपदेशात्" "[24]अन्तर्या-

---

[1] ब्र. १-१-३१. [2] ब्र १-३-४२. [3] ब्र. १-२-३. [4] ब्र. १-२-४. [5] ब्र. १-२-५. [6] ब्र. १-२-६. [7] ब्र. १-२-७. [8] ब्र. १-२-८. [9] ब्र. १-२-१७. [10] ब्र. सू. १-२-२०. [11] ब्र. सू. १-२-२२ [12] ब्र. सू. १-३-४. [13] ब्र. सू. १-१-१७. [14] ब्र. सू. १-२-१०. [15] ब्र. सू. १-३-७. [16] ब्र. सू. १-३-१६. [17] ब्र. सू. १-३-१८. [18] ब्र. सू. १-३-१९. [19] ब्र. सू. १-३-२०. [20] ब्र. सू. २-३-२१. [21] ब्र. सू. २-१-२२. [22] ब्र. सू. ३-४-८. [23] ब्र. सू. १-१-२०. [24] ब्र. सू. १-२-१८.

म्यधिदैवादिषु तद्धर्मव्यपदेशात् ” इत्यादि । तस्मान्न जीव-ब्रह्मणोः स्वरूपैक्यं नाप्यस्यशास्त्रविषयता नापीदं प्रयोजनम् ”। “ [1] जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च “ [2]भोगमात्रसाम्यलिङ्गाच्च ” इत्यादिना मुक्तानामीश्वरस्य च भेदस्यैव प्रतिपादनात्। तस्माद्ध्यासस्य विषयप्रयोजना-नुपयोगित्वादसूत्रितत्वं सिद्धम् ।

[ब्रह्मणोऽनुपादानत्वावेद्यत्वयोः खण्डनम् ]

तथा “ [3]जन्माद्यस्य यतः ” इति ब्रह्मणो जगत्कारणत्वं लक्षणमुक्तम् । किंविधं तत्कारणत्वमिति विवक्षायां “ [4]प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ” इत्यादिना निमित्तत्वमुपादानत्वं चेत्युक्तम् । एक ब्रह्मण एवोभयविधकारणत्वे सूत्रिते कैश्चिदविद्यो-पादानमित्युक्तम् । अन्यैः सूक्ष्म[5]भूतपञ्चकमुपादानमिति । अपरैः प्रकृतिरुपादानमिति । तदेतदुपादानान्तराभिधानं सूत्रासम्बद्धम् । तथा “ [6]शास्त्रयोनित्वात् ” इति ब्रह्मणः शास्त्रवेद्यत्वे सूत्रार्थे कैश्चिदवेद्यत्वं सूत्रविरुद्धमेवोक्तम् ।

नच शास्त्रवेद्यत्वं शास्त्रजन्यवृत्तिविषयत्वम् । अवेद्यत्वं तु चैतन्याविषयत्वमिति, ज्ञानभेदान्न विरोध इति वाच्यम् । ज्ञानभेदस्य क्वाप्यसूत्रितत्वेन तान्त्रिकत्वात् । नच “ [7]अन्य-देव तद्विदितात् ” इत्यवेद्यत्वमुक्तमिति वाच्यम् । तस्य विदिताविदिततत्तन्मात्रत्वनिषधेने सर्वात्मत्वपरत्वात् । “ [8]यदि-मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् ” इत्यभिधानात् । तथा “ [9]तत्तु समन्वयात् ” इति ज्ञान-

---

[1] ब्र. सू ४-४-१७. [2] ब्र. ४-४-२१ [3] ब्र. १-१-२. [4] ब्र. १-४-२४. [5] जीवचित्रपञ्चक–पा. [6] ब्र. १-१-२. [7] केन. १-४. [8] केन. २-१. [9] ब्र. सू. १-१-४.

विधिनिराकरणपूर्वकं अखण्डार्थत्वं वेदान्तानां कैश्चिदुक्तम्। तदपि सूत्रविरुद्धम्। "[1]सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" [2]स्तुतिमात्रमुपादानात् इति चेन्नापूर्वत्वात्" "[3]भावशब्दाच्च" इति च ज्ञानविधेः सूत्रितत्वात्।

नच ज्ञानस्य मानाधीनत्वान्न विधेयत्वम्, विधेयज्ञानसाध्यत्वे मोक्षस्यानित्यत्वं च स्यादिति वाच्यम्। समन्वयसूत्रे निरसिष्यमाणत्वात्। तथा "[4]पारिप्लवार्था इति चेन्न तदविशेषत्वात्" "[5]तथाचैकवाक्योपबन्धात्" इति। यथा "स प्रजापतिरात्मनो वपामुदाक्खिदत्" इत्येवमादीनां कर्मकाण्डगतानामाख्यानानां "तूबरमालभेत" इत्येवमादिविधिना एकवाक्यत्वं स्तुत्यादिद्वारैव। अथ याज्ञवल्क्यस्य द्वे भार्ये बभूवतुरित्येवमादीनां वेदगतोपाख्यानानां "आत्मावा अरे द्रष्टव्य" इत्यादिना विद्याविधिनैकवाक्यत्वमित्युक्तत्वात्। तैरपि तथैव तत्र व्याख्यातत्वात्। तथा "[6]ईक्षतेर्नाशब्दम्" "[7]गौणश्चेन्नात्मशब्दात्" "[8]अदृश्यत्वादिगुणको धर्मोक्तेः" "[9]द्युभ्वाद्यायतनं स्वशब्दात्" "[10]शब्दादेवप्रमितः" इत्यादिभिः सूत्रैरसाधारणैर्ब्रह्मधर्मैर्ब्रह्मवाचकशब्दैश्च ब्रह्मनिर्णये क्रियमाणेऽपि ब्रह्म निर्धर्मकं कस्यापि शब्दस्य वाच्यं न भवतीत्यभिधानं सूत्रविरुद्धम्।

नच ब्रह्मणि वास्तवधर्माभावेऽपि आरोपित धर्माणां सम्भवान्न विरोध इति वाच्यम्। जगत्कारणत्वादिधर्माणामारोपितत्वस्य क्वाप्यसूत्रितत्वात्। प्रमाणाभावात्। बाधकानुपलब्धेः। आरोपितस्य सर्वत्रापि सम्भवेन निर्णयाहेतुत्वात्।

---

[1] ब्र. सू. ३-३-१. [2] ब्र. सू, ३-४-२१ [3] ब्र. सू. ३-४-२२. [4] ब्र. सू. ३-४ २३. [5] ब्र. सू. ३-४-२४. [6] ब्र. सू. १-१-५. [7] ब्र. सू. १-१-६. [8] ब्र. सू. १-२-२१. [9] ब्र. सू. १-३-१. [10] ब्र. सू १-३ २४.

जगत्कारणत्वादीनामन्यत्राप्रसिद्धतया आरोपासम्भवात् । वेदान्तानामारोपितधर्मविषयत्वेऽप्रामाण्यापातात् । नच देहात्मप्रत्ययवद्यावदात्मतत्त्वज्ञानं प्रामाण्यमुपपद्यत इति वाच्यम् । न हि भेदा(देहा)त्मप्रत्ययस्य लोकायतिकं मुक्त्वा केनचित् प्रामाण्यमभ्युगम्यते । न हि प्रमाणं कदाचिदप्रमाणं भवति । अबाधितविषयं हि प्रमाणम् । बाधितविषयं चाप्रमाणम् । न हि बाधाबाधावेकत्र सम्भवतः । बाधो हि नाम त्रैकालिकनिषेधः । तत्रैव तद्भावः सम्भवति । तस्माद्यत्प्रमाणं तत्सदैवप्रमाणम् । यत्त्वप्रमाणं तत् सदैवाप्रमाणम् । एवं च देहात्मप्रत्ययः सर्वदैवाप्रमाणम् । तद्वद्वेदान्ता अप्यप्रमाणं चेत्तदर्थनिर्णायकविचारशास्त्रानर्थक्यम्, नास्तिकत्वापातश्च ॥

तथा "आनन्दमयोऽभ्यासात्" इत्यत्रानन्दमयस्य ब्रह्मत्वे सूत्रिते तस्याब्रह्मत्वाभिधानं सूत्रविरुद्धम् । न च "यतो वाचो निवर्तन्ते" इति वाङ्मनसातीतत्वेन ब्रह्मणो निर्विशेषत्वप्रतिपादनात् प्रियशिरस्त्वादिविशिष्टानन्दमयस्य न ब्रह्मत्वमिति वाच्यम् । न हि "यतो वाचो निवर्तन्ते" इति वाक्येन ब्रह्मणो वाङ्मनसातीतत्वं प्रतिपाद्यते । "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इत्यस्यासङ्गतत्वापत्तेः । न हि वाङ्मनसातिरिक्तमानगम्यत्वं ब्रह्मणः, तत्र मानान्तराप्रवृत्तेः । "नावेदविन्मनुते तं बृहन्तं" "मनसैवानुद्रष्टव्यं" इत्यादिशास्त्रविरोधाच्च । किंतु ब्रह्मानन्दस्येयत्तापरिच्छेदोऽवाङ्मनसगोचर इति तस्यापरिमेयत्वमुच्यते । अत एव तादृशमेव ब्रह्मानन्दं मनसा यो विजानाति सः "न बिभेति कुतश्चन" इति मनसा वेद्यत्वमुच्यते । न च मनसेत्यध्याहारे मानाभावः । "तदप्येष श्लोको भवति" इति प्रतिज्ञावाक्यस्यैव

मानत्वात् । तदपि-तत्रापि मनसि, एष श्लोको ति इत्युक्त्वा तदपि "आनन्दं ब्रह्मणो विद्वान्" इति मनसा विद्वानिति लभ्यते । अन्यथा प्रशंसानवगमात् । प्रत्युत "अप्राप्य मनसा सह" इति गम्यत्वेन निन्दागमप्रसङ्गात् ॥

किंच तैत्तिरीयके आरणे सप्तमप्रश्ने प्रवर्ग्यमन्त्रा आम्नाताः । तेषामादावन्ते च शान्तिः पठिता—"नमो वाचे" "शं नो वातः पवतां" इत्यनुवाकाभ्यां । अष्टमप्रश्ने तेषामेव मन्त्राणां कर्मविशेषे विनियोगश्च पठितः । न तत्र पुनः शान्तिः पठ्यते । तथा पञ्चमप्रश्ने ब्रह्मविद्या सपरिकरा आम्नाता दशभिरनुवाकैः । तस्याः पुरस्तादुपरिष्टाच्च शान्तिद्वयं पठितं "शंनो मित्रः शं वरुणः" इत्यनुवाकाभ्याम् । "सहनाववतु" इति तस्यैव शेषः । न च पृथक् शान्तिः । 'नौ' इत्यादीनां द्विवचनान्तानां शब्दानां "तन्मां—तद्वक्तारं" इति पूर्वमन्त्राम्नातवक्तृश्रोतृरूपद्वयसाकाङ्क्षत्वेन तदेकवाक्यत्वस्य वक्तव्यत्वात् । तथैव सर्वलोकानुष्ठानाच्च । "ब्रह्मवित्" "भृगुर्वै" इत्यनुवाकद्वयं अपेक्षितार्थसमर्पणेन तस्यैव शेषभूतम् । अत एव तत्र शान्तिः पुनः पठिता । ब्रह्मविद्या च "ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति" इति पठिता । सा चोपासनारूपेति सर्वं सम्प्रतिपन्नमिति । "प्राचीनयोग्योपास्व" इति दर्शनात्, उपासना यदि न मोक्षफला, किंतु निर्विशेषब्रह्मविद्यैव मोक्षफला, सा च "ब्रह्मवित् इत्यादावेव विवक्षिता, तदा तत्रैव पूर्वोत्तरशान्तिद्वयं पठ्येत तस्मादुपासनैव मोक्षफला । तत्र "स वेद ब्रह्म" इति ब्रह्मवेदनमुक्तम् । तत्र कथं विद्यात् ? कुत्र विद्यात्? कीदृशं वा फलम् इत्याकाङ्क्षायां ब्रह्मविदित्यनुवाकः ॥

तत्र च "सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति" इति सङ्ग्रहेणाकाङ्क्षितार्थसमर्पणम्। "सत्यं ज्ञानमनन्तं" इति प्रकारः। इतरद्व्यक्तम् ॥

तत्र सत्यं नाम—यद्वस्तु येन रूपेण निर्धारितं कालान्तरेऽपि तद्रूपं न जहाति तदुच्यते। यत्तु कालान्तरे तद्रूपं जहाति तदनृतमुच्यते। कारणं तु तद्रूपम्। तथा हि—एकं हि कार्यकारणात्मकं वस्तु मृद्घट इति कारणरूपेण कार्यरूपेण चावधारितम्। कालान्तरे मुद्गरप्रहारानन्तरं कार्यं घटरूपं जहाति। ततः कार्यमनृतमुच्यते। कारणं तु तद्रूपं न जहाति। अतः कारणं सत्यमुच्यते ॥

तच्च सत्यं द्विविधम्। आपेक्षिकमनापेक्षिकं चेति। मृदादिस्वरूपमापेक्षिकं सत्यम्। प्रलयकाले तस्याप्यभावात्। ब्रह्मस्वरूपमनापेक्षिकम्। तस्य सदा सत्वात्। ततश्च सत्यशब्देन कारणत्वं नित्यत्वं चोच्यते। तेन रूपेण ज्ञातव्यमित्यर्थः। ब्रह्मणश्च कारणकारणत्वमुपपादितम्—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "य इदं सर्वमसृजत" इत्यादिना। नित्यत्वं च "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः" इति। ब्रह्म असदिति यो वेद स असत्पुरुषार्थभाग्भवति ब्रह्म अस्तीतीत्यत्र इति शब्दः प्रकारार्थः। ब्रह्म अस्तीति-सदित्येवं यो वेद स पुरुषार्थभाक्। तथा च श्रुत्यन्तरं "अस्तीत्येवोपलब्धव्यः" इति। अत्र ज्ञानशब्देन ज्ञाता आत्मोच्यते। न ह्ययं ज्ञानशब्दः ज्ञाधातोर्निष्पन्नः भावसाधनल्युट्प्रत्ययान्तो ज्ञप्तिवचनः, तथासति ह्याद्युदात्तत्वेन आद्युदात्तः स्यात्। अन्तो-

दात्तश्चाभिधीयते । अतो ज्ञानमस्यास्तीति मत्वर्थीयाशाद्य-च्प्रत्ययान्तः । "चितः" इत्यन्तोदात्तः । ततश्च ज्ञाता आत्मेति तच्चात्मत्वमुपपादितम् । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । सतपस्तप्त्वा । इदं सर्वमसृजत" इति ज्ञानेच्छा-कृतिमत्त्वेन । तथाच श्रुत्यन्तरं—"आत्मेत्येवोपासीत" इति । अनन्तामिति । यद्बुद्धिर्यतो निवर्तते स तस्यान्तः । यथा गोबुद्धिरश्वान्निवर्तते । तथा च परिच्छिन्नं वस्त्वन्तरवदि-त्युच्यते । यद्बुद्धिर्न कुतश्चिद्व्यावर्तते तदनन्तं सर्वात्मकम् । तच्चोपपादितं "बहुस्यां प्रजायेयेति" "तदात्मानं स्वयम-कुरुत" "सच्च त्यच्चाभवत्" इत्यादिना । ततश्च सत्यत्वेनात्म-त्वेन सर्वात्मत्वेन ब्रह्मविदित्यादि । तथा च श्रुत्यन्तरम्—"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति । तथा चास्यानुवाकस्य प्रकाराद्याकाङ्क्षानिवर्तनेन पूर्वशेषत्वम् । उत्तरानुवाकस्य च किं तद्ब्रह्मेत्याकाङ्क्षानिवर्तनात् पूर्वशेषत्वं स्फुटमेव । तथाचानुवाकद्वयस्य पूर्वशेषत्वे निर्विशेषप्रतिपाद-कत्वाभावादानन्दमयाधिकरणे निर्विशेषप्रतिपादनं सूत्रविरुद्धं श्रुतिविरुद्धं च । तथा "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र कार्यस्य कारणभिन्नत्वं सूत्रितम् ॥

केचित्तु, कारणव्यतिरेकेण कार्यस्य सत्त्वं मिथ्या-त्वमाहुः । तदपि सूत्रविरुद्धम् । नह्यनन्यत्वशब्दोऽसत्त्ववाची । किन्त्वभेदवाची । किञ्च यदि कारणव्यति-रेकेण कार्यमेव न भवेत् कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थ्या इति । अभेदे हि कार्यकारणयोः कारणे विज्ञाते कार्यं विज्ञातमिति शक्यते वक्तुम्, विज्ञातकारणाभिन्नत्वात्

कार्यस्य । कथं कारणविज्ञाने सर्वकार्यविज्ञानम् । सर्वस्यैवाभावात् । नच "मृत्तिकेत्येव सत्यम्" इति कारणस्यैव सत्यत्वावधारणेन वाचारम्भणादिशब्दैः कार्यस्यानृतत्वाभिधानेन च कारणव्यतिरेकेण कार्यस्यासत्वं श्रुत्या प्रतिपाद्यत इति वाच्यम् । नहीयं श्रुतिः मृत्तिकायाः सत्यत्वं विकारस्यानृतत्वं चापूर्वं प्रतिपादयति । किन्तु लोकदृष्टमेव दृष्टान्तत्वेनानुवदति । प्रसिद्धस्यैव दृष्टान्तत्वात् । "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" इत्यभियुक्तोक्तेः । तथा च यादृशं सत्यत्वं मृत्तिकाया लोकसिद्धं, यादृशं चानृतत्वं विकारस्य, तादृशमेवानुवदतीति वक्तव्यम् । न बाधितत्वरूपमनृतत्वं विकारस्य लोकसिद्धम् । न हि घटकाले मृदि घटो नास्तीति बाधः प्रतीयते । तदाप्यर्थक्रिया[1]विसंवादो दृश्यते । नापि मृत्तिकायाः सत्यत्वमबाधितत्वरूपमुच्यते । तैस्तस्या अपि सत्यत्वानङ्गीकारात् । मृद्घटयोरुभयोरपि व्यावहारिकसत्यत्वाभ्युपगमेन तैः सत्यत्वविशेषानङ्गीकाराच्च । किन्तु मृद्व्यतिरेकेण स्वातन्त्र्येणान्यत्र घटादेः सत्त्वाभाव एवानृतत्त्वम् । घटव्यतिरेकेणापि पूर्वोत्तरकालयोः स्वातन्त्र्येण सत्त्वमेव मृदः सत्यत्वम् । तथा च मृद्व्यतिरेकेण मृदात्मतां विना यत्र सत्त्वाभावलक्षणमनृतत्वं तदात्मतया तत्र सत्त्वरूपमभेदं गमयतीत्यभिप्रायेण "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्युक्तम् ॥

नच मृदात्मतां विना यत्र सत्त्वाभावः, तत्र अत्यन्तासत्त्वेनाप्युपपद्यत इति कथमभेदं साधयेदिति वाच्यम् । अत्यन्तासत्त्वे कार्यत्वानुपपत्त्या मृद्घट इति सामानाधिकरण्य-

[1] विकारसंवादो—पा.

प्रतीतिबलेन चाभेदपर्यवसानात्। तथा च तैरेव वाक्यान्वयाधिकरण उक्तं—आत्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन। तदेवोपपादयति—"ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्यादिका श्रुतिः। यो हि ब्रह्मक्षत्रादिकं जगत् आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तमिमं मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत् पराकरोति इति भेददृष्टिमपोह्य "इदं सर्वं यदयमात्मा" इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकतामवतारयति। किञ्च वाचारम्भणवाक्ये नैव विकारस्यानृतत्वं उपादानस्य सत्यत्वं चोच्यते, प्रकृतानुपयोगात्। किन्त्वभेद एवोच्यते। तस्य हि वाक्यस्यायमर्थः। आरभ्यत इत्यारम्भणं, तच्च नामधेयविशेषणम्। नपुंसकलिङ्गत्वात्। तथा घट इत्यादिनामधेयं वाचा केवलमारभ्यते। नच मृद्व्यतिरिक्तो मृदारब्धघटादिरर्थः। स च विकारो घटादिर्मृत्तिकेत्येव सत्यमिति। तथाचोपादानाद्विकारस्यात्यन्त भेदं प्रतिषिध्याभेद एव प्रतिपाद्यते। ततो मृदः सत्यत्वमुच्यते। मृत्तिका सत्येति श्रुतेः॥

नच भेदसत्यत्वावधारणाद्भेदस्य सत्यत्वापत्तिः। नहीदं वाक्यं भेदात्मत्वपरम्। तथा सति" कार्यकारणभावानुपपत्तेः। किन्तु "येनाश्रुतं श्रुतं भवति" इत्यत्राश्रुतमिति श्रुतभिन्नत्वोक्त्या अत्यन्तभिन्नत्वेनाभेदासत्त्वशङ्कानिराकरणेनाभेदसत्त्वपरमेव। यद्वा एवकारः सत्यमित्यनेन सम्बध्यते। तथाचासत्त्वव्यावृत्तिरेव प्रतीयते। न तु भेदसत्त्वम्। किञ्च यदि मृद्व्यतिरेकेण घटस्य सत्त्वं तदा घट इति प्रतीतेः किमालम्बनमिति वक्तव्यम्। न तावन्मृदेव, कुलालव्यापारात्प्रागपि (तस्याः) सत्त्वेन (सत्त्वात्) तदापि घट इति प्रतीत्या-

पत्तेः । अथ तद्व्यतिरिक्ता किं तन्मृदिति । तेन वा न-चेत् कथं घट इति प्रत्यक्षापत्तिः । प्रत्यक्षे विद्यमान-विषयस्य कारणत्वात् । विद्यते चेत् कथं तस्यासत्त्वम् ? विद्यमानस्यैव सत्यशब्दार्थत्वात् । अस्ति भवति विद्यत इत्यादीनां पर्यायत्वात् ॥

अथान्यदेव सत्त्वं पारिभाषिकं, किं तत् ? अबाध्यत्व-मिति चेत् घटेऽपि तदस्त्येव । न हि घटे[1] बाधो दृश्यत इत्युक्तम् । अथ सर्वदा सर्वत्राबाध्यत्वं सत्त्वम् । नच घटस्य तदास्ति । देशान्तरे तस्य बाध इति चेत् तर्हि नित्यत्वे सति विभुत्वं तद्बाधश्चासत्त्वं स्यात् ईदृशं चासत्त्वं घटादीनामिष्टमेव । न हि कार्यस्य नित्यत्वविभुत्वे केनचिदभ्युपगम्येते । अथ मृद्व्यतिरेकेणान्यत्र घटस्य स्वातन्त्र्येण सत्त्वाभाव एवासत्त्वं तदेव च मिथ्यात्वमित्येतदपि चानिष्टम् । नह्युपादानव्यति-रेकेणोपादेयस्य स्वातन्त्र्येणान्यत्र सत्त्वं केनचिदभ्युपगम्यते । एतावता तन्मिथ्यात्वमुच्यते चेत्किमुच्यताम् । नचैतदपि सूत्रितम् । सूत्रे मिथ्यात्वशब्दाभावात् ॥

ननु वाचारम्भणवाक्यात् मिथ्यात्वासिद्धावपि वाक्यान्तरैस्तत्सिध्यति । "सदेव सोम्येदमग्र आसीदेक-मेवाद्वितीयम्" "नेह नानास्ति किञ्चन" "अथात आदेशो नेति नेति" इत्यादिवाक्यैर्ब्रह्मणि प्रपञ्चाभावप्रतीतेरिति चेत्—न तावत् "एकमेवाद्वितीयं" इत्यतो मिथ्यात्वसिद्धिः । तस्य प्रपञ्चोत्पत्तेः प्राक् तदभावबोधकत्वेऽपि प्रपञ्चकाले तदभावाबोध-कत्वात्, तत्कालीनतदभावस्यैव मिथ्यात्वप्रयोजकत्वात्, स्वस-मानाधिकरणस्वसमानकालीनात्यन्ताभावप्रतियोगित्वं मिथ्या-

---

[1] घटबाधो—पा.

त्वमिति निर्वचनात्। नापि "नेह नानास्ति किञ्चन" इति वाक्यात् तत्सिद्धिः। तस्य ब्रह्मणि प्रपञ्चाभावबोधकत्वात्। ब्रह्मभेदाभावस्यैव बोधनात्। तथाहि—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यत्र ब्रह्मणि स्वतो वा स्थानतो वा विरुद्धरूपद्वयं नास्ति सर्वत्र तदेवैकं ब्रह्म, न ह्येकस्मिन् विरुद्धरूपद्वयं सम्भवतीत्युक्त्वा, अस्तु तर्हि प्रत्युपाधि ब्रह्म भिन्नम्, नैकमेव, अतो रूपद्वयं सम्भवतीत्याशङ्क्य—पत्युपाध्यभेदस्यैव श्रुत्या प्रतिपादनात् न ब्रह्मभेद इत्युक्तम्। "न भेदादिति चेन्न; प्रत्येकमतद्वचनात्" इति। तत्रैव श्रुत्यन्तरमुपाद्धलकतयोक्तम्, "अपि चैवमेके" इति। तस्यार्थस्तैरेवमुक्तः—अपि चैके शाखिन एवं भेददर्शननिन्दापूर्वं अभेदमेव ब्रह्मण आमनन्ति॥

"यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥"
"मनसैवेदमाप्तव्यं नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥"

इति। तथाचास्य ब्रह्मणि प्रपञ्चनिषेधकत्वाभावात् नानेन मिथ्यात्वसिद्धिः। नापि नेनेति वाक्येन मिथ्यात्वसिद्धिः। तस्यापि ब्रह्मणोमूर्तामूर्तभिन्नत्वप्रतिपादकत्वेन तदत्यन्ताभावप्रतिपादकत्वाभावात्। तथाहि—"प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति प्रकृत्य "द्वे वाव ब्रह्मणो रूपे" इति ब्रह्मणो यदेतावत्त्वं मूर्तामूर्ततावन्मात्रत्वम्, वावेत्यस्यैवकारार्थत्वात्, तं निषेधति "नेति नेति" इति श्रुतिः। मूर्तामूर्ततावन्मात्रमेव न भवति, किन्तु ततोऽपि मूर्तामूर्तादपि भूयः बहुतरं महत्तरं ब्रवीति नह्येतस्मा-

दिति वाक्यम् । तस्यायमर्थः—नेह नानेत्यादिष्टादेतस्मात् ब्रह्मणः अन्यत् परं नास्ति । इदमेव सर्वस्मात्परमिति । तथाचानेन वाक्येन मूर्तामूर्तप्रपञ्चस्य ब्रह्मणश्चात्यन्ताभेद-निराकरणमेव प्रतिपाद्यत इति गम्यते । एतच्च तत्रैवोपपाद-यिष्यते । अत एवात्यन्ताभेदनिषेधेऽत्यन्तभेद इति शङ्कायां "प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्" इति सूत्रेणाऽभेदमप्युक्त्वा, तर्हि भेदाभेदयोर्विरोध इति शङ्कायां "उभयव्यपदेशात्त्वहिकुण्डलवत्" इत्यादिना अविरोधः समर्थितः। एवमस्थूलादिवाक्यैरपि स्थूलादिभेद एव प्रतीयत इत्युक्तं, "अन्यभावव्यावृत्तेश्च" इति सूत्रेण । ततश्च नाने-नापि वाक्येन मिथ्यात्वसिद्धि । ततश्चाप्रामाणिकं मिथ्यात्वं सूत्रतश्चेति सिद्धम् ॥

किञ्च यदि कारणव्यतिरेकेण कार्याभावः (न) सत्त्व-शब्दार्थः इति ब्रह्मव्यतिरेकेण प्रपञ्चाभावोऽभिप्रेतः तर्हि पूर्वा-परविरोध आपद्येत। उत्तरत्र हि "नाभाव उपलब्धेः" इत्य-धिकरणे ब्रह्मव्यतिरेकेण प्रपञ्चसद्भावः प्रतिपाद्यते। तथा हि—तत्र हि विज्ञानवादिना—विज्ञानव्यतिरिक्तो बाह्योऽर्थो नास्ति। सत्यपि बाह्येर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारा-सम्भवात्। बुध्यारूढेन रूपेणान्तस्थ एव प्रमाणादिव्यहारः सर्व उपपाद्यते। न हि बाह्यार्थः परमाणवो वा स्युः; तत्समूहा वा स्तम्भादयः। न तावत्परमाणवः; तेषु स्थूलादिवत्प्रतिभासा-नुपपत्तेः। परमाण्ववभासज्ञानापत्तेश्च। नापि तत्समूहाः। तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां दुर्निरूपत्वात्। एवं जात्यादी-नामप्यभाव एव। अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः स्तम्भज्ञानं कुडयज्ञान-

मित्यादिना सर्वज्ञानगतं विशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याभ्युपगन्तव्यम्। अङ्गीकृते च तस्मिन् विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बहिरर्थकल्पना। स्वप्नादिवच्चेदं द्रष्टव्यम्। यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येन ग्राह्यग्राहका भवन्ति, एवञ्च जागरितगोचरा अपि प्रत्ययाः स्तम्भकुड्यादिप्रत्यया इव भवितुमर्हन्तीत्यवगम्यते प्रत्ययत्वाविशेषात् इत्येवं पूर्वपक्षे प्राप्ते—सिद्धान्तितं "नाभाव उपलब्धेः" इति। तदर्थस्तैरेवैवमुक्तः। न खल्वभावो बाह्यार्थस्यावगन्तुं युक्तम्। कुतः? उपलब्धेः। उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भकुड्यादिः। न ह्युपलभ्यमानस्याभावो भवितुमर्हति। यथा हि कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायां "न ब्रूयान्नाहं भुक्तवान्न तृप्त" इति तद्वादिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे नच सोऽस्तीति ब्रुवन् कथमुपादेयवाक्यः स्यात्। नाहमेवं ब्रवीमि न बाह्यमर्थमुपलभ इति, किन्तु उपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि। बाढमेवं ब्रवीषि, निरङ्कुशत्नवात्त्वत्तुण्डस्य। न तु युक्त्युपेतं ब्रवीषि। यत उपलब्धिव्यतिरेकोऽप्यर्थस्याभ्युपगन्तव्यः, उपलब्धेरेव। न हि कश्चिदुपलब्धिमेव स्तम्भं कुड्यं वेत्युपलभते॥

ननु बाह्यस्यार्थस्यासम्भव उक्तः। प्रमाणाप्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ हि सम्भवासम्भवौ न तु सम्भवासम्भवपूर्वके प्रमाणप्रवृत्त्यप्रवृत्ती। यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते तत्सम्भवति। यत्तु न केनचिदप्युपलभ्यते तन्न सम्भवति। इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न सम्भवती-

त्युच्येतोपलब्धेरेव। नच ज्ञानस्य विषयसारूप्याद्विषयाभावो भवति। असति विषये विषयसारूप्यानुपपत्तेः। बहिरुपलब्धेश्च विषयस्य॥

यदुक्तं—स्वप्नादिप्रत्ययवज्जागरितप्रत्यया अपि (उपलब्धाः) विनैव बाह्यार्थेन भवेयुः प्रत्ययत्वाविशेषादिति, तत्राह—"वैधर्म्याच्च न स्वप्नादिवत्" इति। न स्वप्नवद्बाह्यप्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। किं पुनर्वैधर्म्यम्? बाधाबाधौ। बाधते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य। मिथ्या मयोपलब्धो महाजनसमागमः, न ह्यस्ति महाजनसमागमः, निद्राग्लानं तु मे मनो बभूव, तेनैषा भ्रान्तिरुद्बभूवेति। एवं मायादिष्वपि भवति यथायथाभावः। नैवं जागरितोपलब्धं स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते। अपि च स्मृतिरेषा यत्स्वप्नदर्शनम्। उपलब्धिस्तु जागरितदर्शनम्। स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयतेऽर्थविप्रयोगसम्प्रयोगात्मकम्। इष्टं पुत्रं स्मरामि नोपलभे उपलब्धुमिच्छामीति। तत्रैवं सति न शक्यते वक्तुं—मिथ्या जागरितोपलब्धिः उपलब्धित्वात् स्वप्नोपलब्धिवत् इति? उभयोरन्तरं स्वयमनुभवतः। न च स्वानुभवापलापः प्राज्ञंमानिभिर्युक्तः कर्तुम्॥

अपि च यदि जागरितोपलब्धिर्भ्रमः, नैव स्वप्नोपलब्धेर्बाधिका स्यात्। न हि भ्रान्तिर्बाधिका भवति। 'साध्याभावप्रमा बाध' इति तल्लक्षणमाहुः। तथा च स्वप्नदर्शनादिदृष्टान्तः साध्यविकलः स्यादिति। तदेवं विज्ञानव्यतिरिक्तं बाह्यं प्रतिष्ठापयता सूत्रकारेण ब्रह्मव्यतिरिक्तो बाह्यार्थोऽबाधितः

---

[1] त्ते–पा.

प्रतिष्ठापित एव। नच तत्राबाधितत्वं व्यावहारिकत्वमेवोक्तमिति वाच्यम्। विज्ञानवादिभिरपि बाह्यार्थस्य संवृतिसत्यत्वाभ्युपगमात्। व्यावहारिकसत्यत्वस्यैव संवृतिसत्यत्वशब्देन तैर्व्यवहारात्। ततश्च तन्मतनिराकरणपूर्वकं बाधितार्थं प्रतिष्ठापयता पारमार्थिकसत्यत्वमेव प्रतिष्ठापितम्॥

किंच किमन्यत्वादिना तस्य वक्तुमशक्यत्वादपारमार्थिकत्वं किं वा बाधात्? नाद्यः। न हि निर्वचनाधीनं वस्तूनां तत्त्वावधारणं। किंतु मानाधीनम्। पुरुषाणामल्पबुद्धित्वेन वस्तूनामद्भुतत्वेन वा अशक्यनिर्वचनत्वेऽपि प्रमाणसिद्धतया प्रतिमुखवर्तिवैलक्षण्यवत् सामान्यवच्च पारमार्थिकत्वोपपत्तेः। नान्त्यः, तदनुपलब्धेः। न च "यत्र त्वस्य सर्वमात्मैवाभूत्" इति वाक्यं बाधकमिति वाच्यम्। नहीदं बाह्यविद्यादशायां प्रपञ्चाभावं बोधयति। तथा सत्यन्येषां तदनुपलब्धिप्रसङ्गात्। न चास्येति पुरुषविशेषापेक्षयाभावं बोधयति। तथा हि—"प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ति" इत्युपश्रुतवत्या मैत्रेय्या "अत्रैव मा भगवानमूमुहत्। न प्रेत्य संज्ञास्ति" इति मोक्षभागिन आत्मनो विनाशो न युक्त इति पृष्टो याज्ञवल्क्य आह—"न वा अरे अहं मोहं ब्रवीमि। अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मा" इति। उच्छित्तिर्ध्वंसः, तत्प्रतियोगी न भवतीत्यर्थः। कथं तर्हि "अनुविनश्यति। न प्रेत्य संज्ञास्ति" इत्युक्तम्? अत आह—"मात्रासंसर्गस्त्वस्य भवतीति"। अस्यार्थः—मात्राभिः भूतमात्राभिश्च सविषयैरिन्द्रियैः स्वस्वस्थानात् प्रच्युतैः सह अस्यात्मनो हृदयस्थेन ब्रह्मणा संसर्गे नीरक्षीरवदेकीभावो भवति। तथा हि श्रूयते। "वाङ्मनसि

सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्। एवं ममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति। ता एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वपक्रामति। यत्रैव चाक्षुषः पुरुषः परान् पर्यावर्तते। अथ रूपज्ञो भवति। एकीभवति न पश्यतीत्याहुः" इति। वक्ष्यति च सूत्रकारः "वाङ्मनसि दर्शनाच्छब्दाच्च" इत्यारभ्य "अविभागो वचनात्" इत्यन्तम्। तेन ग्राहकेन्द्रियसम्पत्त्या च ग्राह्यविषयसम्पत्तिरिति द्रष्टव्या॥

एवं "सर्वेषां स्पर्शानां त्वगेकायतनं ता वा एकादशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं। यदि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः। यद्यधि प्रज्ञामात्राः स्युर्भूतमात्राः स्युः। न ह्यन्यतरतो रूपं किञ्चन सिद्ध्येत्। नो एतन्नाना। "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः। एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति भूतमात्राशब्दोदितानां विषयाणां प्रज्ञमात्राशब्दोदितानामिन्द्रियाणां च ग्राह्यग्राहकत्वेनान्योन्यापेक्षितत्वस्येन्द्रियेषु विषयाणामर्पितत्वस्य च प्रतिपादनेन ग्राहकेन्द्रियसम्पत्त्या ग्राह्यसम्पत्तेरप्यावश्यकत्वात्। अत एव सुषुप्तावपि "यदा सुषुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति" इत्यादिना ग्राहकेन्द्रियसम्पत्त्या ग्राह्यसम्पत्तिरप्युच्यते। यदि विषयस्य च सम्पत्तिस्तदा ग्राह्यत्वाभाव एव। न स्वरूपेण हार्दब्रह्मणि सम्पत्तिर्नाशो वा, अन्येषाम् विषयानुपलम्भप्रसङ्गात्। "तौ ह सुप्तं पुरुषमाजग्मतुः"। "तदभावो नाडीषु तच्छ्रुतेरात्मनि च"ति श्रुतिसूत्राभ्यां शरीरादिसद्भावप्रतिपादनाच्च। उक्तश्च कल्पतरौ देवताधिकरणे—"प्रतीत्यप्रतीतिभ्यां जाग्रत्सुषुप्त्योरुत्प-

त्तिलयाभिधानमिति।" अयमेव मात्रासंसर्गोऽदर्शननिमित्त-त्वाद्विनाश इत्युपचर्यते। अस्य ज्ञानाभावानिमित्तत्वमन्वय-व्यतिरेकाभ्यां दर्शयति "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केनं क पश्येत्" इति। यत्र जागरितादौ द्वैतमिव भवति। इवशब्द एवकारार्थः, "अण्व्य इवेमा धाना" इतिवत्। द्वैतमेव भवति। तत्त्वे किं भूतम्? इवशब्द उपमार्थो वा। यथा द्वैतं घटपटादिविविक्तं भवति एवमिन्द्रियाण्यपि यदा हृदयान्निष्क्रम्य स्वस्वायतन-गतानि, तदा कर्मकरणानां विभक्तत्वादितर इतरं पश्यति। यत्र मरणावस्थायां सर्वमात्मैवाभूत्; पूर्वोपादानतया सर्वा-भिन्नेन ब्रह्मणा उपहृतकरणस्य जीवस्य एकत्वापत्त्या वा तदा विभागाभावात् केन कं पश्येत्? अत एव सुषुप्त्यादावपि कर्तृत्वादिविभागाभावाज्ज्ञानाभावः श्रूयते। नतु तद्द्वितीय-मस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्यादि॥

ननु कथं सुषुप्तौ ज्ञानाभावः? "नहि द्रष्टुर्दृष्टेर्विपरि-लोपो विद्यते, अविनाशित्वात्" इत्यादिना दृष्ट्यादीनामवि-नाशित्वाभिधानादिति चेन्न; दृष्ट्यादीनामविनाशित्वस्य तत्राप्रतिपादनात्। नहि ज्ञानमात्रं दृष्ट्यादीति। तथा सति शुक्लः पट इत्यादिवाक्यादन्धादीनां शुक्लादिज्ञाने शुक्लं पश्या-मीति व्यवहारप्रसङ्गात्। किं तु चक्षुरादिकरणविशेषजन्य-ज्ञानमेव। नच तस्यानित्यत्वं संभवति। तस्माद्द्रष्टृत्वादिशक्ति-लोपाभावाभिप्रायं। अन्यथा "नहि वक्तुर्वक्तेर्विपरिलोपो विद्यते" इत्यादिश्रवणाद्वचनादिक्रियाया अपि नित्यत्वप्रसङ्गः नहि ज्ञानवत्क्रियाया अपि नित्यत्वं केनचिदभ्युपगम्यते। तस्मात् सुषुप्तौ ज्ञानाभावः सिद्ध एव। तदिदं सूत्रकारो वक्ष्यति

"स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" इति। तस्माद्बाधकाऽभावात् प्रपञ्चः पारमार्थिक एव ॥

किंच सूत्रविरुद्धं मिथ्यात्वम्। "नैकस्मिन्नसंभवात्" इत्येकस्मिन् वस्तुनि अस्तित्वनास्तित्वादीनां "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति ब्रह्मणि रूपादेस्तदभावस्य चासंभवाभिधानेन मिथ्यात्वस्य कण्ठत एव निराकरणात् ॥

केचित्तु, कार्यकारणयोरत्यन्ताभेदमाहुः। तथाहि—मृदि घटो नाम द्रव्यान्तरं नोत्पद्यते। किं त्वेकमेव द्रव्यं पिण्डावस्थां विहाय घटावस्थामापद्यते। पुनश्च घटावस्थां विहाय कपालावस्थामित्यादि। ततश्चावस्थान्तरापत्तिरेव द्रव्योत्पत्तिः। अवस्थाप्रहाणमेव विनाश इति, तन्न,—किमवस्था द्रव्यादत्यन्तभिन्ना? उतात्यन्तमभिन्ना? आहोस्विद्भिन्नाभिन्ना? आद्ये कथमेकविज्ञानेन सर्वविज्ञानम्। द्रव्ये ज्ञातेऽप्यवस्थानामज्ञानात्। नचैकविज्ञानेन सर्वद्रव्यविज्ञानमेव, न त्ववस्थाज्ञानमपीति वाच्यम्। सङ्कोचे कारणाभावात्। द्रव्यस्यैकत्वेन सर्वत्वानुपपत्तेश्च। द्वितीये कथमवस्थानामागन्तुकत्वम्। सदान्तराद्रव्यादत्यन्तमभेदात्। तृतीये किमपराद्धं घटादिना द्रव्येण लोकानुभवसिद्धेन? किंच यद्यवस्थान्तरापत्तिरेवोत्पत्तिस्तदावस्थानामुत्पत्तिर्न स्यात्। अवस्थान्तराभावात्। अवस्थानामवस्थान्तरस्वीकारेऽनवस्था। अथ द्रव्यस्यैवावस्थान्तरापत्तिरुत्पत्तिः। अवस्थानां तु अभूत्वा भवनमुत्पत्तिरिति चेन्न—द्रव्येऽप्यभूत्वा भवनमुत्पत्तिरस्त्विति कृतं भिन्नाभिन्नोत्पत्तिकल्पनया ॥

किंच "तत्तेजोऽसृजत" इत्यादिना द्रव्याणामेवोत्पत्तिराम्नायते। तेज आदिशब्दानां रूपिद्रव्यवाचकत्वात्।

नावस्थानां, तासां रूपाभावात्। रूपवत्त्वाभ्युपगमे द्रव्यस्यैवावस्थेति नामान्तरकरणापत्तेः। न च तदवस्थावतो द्रव्यस्यैव रूपं नावस्थानामिति वाच्यम्। ब्रह्मणो नीरूपत्वादवस्थानां त्रिवृत्करणानुपपत्तेश्च सावयवत्वाभावात्। तस्मात् द्रव्याण्येवोत्पद्यन्ते। तानि भिन्नाभिन्नानीति स्थितम्। तथाच "रचनानुपपत्तेश्च नानुमानम्" इत्यारभ्य "विप्रतिषेधाच्च" इत्यन्तैः सूत्रैस्तन्त्राणां परस्परविरोधात् पूर्वापरविरोधात् श्रुतिविरोधाच्च प्रामाण्ये प्रतिपादितेऽपि तन्त्रार्थानामेव नामान्तरकरणेन सूत्राणां च लक्षणाध्याहारादिभिस्तन्त्रार्थपरतया तान्त्रिकाणां यानि व्याख्यानानि तानि सूत्रविरुद्धान्येव। तथा "ज्ञोत एव" इति जीवस्य ज्ञातृत्वे सूत्रितेऽपि यत् ज्ञानरूपाभिधानं तदपि सूत्रविरुद्धम्। "उत्क्रान्तिगत्यागतीनाम्" इति जीवस्याणुत्वे सूत्रितेऽपि महत्त्वाभिधानं सूत्रविरुद्धम्॥

न चाणुत्वेन पूर्वपक्षं कृत्वा "तद्गुणसारत्वात्" इति महत्त्वेन सिद्धान्तितमिति वाच्यम्। तस्य महत्त्वप्रतिपादकत्वाभावात्। तथाहि--कथमस्य सूत्रस्य प्रवृत्तिरिति चिन्तनीयम्। किं जीवस्य ज्ञानगुणकत्वे ज्ञानाभेदव्यपदेशस्य का गतिरित्याकाङ्क्षायामिदं प्रवृत्तं? उत जीवस्य महत्त्वे सिद्धेऽणुत्वादिव्यपदेशस्य का गतिरित्याकाङ्क्षायामिदं प्रवृत्तं? ज्ञानाभावव्यपदेशस्य का गतिरित्याकाङ्क्षायामिदं प्रवृत्तमिति युक्तम्। तथाहि—"उत्क्रान्तिगत्यागतीनाम्" इति "स्वात्मना चोत्तरयोः" इति च जीवस्याणुत्वे साधिते "स वा एष महानज आत्मा" इति महत्त्वश्रुतेर्नाणुत्वमिति शङ्कायां महत्त्वश्रुतेर्ब्रह्मविषयत्वान्नाणुत्वविरोध इति "नाणुरतच्छ्रुतेरिति

चेन्नेतराधिकारात्" इत्युक्त्वा, पुनश्च "स्वशब्दोन्मानाभ्यां च" इत्यणुत्वमेव दृढीकृत्य, जीवस्याणुत्वे कथं सकलशरीरव्यापि कार्यमिति शङ्कायां "अविरोधश्चन्दनवत्" इति चन्दनबिन्दोः शरीरैकदेशस्थस्यापि सकलशरीरव्याप्याह्लादकारित्ववत् जीवस्याप्युपपद्यत इत्युक्त्वा ; चन्दनबिन्दोरेकदेशस्थत्वस्य प्रत्यक्षसिद्धत्वात्तत्र तथा भवतु, इहतु जीवस्यैकदेशस्थत्वे प्रमाणाभावात् सकलदेहव्यापिकार्यानुरोधेन व्यापित्वमेव किं न स्यादित्याशङ्क्य "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि" इति जीवस्यापि "स वा एष आत्मा हृदि" इत्यादि श्रुत्या शरीरैकदेशहृदयस्थत्वस्य सिद्धत्वाच्चन्दनबिन्दुन्यायेनैव कार्यकरत्वमित्युक्त्वोपपत्त्यन्तरमुक्तं "गुणाद्वा लोकवत्" इत्यणोरपि जीवस्य चैतन्यगुणव्याप्त्या व्याप्य कार्यकरत्वमिति ।

ननु कथं गुणस्य गुणिव्यतिरेक इत्याशङ्कायां, "व्यतिरेको गन्धवत्" इति गन्धव्यतिरेकमुक्त्वा ; 'चैतन्यस्य गुणत्वे स्यादेतदेवम् , नहि चैतन्यं गुणः किंतु स्वरूपमेव, तथाच तस्य व्यापित्वे आत्मन एव व्यापित्वमायात-मित्याशङ्कायां, "पृथगुपदेशात्" इति—"प्रज्ञया शरीरं समारुह्य" इति ज्ञानात्मनोर्भेदोपदेशात् न स्वरूपं ज्ञानं, किंतु गुण एवेत्युक्तम्। तर्हि विज्ञानस्य गुणत्वे "विज्ञानं यज्ञं तनुते" इति कथमात्मनि ज्ञानाभेदव्यपदेशः ? इत्याकाङ्क्षायामिदं प्रवृत्तम् "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्" इति तच्छब्दद्वयेन पूर्वत्र सन्निहितं ज्ञानं गृह्यते, सर्वनाम्नां सन्निहितवाचित्वात्। "स चासौ गुणश्चे" ति कर्मधारयसमासः । तद्गुणः सारो यस्य स तद्गुणसारः, तस्य भावस्तत्त्वं ; तस्मात् , तद्व्यप-

देशः–ज्ञानमिति व्यपदेशः, लवणगुणसारस्य सैन्धवस्य लवणमिति व्यपदेशवत्। प्राज्ञवदिति–सर्वज्ञस्येश्वरस्य ज्ञानगुणसारत्त्वाज्ज्ञानमिति व्यपदेशः "प्रज्ञानं ब्रह्म" इत्यादौ, तद्वदिति।

अयमेव पक्षो युक्तः, नत्वणुत्वव्यपदेशस्य का गतिरिति विवक्षायामिदं प्रवृत्तमित्येतद्युक्तम्। पूर्वं जीवस्य महत्त्वे प्रतिज्ञाते प्रमाणे चोपन्यस्ते यद्यात्मा महान् तस्याणुत्वव्यपदेशस्य का गतिरित्याकाङ्क्षा भवेत्। नच पूर्वत्रात्मनो महत्त्वं प्रतिज्ञातं, न प्रमाणं चोपन्यस्तम्। कथमकस्मादाकाङ्क्षा भवेत्?

न च ब्रह्मणो महत्त्वात्तदभेदाज्जीवस्य महत्त्वं युक्तमेवेति वाच्यम्। एवं हि "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" इति सूत्रमनुपपन्नमेव स्यात्। तद्धि सूत्रं "स वा एष महानज आत्मा" इति श्रुत्या जीवस्य महत्त्वप्रतीतेर्नाणुत्वमिति शङ्कायां महत्त्वश्रुतेर्ब्रह्मविषयत्वान्न जीवस्य महत्त्वमिति प्रतिपादनाय प्रवृत्तम्। यदि हि ब्रह्ममहत्त्वेनैव जीवमहत्त्वं स्यात् कथं 'नेतराधिकारात्' इत्यनेन जीवमहत्त्वशङ्कायाः परिहारः कृतो भवेत्? तस्मात् पूर्वं जीवे महत्त्वप्रतिज्ञायाः प्रमाणस्य चानुपन्यासात्, तर्ह्यणुत्वपदेशस्य का गतिरित्याकाङ्क्षायामिदं सूत्रं प्रवृत्तमित्ययुक्तमेव।

सूत्रार्थोऽपि तन्मतेऽसमञ्जस एव। एवं हि तन्मते सूत्रार्थः। प्रथमेन तच्छब्देनान्तःकरणं गृह्यते। तस्य गुणः तद्गुण इति षष्ठीसमासश्च। द्वितीयेन तच्छब्देनाणुत्वादिकं परामृश्यते। तथाचान्तः करणगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः प्राज्ञवदिति। न च प्रथमेन तच्छब्देनान्तःकरणग्रहणं युक्तम्। तस्याप्रकृतत्वात्, प्रकृतवचनत्वाच्च तच्छब्दस्य। षष्ठीसमासे लुप्तषष्ठ्यर्थे पूर्व-

पदस्य लक्षणाश्रयणं दोषः। द्वितीयस्य तच्छब्देन व्यवहिताणुत्वपरामर्शो दोषः। 'अन्तःकरणगुणसारत्वात्' इत्यसिद्धश्च हेतुः। नहि जीवस्यान्तःकरणगुणोपाधिकत्वं लोके सिद्धम्। नवा केनचिदभ्युपगम्यते। न च दृष्टान्ते प्राज्ञे अन्तःकरणोपाधिकत्वमस्ति। न च प्राज्ञमहत्त्वेन जीवमहत्त्वं वदतः प्राज्ञजीवयोर्दृष्टान्तदार्ष्टान्तिकभावो वा संभवति। उत्तरसूत्रमप्यस्मत्पक्षानुगुणमेव। "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इति ज्ञानस्य मुक्तावप्यभ्युपगमेन यावदात्मभावित्वस्य तत्र संभवात्।

न च सुषुप्त्यादौ ज्ञानाभावात् कथं यावदात्मभावित्वमिति वाच्यम्। "पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात्" इति कारणात्मना सत एव कार्यात्मना प्रबोधादनभिव्यक्तिरिति परिहृतत्वात्। त्वत्पक्षे त्वन्तःकरणस्य मुक्तौ निरन्वयनाशेन यावदात्मभावित्वासंभव एव। "यावत्संसार्यात्मभावित्वात्" इति सङ्कोचस्य स्वयमेव दर्शितत्वात्।

तथा "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा" इति विपक्षबाधकसूत्रमस्मत्पक्षानुगुणमेव। तथाहि— आत्मनोऽणुत्वं ज्ञानगुणकत्वं च साधितम्। तदङ्गीकारे आत्मनो विभुत्वे ज्ञानस्वरूपत्वे च विभुना आत्मचैतन्येन विषयस्य नित्यसम्बन्धान्नित्योपलब्धिप्रसङ्ग इति। तत्पक्षे त्वन्तःकरणानङ्गीकारे आत्मेन्द्रियविषयाणां सन्निधाने सति नित्योपलब्धिः स्यादिति सङ्कोचनीयत्वात्। तस्मादणुत्वमेव सूत्रार्थ इति महत्त्वप्रतिपादनं जीवस्य सूत्रविरुद्धमेव॥

तथा "कर्ता शास्त्रार्थवत्त्वात्" इत्यादिना आत्मनः कर्तृत्वे सूत्रिते अकर्तेत्यभिधानं साङ्ख्यमताभिनिवेशकृतमेव।

न च "यथा च तक्षोभयथा" इत्यात्मनि कर्तृत्वमौपाधिकमित्युक्तमिति वाच्यम्। सूत्रे औपाधिकत्वस्याप्रतीतेः। यथा तक्षा सत्यामेवेच्छायां वास्यादिकरणसम्पत्तौ करोति, नान्यथा, एवं जीवोऽपि सत्यामेवेच्छायां मनआदिकरणसम्पन्नः करोति, नान्यथेत्येतावन्मात्रस्यैव सूत्रात् प्रतीतेः। औपाधिकशब्दाभावात् तक्ष्ण औपाधिककर्तृत्वाभावेन तद्दृष्टान्तबलेनास्यौपाधिककर्तृत्वालाभाच्च। किं च जीवस्य यद्यौपाधिकं कर्तृत्वं कस्य तर्हि स्वाभाविकम्? बुद्धेरिति चेन्न; तस्या अन्तःकरणमिति लोकवेदयोः करणतया प्रसिद्धायाः कर्तृत्वासंभवात्। उक्तं च सूत्रकृता "शक्तिविपर्ययात्" इति। तस्यार्थस्तैरेवैवमुक्तः। बुद्धेः करणशक्तेर्हि एतत्कर्तृशक्तिश्चापद्येत सत्यां च कर्तृत्वशक्तौ तस्या एवाहंप्रत्ययविषयत्वं स्यात्। अहङ्कारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्। अहं गच्छाम्यहमागच्छामीति तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत् कल्पनीयम्। शक्तोऽपि हि कर्ता लोके करणमुपदाय प्रवर्तत इति। ततश्च नाममात्रे विवादः स्यात्, नार्थभेदः। कस्यचित् करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमादिति।

ननु "असङ्गो ह्ययं पुरुष" इति श्रुत्या आत्मनि सर्वसम्बन्धाभावप्रतिपादनान्निमित्तसंयोगाभावे कथमात्मनि कर्तृत्वमिति चेन्न; तस्याः श्रुतेः स्वप्ने कामाभावप्रतिपादकत्वेन सम्बन्धाभावप्रतिपादकत्वाभावात्। तथाहि — "अत ऊर्ध्वं विमोक्षाय ब्रूहि" इति जनकेन मोक्षोपायं पृष्टो याज्ञवल्क्यः ससङ्गस्यैव कर्मणो बन्धकत्वात् सङ्गत्यागः कर्तव्य इत्यभिप्रेत्य सङ्गाभावे कर्मणां बन्धकत्वाभावं प्रदर्शयति

"स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रति योन्या द्रवति स्वप्नायैव स यत्तत्र किंचित् पश्यत्यनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुष" इति। अस्यार्थः—स एष प्रकृतो विज्ञानमयः तस्मिन् सम्प्रसादे पूर्वोक्ते स्वप्ने। यद्यपि सम्प्रसादशब्दः सुषुप्तिवाचकः, तथापि सुषुप्तौ रत्यादेरभावात् स्वप्नः गृह्यते। रत्वा स्त्रीपुरुषादिभिः रतिमनुभूय, चरित्वा नानादेशसञ्चारणं कृत्वा, दृष्ट्वैव पुण्यं च पापं च कर्म, येनैव मार्गेण मनुष्यादिदेहमागच्छति, स यत्तत्र पूर्वस्मिन् स्वप्ने पुण्यं वा कर्म पश्यति तेनानन्वागतो भवति। तत्र हेतुः 'असङ्गोहि' इति। यतस्तत्र पूर्वस्मिन् स्वप्ने असङ्गः अकामः अतस्तं नानुगच्छति। ननु स्वप्नेऽकामत्वमसिद्धम्, "स ईयते अमृतो यत्र कामम्" इति कामकामस्य श्रवणादित्याशङ्कायां कामाभावसाधकार्था अपरा खण्डिका "स वा एष एतस्मिन् स्वप्नेरत्वा चरित्वा दृष्ट्वैव पुण्यं पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव। स यत्तत्र किंचित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इति। बुद्धान्ताय जागरिताय। शेषं स्वप्नवत्। यदि हि स्वप्ने कामः स्यात् तदा ससङ्गेन कृतं कर्म जागरेऽप्यनुवर्तेत। नच तदनुवर्तते। नहि स्वप्नकृतेनैनसागस्कृतमात्मानं मन्यते प्रतिबुद्धः। नापि स्वप्ने मया आगः कृतमिति स्वप्नदृशो वाक्यं श्रुत्वा निन्दति, परिहरति वा लोकः। तस्मान्नास्त्येव स्वप्ने कामः। तदिदं तैरप्युक्तम्। "असङ्गो ह्ययं पुरुष" इति। असङ्गता चाकर्तृत्वे हेतुरुक्ता। उक्तं च "स ईयते अमृतो यत्र कामम्" इति। सङ्गश्च कामः, अतः सिद्धा हेतुरिति।

असङ्गत्वादकर्तेति ननु सिद्धोऽयमुच्यते।
स्वप्ने कामस्य दृष्टत्वात् यत्र काममिति श्रुतेः।
इत्यस्य परिहारस्य स वा इत्यादिकं वचः॥

इत्याद्युपनिषद्भाष्यवार्तिके, 'असङ्गकामशब्दयोः पर्यायत्वात्' इत्यानन्दगिरिः। एवं च स्वप्ने कामाभावे सिद्धे, तत्प्रतिभानं स्वचादिभानवत् जाग्रत्कालीनभानविषयं मन्तव्यम्। श्रुतिरपि एवमेव तत्प्रतिभानमभिप्रेत्याह। नचासङ्गवाक्याज्जाग्रत्यापि कामो नेतिशङ्क्यम्। जाग्रत्यापि कामाभावे स्वप्नेऽपि तदनुभवानुपपत्तेः। जाग्रति दृष्टस्यैव स्वप्नेऽपि भानात् "यानिसुप्त" इति श्रुतेः। यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते इति च। अत एव "सवा एष एतस्मिन् बुद्धान्ते रत्या चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव" इति जागरितवाक्ये असङ्ग इति न श्रूयते। न चान्तःकरणगत एव जागरितुं शक्यम्। तस्याचेतनत्वेन कामासंभवात्। तदिदमुक्तं सूत्रकृता "कामाच्च नानुमानापेक्षा" इति।

नच स्वप्ने कर्माभावादेव तदनुपपत्तिः, न तु कामाभावादिति शङ्क्यम्। "आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते" इति स्वप्ने कर्मणो दर्शितत्वात्। देवतादर्शनादिकर्मणः संभवात्। बुद्धेरचेतनत्वाच्च तस्यां कर्तृत्वानुपपत्तिः। यदप्युक्तं तैरेव "गुहां प्रविष्टावात्मनौ हि" इत्यत्र —"वस्तुतो नैकस्यापि कर्तृत्वम्। बुद्धेरचेतनत्वादात्मनो निर्व्यापारत्वाच्च" इति। नच निर्व्यापारत्वमात्मनः, अहं करोमीति व्यापारस्यात्मनि प्रत्यक्षत्वात्, "आत्मनि चैवं विचित्राश्च हि" इति

विचित्रनानापरिणामस्य सूत्रितत्वाच्च । तस्मादात्मनः स्वाभाविकमेव कर्तृत्वम् । नच कर्तृत्वस्य वह्न्यौष्ण्यवत् स्वाभाविकत्वे सुषुप्त्यादौ तदभावः न स्यादिति वाच्यम् । नहि स्वाभाविकत्वं यावद्द्रव्यभावित्वम् । किंत्वनारोपितत्वम् । घटे पाकजलौहित्यादेरयावद्द्रव्यभाविनोऽपि अनौपाधिकत्वेन स्वाभाविकत्वस्य सर्वसम्मतत्वात्, बदरफलादौ [1]श्यामत्वकठोरत्वयोरयावद्द्रव्यभाविनोरप्यौपाधिकत्वात् । नच श्रुत्या कर्तृत्वस्यारोपितत्वादौपाधिकत्वं प्रतीयत इति वाच्यम् । अत्र हि ध्यानादेरभावात् इवशब्दप्रयोगः, न तु कर्तृत्वाभावात् । अत एव यत्र क्रियास्ति तत्र नेवशब्दप्रयोगः । उभौ लोकावनुसञ्चरतीति । तस्मादनौपाधिकत्वं कर्तृत्वं ।

तथा "अनियमः सर्वेषामविरोधः शब्दानुमानाभ्यां इति सर्वेषु विज्ञानेषु देवयानस्य पथ उपसंहारस्य सूत्रितत्वात्, निर्गुणविज्ञाने देवयानोपसंहारो नास्तीत्येतत्सूत्रविरुद्धम् ।

तथा "इयदामननात्" "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये" इति काठकमन्त्रस्य "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इत्यस्य मुण्डकगतस्य श्वेताश्वतरगतस्य च द्वित्वोपेतजीवब्रह्मप्रतिपादकत्वस्य तुल्यत्वा[2]द्वेद्यैक्येन विद्याया अभेदादुपनिषत्त्रयगतानां गुणानां तत्रोपसंहार इति स्वयमेव व्याख्याय उपनिषत्त्रयस्यापि निर्गुणब्रह्मप्रतिपादकत्वान्नास्ति गुणोपसंहारः" इति प्रतिपादनं सूत्रासङ्गतमिति स्फुटमेव ।

तथा 'कामादितरत्र तत्र चायतनादिभ्य' इति—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्त-

---

[1] श्यामरक्तरूपयो—पा. [2] द्वेद्यैक्येन विद्याभेदं—पा.

राकाश" इति छान्दोग्याष्टमाध्यायगताया विद्यायाः "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोन्तर्हृदय आकाशस्तस्मिन् शेते" इति बृहदारण्यके षष्ठाध्यायगताया विद्यायाश्च हृदयायतनत्वे सेतुत्वलोकासंभेदहेतुत्वादिसामान्यात् वेद्यैक्येन विद्यायाअभेदमाश्रित्य छान्दोग्यगतानां कामादि-गुणानां बृहदारण्यके उपसंहारः, बृहदारण्यकगतानां वशित्वादि-गुणानां च छान्दोग्ये उपसंहार इति स्वयमेवोक्त्वा, बृहदारण्य-कस्थ "स एष नेति नेति" इत्युत्तरवाक्यालोचनेन 'प्रतिषिद्ध-सर्वविशेषब्रह्मप्रतिपादकत्वान्नात्र गुणोपसंहार' इति प्रतिपाद-नमपि सूत्रासङ्गतमेव ॥

नच "स एष नेति नेति" इत्यनेन सर्वविशेषप्रतिषेधः, तस्य मूर्तामूर्तभेदमात्रप्रतिपादकत्वादित्युक्तम् । नच निर्गुणं ब्रह्मास्ति, येन निर्गुणवाक्यानां किंचिद्भवेत्, प्रमाणा-भावात्, काप्यसूत्रितत्वाच्च । नच "अशब्दमस्पर्शमरूप-मव्ययं" "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुति-र्ब्रह्मणो निर्गुणत्वे प्रमाणम् । "अरूपवदेव हि तत्प्रधानत्वात्" इति सूत्रे च निर्गुणत्वाभिधानादिति वाच्यम् । "यः सर्वज्ञः सर्व-विद्यस्य ज्ञानमयं तपः" "आनन्दं ब्रह्मणो विद्वान्" "स वा एष महानज आत्मा" इत्यादिश्रुतिभिः "प्रकाश-वच्चावैयर्थ्यम्" "सुखविशिष्टाभिधानादेव च" "आनन्दा-दयः प्रधानस्य" "विवक्षितगुणोपपत्तेश्च" इत्यादिसूत्रैश्च ब्रह्मणो गुणवत्त्वस्याभ्युपगमात् । नच विरोधः, प्रतिषिद्धगुणा-संभवेऽपि प्रतिपादितगुणानां संभवात् । नहि 'वह्नौ गन्धो नास्ति रूपमस्ति' इत्यनयोर्विरोधः । एवमशब्दमस्पर्शमित्यादिना प्रतिषेधाद्रूपादिगुणा मा भूवन् । 'यः सर्वज्ञ' इत्यादिना प्रति-

पादनात् ज्ञानादिगुणाः किं न भवेयुः ? "साक्षी चेता केवलो निर्गुणश्च" इति गुणसामान्यनिषेधश्च "यः सर्वज्ञः साक्षी, चेता, ज्ञः कालकालो गुणी सर्वविद्य" इत्यादिगुणविशेषविधिना अंशतो बाध्यते। यथा न हिंस्यात्' इति सामान्यनिषेधः, अग्नीषोमीयं पशुमालभेत' इति विशेषविधिना अंशतो बाध्यते। यथा वा "आहवनीये जुहोति" इति सामान्यशास्त्रं "पदे जुहोति" इति विधिना तद्वत्।

नच "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिना ज्ञानाधिक्यं ब्रह्मणः स्वरूपत्वेन प्रतीयते, न गुणत्वेनेति वाच्यम्। "तदैक्षत बहुस्यां प्रजायेय" इति "स ईक्षां चक्रे" इति च ज्ञानस्य जन्यत्वावगमेन स्वरूपत्वायोगात्। नचाविद्यावृत्तिरूपं ज्ञानान्तरमेव जन्यते, न स्वरूपज्ञानम्। स्वरूपत्वेऽपि वा विषयोपरक्तत्वाकारेण जन्यत्वश्रुतेरुपपत्तिरिति वाच्यम्। अविद्यायाः शशविषाणतुल्यत्वात्। सत्वेऽप्यस्यास्तद्व्यक्तित्वेन तत्रेक्षणायोगात्। अन्यथा प्रधानस्यापीक्षणसंभवे "ईक्षतेर्नाशब्दम्" इत्यादेरसाङ्गत्यापातात्। यदुक्तं स्वरूपत्वेऽपि चैतन्योपहितविषयोपरक्तत्वाकारेण जन्यत्वोपपत्तिरिति, तन्न! सृष्टिकारणीभूते क्षणकाले विषयाभावात्। नच तदाप्यव्याकृतं नामरूपादिकमस्त्येवेति वाच्यम्। तत्संभवे प्रमाणाभावात्। भावेऽपि वा तस्य प्रलयकालेऽपि सत्त्वेन तदानीमुत्पत्त्ययोगात्। ईक्षणगततया श्रुतस्य जन्यत्वस्य तद्विधगतत्वकल्पनायोगाच्च। कथं तर्हि "सत्यं ज्ञानमनन्तं ब्रह्म" इति सामानाधिकरण्यं नीलमुत्पलमित्यादिवद्गुणगुणिनोर्भेदाभेदाभ्युपगमात्। उक्तं च सूत्रकृता "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्" इति ॥

किंचात्रज्ञानशब्दो न जानातेर्भावसाधनो ल्युट्प्रत्ययान्तः। तथा सति प्रत्ययाद्युदात्तत्वेनाद्युदात्तं पदं स्यात्। 'संज्ञानं विज्ञानं प्रज्ञानं' इत्यादिवत् अन्तोदात्तं विधीयते। तस्मात् ज्ञानमस्यास्तीति मत्वर्थीयाशाद्यच्प्रत्यये सति "चित"इत्यन्तोदात्तं पदं भवति। तथाच ज्ञानवदित्यर्थलाभादनेनापि ज्ञानगुणकत्वमेव सिद्ध्यति, न ज्ञानस्वरूपत्वम्। तस्माद्ब्रह्मणोऽनिर्गुणत्वात् इदं निर्गुणप्रतिपादकमिदं सगुणप्रतिपादकमिति भागकल्पनमयुक्तमेव।

तथा "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति कर्मसापेक्षाया विद्याया मोक्षहेतुत्वस्य सूत्रितत्वात् कर्मनिरपेक्षात्केवलादेव ज्ञानान्मोक्ष इति प्रतिपादनं सूत्रासम्बद्धम्। तथाहि– "अत एवाग्नीन्धनाद्यपेक्षा"–यदा विद्या कर्माङ्गं तदा सा स्वकार्यस्य कारणोपकारस्य सिद्धमेव सहकारित्वेनाग्नीन्धनादीनि "अग्निमीडे" इत्यादिवाक्यविहितानि अग्न्यन्वाधानादीनि चापेक्षते। यदा न कर्माङ्गं तदा नाङ्गान्तराण्यपेक्षते। यदा विद्या पुरुषार्थहेतु स्तदा पुरुषार्थसिद्ध्ये सर्वाणि कर्माणि नित्यनैमित्तिकानि सहकारित्वेनाऽपेक्षत इत्याह—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" सर्वाणि कर्माण्यपेक्षते विद्या, कुतः? यज्ञादिश्रुतेः। "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति श्रुतेः। अत्र हि पूर्वं "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इति प्रमाणेन, विज्ञाय प्रज्ञामुपासनां च कुर्वीतेत्युक्तम्। कानि चोपासनासहकारीणीत्यपेक्षायामिदमुच्यते। तमेतं वेदानुवचनेनेत्यत्र वेदानुवचनशब्देन वेदवाक्यमुच्यते। "इति त्रिशङ्कोर्वेदानुवचनम्" इत्यादौ तथा दर्शनात्। ननु वेदाध्यायस्याप्रमा-

णत्वेन प्रमाणाकाङ्क्षानिर्वर्तकत्वात् यज्ञादिश्रुतेरिति सूत्र-विरोधाच्च। यज्ञस्यादित्वाभावात् वेदानुवचनस्यैवादित्वेन वेदानुवचनादिश्रुतेरिति वक्तव्यत्वात्। तस्माद्वेदानुवचनेन वाक्येन विज्ञायत इत्यध्याहृत्य योज्यम्॥

केचित्तु; एवं प्राप्तं अवगतमित्यर्थ इत्याहुः। विविदिषन्तीत्यत्र वेदनं पूर्वत्र प्रज्ञाशब्देन निर्दिष्टं उपासनमेव, उपास्तौ बहुलं वेदेति प्रयोगदर्शनात्। आवृत्त्यधिकरणे विद्युपास्त्योर्व्यतिकरेण वेदे प्रयोगदर्शनात्। विदिरुपासनार्थ इति तैरप्युक्तत्वाच्च। यज्ञेनेति सहार्थे तृतीया। तथा यज्ञादीनि सहकारित्वेन विधीयन्ते। नच करणे तृतीया किं न स्यादिति शङ्क्यम्। उपास्तौ यज्ञादेः करणत्व संभवात्। "मनसैवानुद्रष्टव्यं" इति मनसः करणत्वावधाराणाच्च। विदेः प्रमाणज्ञानार्थत्वे प्राप्यमाणस्य यज्ञादेः करणत्वासंभवाच्च। नच ज्ञानप्रतिबन्धकपापनिवृत्तिद्वारा यज्ञादेः करणत्वं संभवतीति वाच्यम्। योग्यताज्ञानादिशब्दज्ञानसामग्र्यां सत्यां ज्ञानानुदयादर्शनेन पापस्य प्रतिबन्धकत्वासिद्धेः, प्रतिबन्धकाभावकारणत्वस्य परैर्यत्नतो निराकरणेन तद्द्वारा यज्ञादेः कारणत्वस्य दूरतोऽपास्तत्वाच्च। तस्मात्सहार्थ एव तृतीया। ततश्च यज्ञादेः सहकारित्वासिद्धिः। अत एव "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धयात्मानमन्विष्यादित्यमभिजयन्ते" इत्यादौ सहार्थे तृतीयेति परैरपि व्याख्यातम्। अत एव सूत्रकारोऽपि सहकारित्वेन चेति कण्ठत एव सहकारित्वं वक्ष्यति। अत एव "तदधिगम उत्तरपूर्वयोरश्लेषविनाशौ तद्व्यपदेशात् इतरस्याप्येवमसंश्लेषः पाते तु" इति विद्यायाः पूर्वयोः पुण्यपापयोर्विनाशकत्वमुक्त्वा तदपवादत्वेनेदं सूत्रद्वयमुक्तं।

सूत्रकृता—"अनारब्धकार्ये एव तु पूर्वे तदवधेः" "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति। प्रारब्धयोः पुण्यपापयोः नाविद्यया नाशः, किं तु भोगेन। अग्निहोत्रादीनां नित्यनैमित्तिकानां तु विद्यया न नाशः, किं तु विद्याफले मोक्षे सहकारित्वेन हेतुत्वमिति तयोरर्थः। यदि हि कर्माणि ज्ञानस्यैवोत्पादकानि तर्हि फलापवर्जितत्वात्, कर्मणा ज्ञानेन चावश्यंभावात्तदपवादत्वेन मोक्षहेतुत्वप्रतिपादनमसङ्गतं स्यात्॥

किं च—यदि मोक्षसाधनं ज्ञानफलमुद्दिश्य तत्साधनत्वेन यज्ञादयो विधीयन्ते, तदा फलनिश्चयं विना वैदिके कर्मणि प्रवृत्त्यनुपपत्तेः ज्ञानलक्षणफलनिश्चयो वाच्यः। ज्ञानं च ब्रह्मविषयमिति विषयभूतब्रह्मनिश्चयोऽपि वाच्यः। तथापि ब्रह्मणो निश्चितफलस्य सिद्धत्वान्न साधनानुष्ठानम्, अनिश्चयेफलानिश्चयान्न साधने प्रवृत्तिः। एवं मोक्षनिश्चयानिश्चययोरपि द्रष्टव्यम्। एतच्चार्थावबोधकामस्याध्ययनं विधीयत इति पक्षं निराकुर्वद्भिस्तैरेव प्रजतः साधितमिति नातियत्यते।

नच मोक्षस्य कर्मसाध्यत्वेऽनित्यत्वापत्तेः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, इति श्रुतेरिति वाच्यम्। "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां" इति विद्यारहितकेवलकर्मकृतां लोकस्यैव श्रवणात्। तथान्यत्रापि "यो वा एतदक्षरं गार्ग्य विदित्वा अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" "यदिह वा अप्यनेवं वित्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत, स य आत्मानमेव लोकमुपास्ते नहास्य कर्म क्षीयते" इत्यादिना विद्यारहितकेवलकर्मणः क्षयिष्णुत्वस्य विद्यायुक्तकर्मफलस्याक्षयत्वस्य

च प्रतिपादनाच्च। तस्मात्सिद्धं कर्मणः सहकारित्वम्। अश्ववत्—यथा रथचर्यायां नियुक्तो दक्षिणो वाहनाश्वः सहकारित्वेन सव्यमपेक्ष्यते तद्वत्। एतेन यज्ञादेर्विविदिषाहेतुत्वमपि निरस्तम्। अश्वेन जिगमिषतीत्यादावश्वादेर्जिगमिषाहेतुत्वदर्शनात्, "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति साक्षान्मोक्षहेतुत्वस्यैव सूत्रितत्वाच्च। अस्यार्थस्तैरेवमुक्तः। अग्निहोत्रादि यन्नित्यं कर्म वैदिकं तत् तत्कार्यायैव तस्य ज्ञानस्य यत् कार्यं तदेवास्यापि कार्यमित्यर्थः। कुतः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिश्रुतिदर्शनात्।

ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः। नैष दोषः। ज्वरमारणकार्ययोरपि दधिविषयोः गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यत्वदर्शनात्। तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्यत्वोपपत्तेरिति। एवं सति यदुक्तं अतिक्रान्ताविषयमेतत् कार्यैकत्वाभिधानं चित्तशुद्धिविविदिषाद्वारा ज्ञानस्यैव हि प्रापकं कर्म मोक्षसाधनमुपचर्यते। नहि निर्विशेषब्रह्मणि आगाम्यग्निहोत्रादिकं संभवति। अकर्त्रात्मबोधे सति विधिनिषेधशास्त्रानधिकारात् सगुणासु विद्यासु कर्तृत्वानिवृत्तेः। संभवत्यागाम्यग्निहोत्रादिके तस्यापि निरभिसन्धिनः कार्यान्तराभावात् विद्यया सहैककार्यत्वोपपत्तिरिति;—तदयुक्तम्। कथं ह्येकस्माच्छ्रुतिवाक्यात् सूत्रवाक्याच्चार्थद्वयप्रतिपत्तिः? क्वचिद्विविदिषायां हेतुत्वं क्वचिद्विद्याफलहेतुत्वमिति। कथं वा यज्ञादीनां विविदिषायामेवोपयोगमुक्त्वा? सगुणासु साक्षात्फलहेतुत्वोक्तौ न पूर्वपरविरोधः। नच फलहेतुत्वस्यैव वाक्यार्थत्वेऽपि अकर्त्रात्मबोधेन कर्मणां प्रदाहात् कर्मणां फलपर्यन्तावस्थानासंभवेन विविदिषायामेवोपयोगो निर्गुण-

विद्यायामुक्त इति वाच्यम् । "कर्ता शास्त्रार्थवत्त्वात्" इत्यात्मनः कर्तृत्वस्य व्यवस्थापितत्वात्, अकर्त्रात्मबोधस्य भ्रान्तित्वेन कर्मप्रदाहकत्वासंभवात् । निर्गुणविद्याया एवाभावेन तत्र विविदिषोपयोगस्य दूरापास्तत्वात् । नच कर्मजन्यत्वे मोक्षस्याऽनित्यत्वं स्यात्, "यत् कृतकं तदनित्यम्" इति व्याप्तेः, "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेश्चेति वाच्यम् । यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवं आत्मानमेव लोकमुपासीतसय अत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इत्यादिना आत्मविदा कृतस्य कर्मणः फलोपभोगान्ते क्षयस्य, ब्रह्मविदा तु कृतस्य कर्मणः क्षयाभावस्य प्रतिपादनेनानित्यत्वप्रसक्त्यभावात्, न्यायस्य श्रुतिबाधितत्वात् ।

नच क्रियाया आशुतरविनाशित्वस्य प्रत्यक्षसिद्धत्वात् कथमक्षयत्वप्रतिपादनमिति वाच्यम् । क्रियायाः सूक्ष्मावस्थारूपस्यापूर्वस्य कर्मशब्दवाच्यस्याक्षयत्वप्रतिपादनात् । नच तस्मिन् मानाभावः, तदभावे आशुतरविनाशिन्याः क्रियायाः कालान्तरे फलजनकत्वानुपपत्तेः, तदभावे "तं विद्याकर्मणी समन्वारभेते" इति कस्य वा समन्वारम्भणमुच्येत ? एवं "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययं" इति कस्य वा क्षये परलोकादिहागमनमुच्येत ? "रमणीयचरणाः रमणीयां योनिमापद्येरन्" इति वाक्येन वा योनिविशेषप्राप्तिरुच्येत ॥

नन्वमूर्तद्रव्यस्यापूर्वस्य कथं हानं कथंनोपादानं इति चेन्न । शास्त्रप्रामाण्यादुभयस्याप्युपपत्तेः । धर्माधर्मयोः शास्त्रैकगम्यत्वेन तत्स्वभावोऽपि शास्त्रेणैव गन्तव्यः । न तर्केण प्रयोजनमस्ति । "श्रुतेस्तु शब्दमूलत्वात्" इति ह्युक्तम् । अत

एव "स्तेनः प्रकीर्णकेशः अंसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत ; तेनैनं हन्याद्वधे, मोक्षेऽनुज्ञातेऽनुज्ञातारमेनः स्पृशति।

अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करे ॥ इति ॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥"

इत्यादिवाक्यैः पुण्यपापयोर्हानमुपादानं च स्मर्यते। "तद्य इह कर्मचित" इत्यादि श्रुतिश्चाविद्वद्विषया। "अथ य इहात्मानमनुविद्य व्रजति" इति, अनन्तरं विदुषः सर्वकाम्यफलप्राप्त्यभिधानात्। तत्पक्षेऽपि दहरविद्यायाः सगुणविद्यात्वस्य सगुणासु विद्यासु कर्मसाहित्यस्याप्यभ्युपगतत्वेन, तत्प्रकरणस्थेनानेनैव वाक्येन तत्फलं निन्द्यत इत्यसाङ्गत्यापातात्। दहराधिकरणदहरविद्याफलाक्षयत्वस्य तैरेव प्रतिपादनाच्च। तस्मात्कार्यसाध्यत्वेऽपि मोक्षस्य कर्मणः क्षय्यत्वप्रतिपादनान्मोक्षस्याक्षय्यत्वमुपपन्नम्।

तथा 'समानाचासृत्युपक्रमात्' इति विद्वदविदुषोरुत्क्रान्तिसाम्यप्रतिपादनेऽपि कस्यचिद्विदुष उत्क्रान्त्यभावाभिधानं सूत्रविरुद्धम्। तथाहि—कथं 'वाङ्मनसि दर्शनाच्छदाच्च' इत्यादिनेन्द्रियप्राणसहितस्य जीवस्य लिङ्गशरीरेण सहोत्क्रान्तिर्विद्वत्सम्बन्धिनः प्रतिपाद्यते। 'समाहितमुत्सर्जन् यायादेवमेवायं शरीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' इत्यादिका श्रुतिः सप्रपञ्चमुत्क्रान्तिमुक्त्वा 'इति तु कामयमान' इति तस्याविद्वत्सम्बन्धितामभिधाय 'अथाकामयमानः' इति विद्वांसं प्रस्तुत्य 'न तस्य प्राणा

उत्क्रामन्ति' इति तस्योत्क्रान्तिं प्रतिषिध्य 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इत्यत्रैवामृतत्वं ब्रह्मप्राप्तिं दर्शयतीत्याह। 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' समाना च विद्वदविदुषोरुत्क्रान्तिः, कस्मात्? विशेषाश्रवणात्। छान्दोग्ये परेषां निर्विशेषब्रह्मप्रतिपादकत्वेनाभिमते षष्ठाध्याये एवमेवाह 'आचार्यवान् पुरुषो वेद' इति विद्वांसं प्रक्रम्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति सम्पात्तमभिधाय केन क्रमेण सम्पद्यत? इति वीक्षायां 'वाङ्मनसि सम्पद्यते' 'इत्यादिनोत्क्रान्तिक्रमप्रतिपादनाच्च। किं सर्वत्र साम्यं? नेत्याह 'आसृत्युपक्रमादिति'। आसृत्युपक्रमात् गत्युपक्रमतः प्राक्, समानोत्क्रान्तिः; सृत्युपक्रमस्तु–मूर्धन्यनाडीतो विद्वान् गच्छति, इतर इतराभ्यामिति विशेषः।

यदुक्तमत्रैव विदुषोऽमृतत्वादिति तत्राह 'अमृतत्वं चानुपोष्य' इति। अनुपोष्य अदग्ध्वा लिङ्गशरीरादिकं, सप्राणत्वममृतत्वमुच्यते। अथ मर्त्योऽमृतो भवतीति ब्रह्मप्राप्तिरपि हार्दब्रह्मप्राप्तिरेव। कस्मादित्यत्र आह 'तथापीतेः संसारव्यपदेशात्। उत्तरत्र तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गलोकं" इति। 'ऊर्ध्वममी युक्ता' इति देवयानेन पथा अविकृतब्रह्मप्राप्तिसमय एव लिङ्गशरीरादिभ्यो मुक्तत्वाविधानेन ततः प्राक् संसारित्वावगमात्।

ननु देहाद्बहिर्गच्छन् लिङ्गशरीरं पार्श्वस्थैः किमिति नोपलभ्यते? किमिति वा स्थूलदेहस्य दाहच्छेदादिना तन्नोपमृद्येत इत्याशङ्क्य सूक्ष्मत्वान्नैवमित्याह,—"सूक्ष्मं प्रमाणतश्च तथोपलब्धेः" "नोपमर्देनातः" इति।

अपिच जीवदवस्थायामुपलभ्यमानस्य उष्णस्पर्शलिङ्ग-

शरीराश्रयत्वात्; मृतावस्थायां चोष्णस्पर्शानुपलम्भेन तदा-श्रयस्य लिङ्गशरीरस्योत्क्रान्तिरावश्यकीत्याह 'अस्यैव चोपपत्तेरेष ऊष्मा' इति।

यदुक्तं 'न तस्य प्राणा उत्क्रामन्ति, इति विदुषामुत्क्रान्तिः प्रतिषिद्धेति तत्राह—' प्रतिषेधादिति चेन्न शारीरात्' नायमुत्क्रा-न्तिप्रतिषेधः प्राणानां, किंतु शरीरादात्मनः। कथं गम्यते? 'स्पष्टो ह्येकेषाम्'। स्पष्टो ह्येकेषां माध्यन्दिनानां शाखायां 'न तस्मात् प्राणा उत्क्रामन्ति' इति पञ्चमीप्रयोगात्। तस्मादिति च प्राधान्यादभ्युयस्य निःश्रेयसाधिकृतो देही गृह्यते, न देहः। न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा अपक्रामन्ति सह तेनैव भवन्तीत्यर्थः। तथा च प्राणस्य देहादुत्क्रान्तिर्भवत्येव। एवं च तस्य' इति सम्बन्धसामान्ये षष्ठी, शाखान्तरगतया पञ्चम्या सम्बन्धविशेषेऽवस्थाप्यते।

नचैवं 'इति तु कामयमानः' इति उत्क्रान्तेरविद्व-त्सम्बन्धितोक्तिरनुपपन्नेति वाच्यम्। नहीदमुत्क्रान्तेरविद्वत्सम्ब-न्धिताभिधानम्। न ह्यविदुषो मूर्ध्न उत्क्रान्तिः संभवति। 'तयोर्ध्वमायन्नमृत्वमेति' इति 'तदोकोग्रज्वलनमि'ति च सूत्राभ्यां विदुष एव मूर्ध्न उत्क्रान्त्यभिधानात्। तथा 'तं विद्याकर्माणी समन्वारभेते इत्युक्तं समन्वारम्भणं च नाविदुषः संभवति। 'समन्वारम्भणात्' 'विभागः शतवत्' इति सूत्राभ्यां समन्वारम्भणस्य विद्वद्विषयताभिधानाच्च। तथा 'प्राजापत्यं वा ब्राह्मं वा' इत्युक्तब्रह्मरूपापत्तिरपि नाविदुषः संभवति। 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रेण तस्याविद्याफलत्वाभिधानात्। किंतु 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति यत्प्रत्यागमनमुक्तं तस्याविद्वत्सम्बन्धिता-

भिधानमेतत्। तथाच 'अविद्वान् कर्मक्षयात् पुनरागच्छति, विद्वांस्तु ब्रह्माप्येति' इत्येव विशेषाभिधानान्न तदुत्क्रान्त्यनुत्क्रान्तिभ्याम्।

न च शरीरादुत्क्रान्तेरप्रसक्तेस्तन्निषेधानुपपत्तिः, देवदत्तो मृत इत्यादि लौकिकव्यवहारात्तत्प्रसक्तौ निषेधसंभवात्। 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इतिवत्।

अपिचोत्क्रान्त्यभावोनापूर्वोऽत्र प्रतिपाद्यते, किंतु विभागप्रश्नोत्तरसिद्धोऽनूद्यते। तथाहि–'यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो नेति प्रश्ने—'नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इत्युत्तरम्। तत्रास्मादितीदंशब्देन देही परामृश्यते। 'अत्रैव समवनीयन्ते' इति जीवे प्राणानां संलीनतया उक्तायाः संभवात्। सोऽध्यक्षे इत्यत्र तथा प्रतिपादनात्, न शरीरे तस्यासंभवात्।

न च स उच्छ्वयतीत्युक्तोच्छूनता जीवस्यानुपपन्नेति वाच्यम्। न ह्युच्छ्वयतीत्यत्रोच्छूनतार्थः, किंतूर्ध्वगमनमेव। 'टु ओश्विगतिवृद्ध्योः' इति स्मरणात्। आध्मायति–देहं शब्दयुक्तं करोतीत्यर्थः। ध्माधातोः सकर्मकत्वात्। शङ्खान् दध्मुरिति दर्शनात्। आध्मातः कर्मभूतो देहः, आध्मातः शङ्ख इति दर्शनात्। मृतः प्राणवियुक्तः शेत इत्यर्थः। तथाचात्र सिद्धो जीवात् प्राणानामुत्क्रमाणाभावोऽनूद्यते, 'न तस्य प्राणा' इति।

नचानुवादो व्यर्थ इति शङ्क्यम्। 'ब्रह्मैव सन्' इत्युक्त ब्रह्मत्वोपपादकत्वादिति। अत्र च ब्रह्मैव सन्निति ब्रह्मभावो विदुषो वैशेषिको नोच्यते। विद्यासाध्यब्रह्मप्राप्तेः ब्रह्माप्येतीति

पृथगेवाभिधानात्। किंतूत्क्रान्तिप्रस्तावे येयमिन्द्रियमनःप्राण-सहितस्य जीवस्य भूतद्वारा ब्रह्मणि सम्पत्तिरविभागापत्तिरूपा विद्वदविदुषोः समाना 'वाङ्मनसि दर्शनाच्छब्दाच्च' इत्यारभ्य 'अविभागो वचनात्' इत्येवमन्तेन निरूप्यते। सैवाभिधीयते। तदभिधानं च तस्य ब्रह्मप्राप्तिद्वारत्वात्। नह्युत्क्रान्त्यभावे देवयानेन पथा ब्रह्मगमनं संभवति। तदर्थमेव हि द्वितीयपादेन उत्क्रान्तिनिरूपणम्। न च प्राणसहितस्य जीवस्य ब्रह्मसम्पत्तिः जीवात् प्राणानामुत्क्रान्तिप्रतिषेधं विना संभवतीति तत्प्रति-षेधोऽप्यर्थवान्।

यदापि 'ब्रह्मैव सन्' इत्यस्य स्वयमपि ब्रह्मभूत्वेत्यर्थः, 'देवो भूत्वा देवानप्येति' इतिवत्, तदापि ब्रह्मभावोऽप्यु-त्क्रान्तप्राणस्य मृतस्य न भवतीति प्रतिषेधोऽप्यर्थवान्।

इयं च सम्पत्तिः कदा केन क्रमेण भवतीत्याकाङ्क्षा-यामाह—

'यदा सर्वे प्रमुच्यन्ते
कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवति

अत्र ब्रह्म समश्नुते' इति। 'सर्वे कामाः प्रमुच्यन्ते' इति। सेन्द्रियस्य प्राणे सम्पत्त्येति शेषः। कारणस्य प्रविलये हि कार्यस्य सर्वात्मना प्रविलयो भवति। अथ मर्त्योऽमृतो भवतीत्यनन्तरं जीवे प्राणस्य सम्पत्तिरुक्ता। तदिदमुक्तं सूत्रा-वयवेन 'अमृतत्वं चानुपोष्येति'। अस्यार्थः। अथ मर्त्य इत्यत्रामृतशब्देन विद्याफलं नोच्यते। उत्तरत्र तस्याभि-धानात्। किंत्वनुपोष्य अदग्ध्वा बन्धहेतुं अनुपेत्य चाविकृतं ब्रह्म सप्राणत्वमात्रं तत्त्वविदाविदुषोः समानमिति। इदमेव-

16*

चामृतत्वमस्य सूत्रस्य विषयः। 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यादावमृतत्वस्योत्क्रान्तिपूर्वकत्वाभिधानेन तदभावे शङ्कानुदयात्। 'अत्र ब्रह्म समश्नुते' इति जीवस्य भूतद्वारा ब्रह्मणि सम्पत्तिः। 'वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां' इति श्रुत्यन्तरात्।

नन्वेवं ब्रह्मणि सम्पन्नः सन्निति वक्तव्यम्। न ब्रह्मैव सन्नितीत्याशङ्कां, सम्पत्तिरिह नीरक्षीरवदग्नितप्तायःपिण्डवच्चा विभागापत्तिरेव, नतु संश्लेषमात्रमिति परिहरिष्यन्, प्रथमं जीवस्य मृतत्व(मृति)व्यवहारो निरालम्बनः स्यादिति शङ्कां परिहरति—'तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतोऽप्राणो ब्रह्मैव तेज एवेति' यथा अहिनिर्ल्वयिनी—अहित्वक्, अहिना निर्मुक्ता प्राणवियुक्तत्वान्मृता वल्मीके शयीत एवमेवेदं शरीरं प्राणवियोगान्मृतं शेते। जीवस्तु शरीरादुत्क्रान्तत्वाद्देहस्वाम्यनिवृत्तेर्वा अशरीरः, प्राणावियोगाभावाच्चामृतः, प्राणविभागापत्त्याऽप्राणः, ब्रह्माविभागाद्ब्रह्मैव, तेजोऽविभागापत्त्या तेज एवेति। तदेवं ब्रह्मैव सन्नित्येतत्प्रपञ्चितम्।

इदानीं कीदृशेन पथा कीदृक्साधनाविशिष्टश्च ब्रह्माप्येतीत्याकाङ्क्षायां ब्रह्माप्येतीत्येतत्प्रपञ्चयति—

'अणुः पन्था विततः पुराणो
मां स्पृष्टोऽनुवित्तो मयैव।
तेन धीरा अपियन्ति ब्रह्मविदः
स्वर्गं लोकमित ऊर्ध्वा विमुक्ताः॥
तस्मिञ्छुक्लमुतनीलमाहुः
पिङ्गलं हरितं लोहितं च।

एष पन्था ब्रह्मणाहानुवित्तः
तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च'

इति मूर्धन्यनाड्यास्तदविन्त्वात् दुर्विज्ञेयत्वाद्वा अणुः पन्था। देवयानः, मांस्पृष्टः-मां स्पृष्ट इति याज्ञवल्क्योक्तिः। मूर्धन्यनाडीसम्बन्धाच्च देवयानस्य मां स्पृष्ट इत्युक्तिः। अनुवित्तः परिज्ञातः ध्यानेन, मया। स्वर्गं लोकमिति निरतिशयानन्दं ब्रह्मोच्यते, ब्रह्माप्येतीति प्रक्रमात्। विमुक्ता इति–स्थूलात्सूक्ष्माच्च देहबन्धहेतुपुण्यपापाभ्यां च। तस्मिञ्छुक्लमिति–मूर्धन्यनाड्या आदित्यरश्मीनां च नानारूपवत्त्वस्य श्रुतिसिद्धत्वात्, तद्घटितमार्गस्य नानारूपवत्त्वं। तैजसश्चेति विद्यादिसाधनसमुच्चायकश्चकारः।

अत एवैकैकसाधनानुष्ठाने पुरुषार्थासिद्धिमाह—

'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः'॥

इत्यादिना।

तदेवं पौर्वापर्येण प्रकरणे पर्यालोच्यमाने विदुषो गत्युत्क्रान्त्योरवगमात् प्रतिषेधः शरीरोपादानक एव।

स्मर्यते च–स्मर्यते हि महाभारते विदुषो गतिः।

'शुकः किल वैयासिकिरादित्यमण्डलमभिप्रतस्थे' इति। तथा—

'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्॥

तथा—

'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवाश्च मार्गे मुह्यन्ति अपदस्य पदैषिणः' इति॥

अपदस्य-स्वस्थानाद्धृदयादुत्क्रान्तत्वात् । पदैषिणः-परपदप्रेप्सोर्मार्गे देवयाने देवा अपि मुह्यन्तीति मार्गस्य दुर्विज्ञेयतोच्यते, न तु मार्गाभावः। तथा च 'अथ य एतौ पन्थानौ न विदुः ते कीटाः पतङ्गा वा यदिदं दन्दशूकम्' इति मार्गद्वय-भ्रष्टानामधोगतिश्रवणात् प्रतिषेधस्य जीवप्राणोत्क्रान्तिविषय-त्वाद्विदुषः शरीरउत्क्रान्तिविरहाभिधानं सूत्रसिद्धान्तविरुद्धमेव।

तथा 'अर्चिरादिना तत्प्रथितेः' इत्यर्चिरादिमार्गेणैव ब्रह्मप्राप्तिर्न प्रकारान्तरेणेति सूत्रितेऽपि केषांचिद्ब्रह्मविदां मार्गान्तराभिधानमपि सूत्रासम्बद्धमेव ।

न च 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इति ज्ञानव्यतिरिक्तमार्गान्तरनिषेधान्न देवयानः पन्थाः अपेक्षितव्य इति वाच्यम्। 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इति परिहितस्त्रविशेषविद्यावाक्यवदस्यापि देवयाननिषेधकत्वा-भावात् । 'विद्याकर्मणोरिति तु प्रकृतत्वादि'ति सूत्रे 'अथैतयोःपथोर्न कतरेण च' इत्युपात्तयोर्देवयानपितृयानयोः पथोर्विद्याकर्मणी प्रतिपेदे इति विद्याया अपि देवयानमार्ग-प्रवर्तनाभिधानात् । विद्याग्रहणेनैव तदादेर्देवयानस्यापि लाभात्। तं मुक्त्वा ब्रह्मगमनायान्यो मार्गो नास्तीति तद्ब्रह्म गमनाय देवयानस्यैवापेक्षा प्रतीयते। अन्यथा मार्गान-पेक्षायामयनायेत्युक्तगमनानुपपत्तेः ।

न चायनायेति गमनं नाभिधीयते, किं तु ब्रह्मप्राप्तिरे-वेति वाच्यम्। इण गतौ, अय पय गताविति (धातुपाठे) स्मरणात्, तदतिक्रमे कारणाभावाच्च, मार्गमात्रनिषेधे अन्य इति विशेषणानर्थक्याच्च ।

नच पन्था इत्यनेन मार्गो नोच्यते, किंतु साधनमेव। तथा च साधनमात्रनिषेधे ज्ञानस्यापि निषेधप्रसङ्गादन्यविशेषणमपि सार्थकमेवेति वाच्यम्। पथिन् शब्दस्य मुख्यार्थसंभवे लक्षणाश्रयणस्यान्याय्यत्वात्। 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा वा' इति, 'अथैतयोः पथोः न कतरेण च तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येव तृतीयं स्थानम्। तेनासौ लोको न सम्पूर्यते। तस्माज्जुगुप्सेत इति च मार्गद्वयभ्रष्टानां कष्टाज्जुगुप्सितस्य तृतीयमार्गश्रवणाच्च। तस्माद्देवयानाभाववचनं ब्रह्मविदामयुक्तमत्र।

तथा 'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च' इत्यप्रतीकोपासकानां ब्रह्मप्राप्तिमुक्त्वा 'तत्क्रतुश्च' इति तत्र हेतुरुक्तः। 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति अथेतः प्रेत्य भवति' इति तत्क्रतोस्तत्प्राप्त्यभिधानात्। एवं स्थिते सूत्रार्थे अप्रतीकोपासकानां हिरण्यगर्भप्राप्त्यभिधानं सूत्रविरुद्धम्।

न च तदुपासनमपि हिरण्यगर्भविषयमेवेति वाच्यम्। 'सर्वत्र प्रसिद्धोपदेशात्' इत्यधिकरणे तदुपास्यस्य ब्रह्मत्वनिर्धारणात्। तथा 'सम्पद्याविर्भावः स्वेनशब्दात्' 'मुक्तः प्रतिज्ञानात्' इति ब्रह्मसम्पत्त्यनन्तरं मुक्तस्य स्वरूपाविर्भाव उक्तः। केन स्वरूपेणाभिनिष्पत्तिरिति वीक्षायां 'ब्राह्मेण जैमिनिरुपन्यासादिभ्य' इति ब्राह्मेणापहतपाप्मेत्यादिना सत्यकामः सत्यसङ्कल्प इत्येवमन्तेन 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा' इत्यादिना सर्वज्ञः सर्वेश्वर' इत्यादिना च रूपेण सम्पत्तिरिति जैमिनि पक्षमुक्त्वा, 'चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः'

इत्यन्वयेन चैतन्यरूपेणैव सम्पत्तिरित्योडुलोमिपक्षं चोक्त्वा, 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' एवमपि पारमार्थिकचैतन्यमात्रार्थस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽनवगतस्य ब्राह्मस्यैश्वररूपस्याप्रत्याख्यानात्, 'अविरोधं बादरायण आचार्यो मन्यत' इति एवं बादरायणपक्षस्तैर्व्याख्यातः। एवं चाज्ञानप्रभवत्वात् समस्तस्य प्रपञ्चस्य ज्ञानादज्ञाननाशे तन्मूलस्य कृत्स्नस्य प्रपञ्चस्य निरन्वयनाशादात्मस्वरूपमात्रेणावस्थानं मुक्तिरिति पक्षो बादरायणस्याभिप्रेत इति स्फुटमेव।

तथा 'एष सम्प्रसादोऽस्माच्छरीरान् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपणाभिनिष्पद्यत, इत्यस्य, स यदि पितृलोकामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते' इत्यादिवाक्यस्य च दहरविद्यागतत्वेऽपि, सङ्कल्पादेव तच्छ्रुतेरिति सूत्रस्यापि ब्राह्मेणेति पूर्वोक्तसत्यसङ्कल्पत्वोपजीवित्वेऽपि, पूर्वसूत्रं निर्गुणविद्याविषयं इदं सगुणविद्याविषयमिति विभागकथनं निर्मूलकम्। 'अत एवचानन्याधिपतिः' अत एव सत्यसङ्कल्पत्वाच्च। शब्दोक्तायाः 'सस्वराड्भवति' इति श्रुतेश्चानन्याधिपतिर्मुक्तो भवति नास्यान्योऽधिपतिर्भवतीत्यर्थः। इदमप्यनन्याधिपतित्वं सगुणविद्योपासनया हिरण्यगर्भलोकगतस्येति तैरुक्तम्। नच तद्युक्तम्। तस्य हिरण्यगर्भपरमेश्वररूपाधिपतिद्वयत्वेनानन्याधिपतित्वाभावात्।

तथा 'अभावं बादरिराह ह्येवम्' इति। 'नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति छान्दोग्याष्टमाध्यायगतवाक्येन मुक्तस्य शरीरं नास्तीति बादरायणपक्षमुक्त्वा, 'अभावं जैमिनिर्विकल्पा

मननात्' स एकधा भवति त्रिधा भवति पञ्चधा' इत्यादिना सप्तमाध्यायगेतन वाक्येन मुक्तस्य शरीरमस्तीति जैमिनिपक्ष मुक्त्वा, 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति श्रुतिद्वयप्रामाण्यादुभयाविधं भवतीति। मुक्तस्य च सत्यसङ्कल्पत्वात्। यस्य सशरीरत्वसङ्कल्पः 'सशरीरो भविष्यामि 'इति तस्य शरीरित्वम्, यस्य त्वशरीरित्वसङ्कल्पः तस्याशरीरित्वं' इति बादरायणेन स्वपक्ष उक्तः। तथैव तैरपि व्याख्यातः। एतच्चाध्यायद्वयेऽपि विद्याया एकत्वे घटते, अन्यथा विद्याभिदेन पक्षद्वयस्यापि व्यवस्थितत्वात्। सङ्कल्पानुरोधेन व्यवस्थायोगात्।

एवं स्थिते सप्तमाध्यायो निर्गुणब्रह्मप्रतिपादकः, अष्टमाध्याये सगुणविद्याविधिः, सगुणविद्याफलमेव एकधा भवतीत्यादिनोच्यमानानिर्गुणविद्यास्तुतयेऽत्र कीर्तितमित्याद्यभिधान मूलकं, 'षष्ठाध्याये उपास्यस्य ब्रह्मणः कार्यकारणानन्यत्वेन प्रतिपादनं, सप्तमेन च तस्यैव वचनादिषु व्यस्तेषूपासनं, समस्तेन भूमत्वेन चोपासनं चोक्तम्। अष्टमेन चोपासनस्थानं हृदयादि, उपास्यस्य ब्रह्मणः कामादयो गुणाः, उपासनाङ्गानि कानिचित्, उपासकस्य देवयानेन पथा ब्रह्मप्राप्तिः, ब्रह्मप्राप्त्यनन्तरं च सकलकामावाप्तिरित्येवमादिकमुच्यत' इति छान्दोग्यभाष्ये तैरन्यैश्चाध्यायत्रयस्याप्येकवाक्यत्वस्योक्तत्वात्।

तथा "प्रदीपवदावेशस्तथा हि दर्शयति" इत्यत्र मुक्तस्यानेकशरीरपक्षे किं तानि शरीराणि सात्मकानि उत निरात्मकनीति संशये एकेनैव शरीरेण योगादितराणि निरात्मकनीति पूर्वपक्षं कृत्वा, यथा दीप एकः अनेकदीपभावमापद्यानेकवर्तिष्वाविशति विकारशक्तियोगात्, एवं मुक्त एकोऽपि ऐश्वर्यशक्तियोगादनेकशरीराण्याविशतीति सिद्धान्तितम्। तदेत-

ज्जीवस्य विभुत्ववादिनामसमञ्जसम्। किं सर्वाणि शरीराणि सात्मकानि उत निरात्मकानीति संशयस्य, निरात्मकान्यात्मन एकेनैव शरीरेण योगादिति पूर्वपक्षस्य च प्रतिपादनेन, एक-भावमैश्वर्यवशादापद्य शरीराण्याविशतीति सिद्धान्तस्य च तस्मिन् पक्षे असामञ्जस्यात्।

तथा मुक्तस्य कथमनेकशरीरावेशादिलक्षणमैश्वर्यमभ्युप-गम्यते। यावता कं विजानीयात्, नतु तद्द्वितीयमस्ति, ततोऽन्यद्विभक्तं यद्विजानीयात्, स एव द्रष्टा अद्वैतो भवति, इत्येवं जातीयकनिर्विशेषविज्ञानं वारयतीत्याशङ्कायां, 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि'—सुषुप्त्युत्क्रा-न्त्योरन्यतरापेक्षयेदं विशेषविज्ञानभाववचनम्, प्रकरणान्यव-शात्तथा प्रतीतेरित्युक्तम्।

केचिदत्र सम्पत्तिशब्देन कैवल्यावस्थोच्यत इति तदपेक्षया विशेषविज्ञानभाववचनमित्याहुः। तेषां पूर्वापरविरोधः प्रसज्यते। 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यादिना मुक्तस्य सर्वज्ञ-त्वमुक्तं इदानीं ज्ञानाभाव उच्यते इति। किं बहुना यानि यानि यैरसाधाण्येनाभ्युपगम्यन्ते तानि सर्वाणि सूत्रितान्येव। सूत्रेषु तद्वाचकशब्दानां क्वाप्यदर्शनात्। एवमन्यत्र सूत्रस्यापि विरोधोऽस्त्येव। विस्तरभयादुपरम्यते।

तदेवं सूत्रानुसारिव्याख्यानानामुत्सन्नत्वात् विद्यमानानां च सूत्राननुसारित्वात् सूत्रानुसारिणी व्याख्येयमारभ्यते। तत्र स्वाध्यायोऽध्येतव्य इति अध्ययनविधौ तव्यप्रत्ययेन स्वाध्याय-स्याध्ययनसंस्कार्यता प्रतीयते। उत्पत्त्यादीनामसंभवात्। संभ-वेऽपि वा अन्वयव्यतिरेकसिद्धत्वेन विधिवैयर्थ्यात्, संस्कारश्च साधननिवेशेन व्रीहीणामिव स्वाध्यायस्य साधनताप्रकरणा-

दिना प्रतीयते अध्ययनविधेरनारभ्याधीतत्वात् । तथाचानेनैव साधनताप्रतीतिर्वाच्या । अध्ययनसंस्कृतेन स्वाध्यायेनेष्टं भावये-दिति "पुरोहितं वृणीते" इत्यत्र वरणसंस्कृतेन पुरोहितेनेष्टं भावयेदिति यथा । एवं च स्वाध्यायस्य साधनतयोपादे-यत्वात्तद्गतमेकत्वं विवक्षितमिति एकस्यैव वेदस्याऽध्ययन-सिद्धिः । इतरथा 'ग्रहं सम्मार्ष्टी' त्यादाविव स्वाध्यायस्य संस्कार्यतयोद्देश्यत्वात्तद्गतमेकत्वमविवक्षितमिति सर्वत्र ग्रह-सम्मार्गवत्सर्ववेदाध्ययनं प्राप्नुयात् । एवं च स्वाध्यायेनेष्टं कुर्यादित्यत्र किं तदिष्टद्वारमिति वीक्षायां दृष्टे सत्यदृष्टकल्पना-नुपपत्तेरर्थावबोध एवेष्टद्वारमिति कल्प्यते । तस्याप्यनुष्ठान-द्वाराभ्युदयनिश्रेयसहेतुत्वेन पुरुषार्थद्वारत्वा[1]पपत्तेः । यत्र राज-सूयादिवाक्याध्ययनादौ ब्राह्मणादेर्दृष्टप्रयोजनं नास्ति । अनुष्ठानासंभवात् । तत्रानन्यगत्या जपादिद्वारा पुरुषार्थपर्यव-सायित्वम् । यत्रादृष्टद्वाराऽसंभवात्तत्र दृष्टद्वारेणैव पुरुषार्थपर्या-यित्वम् । एवं चाध्ययनविधेरर्थबोधसापेक्षत्वादर्थावबोधस्य च सन्दिग्धे विषय विचारसापेक्षत्वाद्विचारोऽप्ययनविधिना-क्षिप्तः । ततश्चाध्ययनानन्तरं सर्वोऽपि वेदार्थो विचारणीयः । तत्र काण्डस्य प्राथम्यात्तदर्थविचारः प्रथमं जैमिनिना कृतः । तद्विचारादेव विद्याविधयोऽपि विचारितप्रायाः । तद्विषयीभूतं तु ब्रह्म विचारितम् । तच्च परमसूक्ष्मत्वाद्विचारार्हमेवेति प्राधा-न्येन तद्विचारं प्रतिजानीते भगवान् बादरायणाचार्यः अथातो ब्रह्मजिज्ञासेति ।

न च ब्रह्मविचारस्याध्ययनविधिप्रयोज्यत्वे 'तद्वि-ज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'

---

[1] पपत्तिः—पा.

इत्यादिना पृथग्ब्रह्मोपदेशविधिरनर्थः स्यादिति वाच्यम् । न हि मीमांसापाठमात्रादेव कर्मविद्याया अनुष्ठानं सिध्यति । तावता सन्दिग्धवाक्यार्थनिर्णयेऽपि नानाशाखागताङ्गोपसंहारेण प्रयोगस्यापरिज्ञानात् । किं तु कल्पसूत्राध्ययनेन तत्तत्कर्माभिज्ञोपदिष्टप्रयोगवचनेन च यथासंभवं प्रयोगान् ज्ञात्वा कर्मानुष्ठानम् । एवमिहापि 'आचार्यादेव विद्यां विदित्वा साधिष्ठं प्रापत्' इत्येवमादिशास्त्रात्तद्विद्याभिज्ञादाचार्यादीदृशं ब्रह्मात्रोपास्यमेतावद्गुणविशिष्टमेतानि चोपासनस्य पूर्वोत्तराण्यङ्गानि, ईदृशश्चोपासकः तस्य चैतद्व्रतं, ईदृशानि चोपासनानि, ईदृश्युपासकस्य गतिः, ईदृशी च फलप्राप्तिरित्येवंविधोपदेशमन्तरेण विद्यानुष्ठानासिद्धेः । तदुपदेशविधेरर्थवत्त्वादेव[1] नाध्ययनविधिर्विचारप्रयोजकः । तस्याक्षरग्रहणमात्रपर्यवसानत्वात् । किं त्वध्ययनविधिरपि तत्क्रतुविधिरेव स्वार्थस्य धर्मस्य ज्ञात्वानुष्ठेयत्वात् तैरेव धर्मविचार आक्षिप्यत इति मतम् । तेषामपि क्रतुविधिवद्विद्याविधेरपि विचारप्रयोजकत्वात ब्रह्मविचारोऽपि इदानीं कर्तव्य एव ।

नचेदानीं विद्यानुष्ठानाभावान्न ब्रह्मविचारः कर्तव्य इति वाच्यम् । तर्हीदानीमग्नीहोत्राद्यष्ठानाभावात्तद्विचारोऽपि न कर्तव्य इति तुल्यम् । यदि 'बुध्द्वा कर्माणि यत्कामयेत तदारभेत' इति स्मृतेः स्वीकर्तव्याश्रमान्तरे कर्मणामवश्यकर्तव्यत्वात् तद्विचार इति विद्यायामपि तुल्यः । वस्तुतो ब्रह्मचारिणो दाराग्निपरिग्रहाभावादग्निहोत्राद्यनुष्ठानासंभवेऽपि विद्यायाः सर्वाश्रमसाधारण्यात् ब्रह्मचारिणोऽपि युक्तम् । एवमपि चोद्गीथाद्यङ्गावबद्धोपासनानामधिकृताधिकारत्वेन कर्मानुष्ठानकाल एव

---

[1] देषां-पा.

कर्तव्यत्वेन तद्विधेयीभूतब्रह्मविचारोऽपि इदानीं कर्तव्य एव। अथ शब्देन धर्मविचारानन्तर्यमुच्यते। नच तदानन्तर्ये मानाभावः 'शास्त्रयोनित्वात्' 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' शेषत्वात् पुरुषार्थवादः यथान्येष्विति जैमिनिः 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' 'नानाशब्दादिभेदात्' हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्'। नचाधिकारिकमपि पतनानुमानात्तदयोगात्' उपपूर्वमपित्वेके भावमशनवत्तदुक्तं' इत्येवमादिषु सूत्रेषु पूर्वतन्त्रसिद्धानां वेदप्रामाण्यभेदशेषत्वाधिकारादीनामुपजीवनेन तदानन्तर्यस्यावश्यवक्तव्यत्वात्। अत एव पूर्वोत्तरमीमांसात्वप्रसिद्धिरपि सङ्गच्छते। अतः शब्दो हेत्वर्थः। यस्मात् स्वाध्यायो विवक्षितार्थः ब्रह्म च परिशेषितं तस्मात्तज्जिज्ञासा कर्तव्येति ब्रह्म विचार्यं नवेति सन्देहः। नेति तावत्प्राप्तम्। कृत्स्नस्य वेदस्य पूर्वतन्त्रविचारितत्वात्। ब्रह्मणोऽपि वेदार्थत्वात्। नच कृत्स्नस्य वेदस्य विचारितत्वसिद्धिः।

तस्मादुक्तेन रूपेण विचार्यं गुरुसेवया।
ब्रह्मकैवल्यफलदमागमैर्लिङ्गशाब्दितम्। ॥ १ ॥
अविनाभूतचिच्छक्तिप्रसादान्मोक्षमाप्नुयात्।
श्रोतव्यवाक्यविहितं श्रवणं श्रुतिवाक्यतः ॥ २ ॥
भाषाप्रबन्धैर्यज्ज्ञानं यच्च पौरुषवाक्यतः।
न तस्य चात्र ज्ञानस्य पुरुषार्थैकहेतुता ॥ ३ ॥
तस्माद्वैदिकविज्ञानं साक्षान्मुक्तिप्रदं नृणाम्।
अस्मिन्नर्थे बहुग्रन्थाः प्रसृता भाष्यदर्शिताः ॥ ४ ॥
वैदिको भाष्यसन्दर्भस्तान्त्रिकाणां न विद्यते।
यश्चायं भाष्यसन्दर्भः शान्तिपाठपुरस्सरम् ॥ ५ ॥

विरक्तैर्विषयस्तोमे विज्ञेयो गुरुसेवया ।
शंनो मित्रादिका मन्त्रास्तत्र सन्दर्शिता बुधैः ॥ ६ ॥
कथं वा वीरशैवानां तादृगर्थस्य सङ्गतिः ।
अत्रायं सम्प्रदायाध्वा नीलकण्ठेन तन्यते ॥ ७ ॥
वीरशैवैर्गुरुकृपासुधयासिच्य योगतः ।
दीक्षयाङ्कुरितं चैव ब्रह्मशब्देन शाब्दितम् ॥ ८ ॥
लिङ्गाङ्गयोः सामरस्यं महावाक्योपदेशवत् ।
पञ्चाक्षरमहामन्त्राद्बोधनीयं विपश्चिता ॥ ९ ॥
नमःशब्देन जीवत्वं शिवेति परमात्मनि ।
आयेत्यैक्यं गतो मन्त्रस्तेन पञ्चाक्षरः स्मृतः ॥ १० ॥
इति ब्रह्मोत्तरे खण्डे मन्त्रार्थस्य विचारणात् ।
आगमोक्तांस्तदर्थांश्च विज्ञायैवोपदेशतः ॥ ११ ॥
स्थूलपञ्चाक्षरार्थोऽयं श्रुतिवाक्यसमीरितः ।
कारिकार्थविवेकेन सङ्ग्राह्योऽथ मुमुक्षुभिः ॥ १२ ॥
प्राचीनो भाष्यसन्दर्भः शम्भोर्नानुमतस्ततः ।
यतः साम्बशिवः साक्षादन्वशान्मामहर्मुखे ॥ १३ ॥
व्यासीयसूत्रसन्दर्भे वीरशैवानुसारतः ।
व्याचक्ष्व विमला बुद्धिरुदेति तव तत्कृते ॥ १४ ॥
इत्येवं कारिकारूपं श्रुत्यर्थानां विचारणम् ।
अधीत्य गुरुकारुण्यादपवर्गं समश्नुते ॥ १५ ॥
य इमं पठते ग्रन्थं तस्य भुक्तिः करे स्थिता ।
पञ्चाक्षरोऽयं मन्त्रश्च शान्त्यर्थे विनियुज्यते ॥ १६ ॥
तदर्थः प्राप्यते तस्मात् कारिकार्थविचारणात् ।
कारिकार्थं समुत्थाप्य यः प्रचारयति स्वयम् ॥ १७ ॥
अहं तस्य पदद्वन्द्वं शिरसा धृतवान् पुनः ।

अशैवे न प्रदेया स्यात् कारिका शिवभावदा ॥ ९८ ॥
श्रुत्वा दद्याच्छ्रावयित्रे वेदोक्तामेव दक्षिणाम् ।
गृहस्थाय धनं धान्यं सस्यपूर्णां वसुन्धराम् ॥ ९९ ॥
सालङ्कारां विरक्तेभ्यो दद्यात्तदनुशासनात् ।
तदङ्गं भोजयद्विद्वान् सहस्रं शतमेव वा ॥ २० ॥
ज्ञानिनः शाम्भवा (श्रान्ते) अन्ते सायुज्यं यान्ति शम्भुना ।

इति श्रीमद्विशिष्टाद्वैतासिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञ नील-
कण्ठशिवाचार्यकृते निगमागमसारसङ्ग्रहे क्रियासारे
चतुर्थोपदेशः

*

॥ श्रीः ॥

# क्रियासारपरिशिष्टम्

विषयवाक्याधिकरणार्थसंग्रहसहितानि ब्रह्मसूत्राणि.

## प्रथमेऽध्याये प्रथमःपादः

### १. जिज्ञासाधिकरणम्. *क्रि. १५, ५६–११८.

[सू. १. अथातो ब्रह्मजिज्ञासा]

[1]परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं इत्यादिवाक्यं विषयः॥

ब्रह्म विचार्यं नवेति संशये, [2]'अयमात्मा ब्रह्म' इत्यादिना प्रत्यक्षसिद्ध एवात्मनि ब्रह्मत्वोपदेशात् असन्दिग्धत्वान्न विचार्यमिति पूर्वपक्षे, उक्तोपदेशवत् [3]'ज्ञाज्ञौ द्वौ' इत्यादि भेदोपदेशस्यापि सत्त्वात् संशयसंभवात् ब्रह्म विचार्यमेवेति, तदर्थं शास्त्रारम्भोऽपि युक्त एवेति च सिद्धान्तः॥

### २. जन्माद्यधिकरणम् २०, ११९–१४०.

[सू. २. जन्माद्यस्य यतः]

[4]यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति॥ [5]सत्यं ज्ञान-

* क्रियासारे १५शे पृष्ठे ५६शश्लोकमारभ्य ११८तमश्लोकपर्यन्तः भागः एतदधिकरणव्याख्यारूपः इत्यर्थः. एवमग्रेऽपि आद्या सङ्ख्या क्रियासारग्रन्थ पुटसङ्ख्याबोधिनी, द्वितीयाद्याः श्लोकसङ्ख्या बोधिन्यः इति ज्ञेयम्.

[1] मुण्डके. १-२-१२. प्रायशोऽत्र श्रीकण्ठभाष्यानुसारेणैव अधिकरणविभागः विषयवाक्यसङ्ग्रहः अधिकरणार्थसङ्ग्रहश्च कृत इति विभावनीयम्.
[2] माण्डू. २. नृ. पू. ४-२. नृसिंहो. १-२. बृह. २-५-१९. गणे. ५-६. बह्वृ. ४.
[3] श्वेता. १-९. ना. प. ९-८. भवसं. २-३. [4] तै. उ. ३-१ [5] तै. २-१-१.

मनन्तं ब्रह्म ॥ [1]ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः। [2]प्रधानक्षेत्रज्ञपतिर्गुणेशः संसार-मोक्षस्थितिबन्धहेतुः इत्यादि वाक्यं विषयः। एवमग्रेऽपि ॥

जगज्जन्मादिकं ब्रह्मणो लक्षणं संभवति वा न वेति संशये, जन्मादेर्जगन्निष्ठत्वेन वैयधिकरण्यात् तत् ब्रह्मणो लक्षणं न भवतीति पूर्वपक्षे, अचिन्त्यशक्तौ ब्रह्मणि हेतुहेतुमद्भावसम्बन्धेन तत्सामा-नाधिकरण्यसंभवात् तटस्थलक्षणं संभवत्येवेति सिद्धान्तः ॥

## ३. शास्त्रयोनित्वाधिकरणम् २२, १४१–१४२.

[सू. ३. शास्त्रयोनित्वात्.]

[3]अस्य महतो भूतस्य निःश्वसितं एतदृग्वेदः यजुर्वेदः साम-वेदः इत्यादि ॥

किं तद्ब्रह्म शास्त्रैकगम्यमुत प्रमाणान्तरेणापीति संशये, अनुमानगम्यत्वसंभवात् प्रमाणान्तराप्राप्तिविषयत्वाभावात् न शास्त्रैकगम्यत्वमिति पूर्वपक्षे, शास्त्रसंमतविचित्रानन्तशक्तियुक्त-त्वेन अनुमानगम्यत्वाभावात् शास्त्रैकगम्यत्वमेवेति सिद्धान्तः ॥

## ४. समन्वयाधिकरणम् २२, १४३–१६६.

[सू. ४. तत्तु समन्वयात्.]

अस्य सर्ववेदवेदान्तागमवाक्यानि विषयः। वेदान्तवाक्यानां ब्रह्मबोधकत्वं संभवति वा नवेति संशये, शब्दसामान्यस्यैव कार्या-र्थबोधकतया सिद्धवस्तुबोधनासंभवात् न संभवतीति पूर्वपक्षे, पुत्रस्ते जातः इत्यादौ सिद्धार्थबोधनस्यापि दृष्टत्वेन बाधका-भावात् सिद्धब्रह्मबोधकत्वं संभवत्येवेति सिद्धान्तः ॥

---

[1] महाना. १०-१०. [2] श्वेता. ६-१६. भवसं. २-४६. [3] बृ. उ. २-४-१०, ४, ५-११. मैत्रा. ६-३२.

## ५. ईक्षत्यधिकरणम्. २४, १६७–२०९.

[सू. ५ ईक्षतेर्नाशब्दम्. ६ गौणश्चेन्नात्मशब्दात्. ७ तन्निष्ठस्य मोक्षोपदेशात्. ८ हेयत्वावचनाच्च. ९ प्रतिज्ञाविरोधात्. १० स्वाप्ययात्. ११ गतिसामान्यात्. १२ श्रुतत्वाच्च.]

[1]सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेय इत्यादि ॥

सर्वजगत्कारणत्वेन श्रूयमाणं सत् किं प्रधानमुत ब्रह्मेति संशये, प्रधानस्यैव अचेतनत्वेन सत्त्वाद्याश्रयत्वेन च अचेतनजगदाकारपरिणामोपपत्तेः प्रधानमेवेति पूर्वपक्षे, चेतनधर्मस्य श्रुत्युक्तेक्षणस्य प्रधानेऽसंभवात् तद्ब्रह्मैवेति सिद्धान्तः ॥

## ६. आनन्दमयाधिकरणम् २७, २१०–२२८.

[सू. १३ आनन्दमयोऽभ्यासात्. १४ विकारशब्दान्नेति चेन्न प्राचुर्यात्. १५ तद्धेतुव्यपदेशाच्च. १६ मान्त्रवर्णिकमेव च गीयते. १७ नेतरोनुपपत्तेः. १८ भेदव्यपदेशाच्च. १९ कामाच्च नानुमानापेक्षा. २० अस्मिन्नस्य च तद्योगं शास्ति.]

[2]तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः इत्युपक्रम्य, [3]तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योन्तर आत्मानन्दमयः इत्यादि वाक्यम् ॥

आनन्दमयः जीवो वा ईश्वरो वेति संशये, पञ्चावयवशरीरादि संबन्धोक्तेः जीव एवेति पूर्वपक्षे, [4]सैषानन्दस्येत्यादि निरतिशयाभ्यस्यमानानन्दवत्त्वस्य जीवेऽसंभवात् ईश्वर एवेति सिद्धान्तः ॥

## ७. अन्तरधिकरणम् २९, २२९–२३२.

[सू. २१ अन्तस्तद्धर्मोपदेशात्. २२ भेदव्यपदेशाच्च.]

[5]अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः। तस्य यथा

[1] छां. ६-२-१. पैङ्गलो. १-१. [2] तै. उ. २-१-१. [3] तै. उ. २-५. [4] तै. उ. २-८. [5] छां. १-६ ७.

कप्यासं पुण्डरीकं एवमक्षिणो तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यः य एवं वेदेत्याधिदैवतम् । अथाध्यात्ममपि, य एषोन्तरक्षिणि पुरुषो दृश्यते, इत्यादि वाक्यम् ॥

अन्तरादित्ये चक्षुषि चोपास्यत्वेन विहितः कश्चिज्जीवः उत परमेश्वर इति संशये, सर्वाधारे ईश्वरे आदित्यान्तर्भागरूपपरिच्छिन्नप्रदेशवर्तित्वचक्षुर्द्वयवैशिष्ट्यादेरसङ्गत्वात् जीवविशेष एवेति पूर्वपक्षे, तत्रोक्तानां सर्वपापराहित्यादीनां जीवेऽसंभवात् परमेश्वर एवेति सिद्धान्तः ।

## ८. आकाशाधिकरणम् २९, २३३.

[सू. २३. आकाशस्तल्लिङ्गात्. २४. अत एव प्राणः.]

[1] अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणं इत्यादि, [2] प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति, प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता इत्यादि च ॥

इमावाकाशप्राणशब्दौ किं प्रसिद्धभूताकाश पञ्चवृत्तिप्राणवायुवाचकौ उतेश्वरवाचकाविति संशये, प्रसिद्धपरित्यागे मानाभावात् नेश्वरवाचकाविति पूर्वपक्षे, उक्तानां सर्वभूतोत्पत्तिलयकारणत्वसर्वभूतसंवेशनोद्गमनादीनां ईश्वरातिरिक्तेऽसंभवात् ईश्वरवाचकावेवेति सिद्धान्तः ॥

## ९. ज्योतिरधिकरणम् २९, २३४–२३७.

[सू. २५. ज्योतिश्चरणाभिधानात्. २६. छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथाहि दर्शनम्. २७. भूतादिपाद-

[1] छां. १-९-१. [2] छां.–१–११–२.

व्यपदेशोपपत्तेश्चैवम्. २८. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्.]

[1]अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन् अन्तः पुरुषे ज्योतिः इत्यादि॥

अत्र दिवि श्रूयमाणं ज्योतिः सूर्य एव वा ईश्वरो वेति संशये, प्रसिद्धत्वात्सूर्य एवेति पूर्वपक्षे, सर्वभूतानां एतज्ज्योतिरेकांशत्वाभिधानात् परिच्छिन्ने सूर्ये तदसंभवाच्च ईश्वर एवेति सिद्धान्तः॥

## १०. प्राणाधिकरणम् ३०, २३८–२४६.

[सू. २९. प्राणस्तथानुगमात्. ३०. न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्. ३१. शास्त्रदृष्ट्या तूपदेशो वामदेववत्. ३२. जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्.]

[2]प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च, तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति, स होवाच प्रतर्दन त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति. स होवाच. प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व इत्यादि॥

[3]अत्र उपास्यत्वेन निर्दिष्टः किमिन्द्र एव उत ईश्वर इति संशये, इन्द्रेणैव 'मां' इति आत्मनिर्देशात् प्रसिद्ध इन्द्र एवेति पूर्वपक्षे, ईश्वरासाधारणानां अजरत्वामृतत्वादीनां इन्द्रेऽसंभवात् परमेश्वर एवेति सिद्धान्तः॥

अयमत्र सङ्ग्रहः—

विचार्यं श्रेयसे ब्रह्म हेतुस्त्वं तस्य लक्षणम्।
तत्र शास्त्रं प्रमाणं स्यात् श्रुतयोऽस्मिन् समन्विताः॥ १॥
ईक्षणात् सत्परं ब्रह्म, तथानन्दमयः परः।
तथैव खान्तरादित्ये प्राणाकाशौ तथा परौ॥ २॥
ज्योतिः प्राणौ तथैवेशौ दशाद्ये पाद ईरिताः।

इति प्रथमाध्याये प्रथमपादः

---

[1] छां. ३–१३ ७. [2] कौ. त. ३–१. [3] कौ. त. ३–२.

## अथ प्रथमे द्वितीयः पादः

### १. सर्वत्र प्रसिद्ध्यधिकरणम् ३१, २४७-२७७.

[सू. १. सर्वत्र प्रसिद्धोपदेशात्. २. विवक्षितगुणोपपत्तेश्च. ३. अनुपपत्तेस्तु न शारीरः. ४. कर्मकर्तृव्यपदेशाच्च. ५. शब्दविशेषात्. ६. स्मृतेश्च. ७. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च. ८. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्.]

[1] सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषः यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः इत्यादिवाक्यं विषयः ॥

मनोमयत्वादिधर्मा परमेश्वरः जीवो वेति संशये, प्रकृतत्वाज्जीव एवेति पूर्वपक्षे सर्वकारणत्वसकलचिदचित्प्रपञ्चविशिष्टत्वादीनां अत्रोक्तानां जीवेऽसंभवात् परमेश्वर एवेति सिद्धान्तः ॥

### २. अत्त्रधिकरणम् २३, २७८.

[सू. ९. अत्ता चराचरग्रहणात्. १०. प्रकरणाच्च.]

[2]यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः इत्यादि ॥

अखिलजगद्भोक्तृतया श्रूयमाणः किं परमशिवः उतान्य इति संशये, परमकारुणिकस्य परमशिवस्य सर्वभक्षकत्वासंभवात् अन्य एवेति पूर्वपक्षे, कालविशेषे परमशिवस्यैव सर्वसंहर्तृत्वस्य शास्त्रसम्मतत्वाद्दोषाभावात् परमेश्वर एवेति सिद्धान्तः ॥

### ३. गुहाधिकरणम् ३४, २७९-२८०.

[सू. ११. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्. १२. विशेषणाच्च.]

[3] ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे।

---

[1] छा. ३-१४-१. [2] कठो. २-२५. [3] कठो. ३-१.

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः इत्यादि वाक्यं विषयः ॥

अत्र किं बुद्धिजीवौ विवक्षितौ उत जीवेशौ इति संशये सर्वव्याप्तस्येश्वरस्य देशविशेषप्रवेशकल्पनाया अनुचितत्वात् बुद्धिजीवावेवेति पूर्वपक्ष, सर्वव्याप्तत्वेऽपि तत्साक्षात्कारयोग्यदेशविशेषोपदेशे बाधकाभावात् जीवेश्वरावेवेति सिद्धान्तः ॥

## ४. अन्तराधिकरणम् ३४, २८१-२८८.

[सू. १३. अन्तर उपपत्तेः. १४. स्थानादिव्यपदेशाच्च. १५. सुखविशिष्टाभिधानादेव च. १६. श्रुतोपनिषत्कगत्यभिधानाच्च. १७. अनवस्थितेरसंभवाच्च नेतरः.]

[1] य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति, तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति इत्यादि ॥

अत्रान्तरक्षिण्युपदिश्यमानः ईश्वरोऽन्यो वेति संशये, स्थानविशेषनिर्देशादीश्वर इति पूर्वपक्षे, ईश्वरासाधारणधर्माणामुक्तानामन्यत्रासम्भवात् ईश्वर एवेति सिद्धान्तः ॥

## ५. अन्तर्याम्यधिकरणम् ३४, २८९-२९३.

[सू. १८. अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्. १९. न च स्मार्तमतद्धर्माभिलापात् शारीरश्च. २०. उभयेऽपि हि भेदेनैनमधीयते.]

[2] यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः इत्यादि ॥

उक्तः अन्तर्यामी ईश्वरः अन्यो वेति संशये, सर्वाधिकस्याखिलविकारशून्यस्य सर्वविकारास्पदप्रपञ्चानुप्रवेशोक्तिः अयुक्तेति अन्य एव कश्चिदिति पूर्वपक्षे, सर्वकारणस्य सर्वनियमनप्रयोजकीभूतैतादृशप्रवेशस्य युक्तत्वात् ईश्वर एवेति सिद्धान्तः ॥

---

[1] छा. ४-१५-१, ८-७-४. [2] बृह. ३-७-३.

## ६. अदृश्यत्वाधिकरणम् ३५, २९४-२९६.

[सू. २१. अदृश्यत्वादिगुणको धर्मोक्तेः. २२. विशेषणभेद व्यपदेशाभ्यां च नेतरौ. २३. रूपोपन्यासाच्च.]

[1] अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णं अचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः इत्यादि ॥

अक्षरशब्दवाच्यः ईश्वरो वा प्रधानादिर्वा इति संशये, महदादिपरिणामिनः प्रधानादेः भूतयोनित्वाद्युपपत्त्या प्रधानादिरेवेति पूर्वपक्षे, सर्वज्ञत्वादीनां धर्माणां तत्रासंभवात् ईश्वर एवेति सिद्धान्तः ॥

## ७. वैश्वानराधिकरणम् ३५, २९७--३०५.

[सू. २४. वैश्वानरः साधारणशब्दविशेषात्. २५. स्मर्यमाणमनुमानं स्यादिति. २६. शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते. २७. अत एव न देवताभूतं च. २८. साक्षादप्यविरोधं जैमिनिः. २९. अभिव्यक्तेरित्याश्मरथ्यः. ३०. अनुस्मृतेर्बादरिः. ३१. संपत्तेरिति जैमिनिस्तथाहि दर्शयति. ३२. आमनन्ति चैनमस्मिन्.]

[2] यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति इत्यादि वाक्यं विषयः ॥

अत्रोक्तः ईश्वरोऽन्यो वेति संशये, प्रादेशमात्रत्वादीनां ईश्वरेऽसंभवात् अन्य एव जाठराग्न्यादिरिति पूर्वपक्षे, द्युमूर्धत्वादेः परमेश्वरातिरिक्तेऽसंभवात् परमेश्वर एवेति सिद्धान्त ॥

अयमत्र संग्रहः—

मनोमयस्तथात्ता च सम्मतौ परमेश्वरौ ॥ ३ ॥
गुहां प्रविष्टौ जीवेशौ, अन्तरक्षिणि चेश्वरः ।
अन्तर्यामी च सर्वेषां अक्षरश्च तथेश्वरः ॥ ४ ॥
वैश्वानरश्चेश्वरः स्यात् द्वितीये सप्त वर्णिताः ।

इति प्रथमे द्वितीयः पादः

———

[1] मुण्ड. १-५. [2] छा०. ५-१८-१.

# अथ प्रथमे तृतीयः पादः

## १. द्युभ्वाद्यधिकरणम् ३६, ३०६-३१०.

[सू. १. द्युभ्वाद्यायतनं स्वशब्दात्. २. मुक्तोपसृप्यव्यपदेशाच्च. ३. नानुमानमतच्छब्दात् प्राणभृच्च. ४. प्रकरणात्. ५. भेदव्यपदेशात्. ६. स्थित्यदनाभ्यां च.]

[1] यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः, तमेवैकं जानथात्मानं अन्या वाचो विमुञ्चथामृतस्यैष सेतुः इत्यादि॥

द्युभ्वाद्याधारः परमेश्वरोऽन्यो वेति संशये, [2] वायुना सर्वाणि भूतानि संदृब्धानीत्यादि श्रुत्या ईश्वरभिन्न एव सर्वाधारः वाय्वादिः इति पूर्वपक्षे, आत्मशब्दश्रवणादिना परमेश्वर एवेति सिद्धान्तः॥

## २. भूमाधिकरणम् ३७, ३११.

[सू. ७. भूमा संप्रसादादध्युपदेशात्. ८. धर्मोपपत्तेश्च.]

[3] भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति, यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् इत्यादि वाक्यं विषयः॥

अत्र भूमा ईश्वरोऽन्यो वेति संशये, प्रकरणानुगुण्येन ईश्वरादन्यः प्राणादिरेवेति पूर्वपक्षे, सर्वापेक्षया आधिक्यप्रतिपादनात् परमेश्वर एवेति सिद्धान्तः।

## ३. अक्षराधिकरणम् ३७, ३१२-३१५.

[सू. ९. अक्षरमम्बरान्तधृतेः. १०. सा च प्रशासनात्. ११. अन्यभावव्यावृत्तेश्च.]

[4] एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायं इत्यादिवाक्यं विषयः॥

अक्षरशब्दवाच्यः ईश्वरोऽन्यो वेति संशये, वर्णे प्रसिद्धत्वात् जीवे प्रयोगसत्त्वाच्च वर्णो जीवो वा स्यादिति पूर्वपक्षे, आकाशान्तसकलप्रपञ्चधारणश्रवणात् परमेश्वर एवेति सिद्धान्तः॥

---

[1] मुण्ड. २-२-५. [2] बृ. ३-७-२. [3] छा. ७-२३-१. [4] बृ. ३-८-८.

## ४. ईक्षतिकर्माधिकरणम् ३७, ३१७–३२२.

[सू. १२. ईक्षतिकर्मव्यपदेशात्सः.]

[1] यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरुषमीक्षते इत्यादिवाक्यं विषयः ॥

अत्र ईक्षतिकर्मत्वेन श्रूयमाणः किमीश्वरः अन्यो वेति संशये, ब्रह्मलोकप्राप्तेः फलत्वेन श्रवणात् जीवादप्युत्कृष्टः कश्चन हिरण्यगर्भादिरेवेति पूर्वपक्षे, ईश्वरासाधारणशान्तत्वादिधर्मव्यपदेशात् ईश्वर एवेति सिद्धान्तः ॥

## ५. दहराधिकरणम् ३८, ३२३–३२९.

[सू. १४. दहर उत्तरेभ्यः. १५. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च. १६. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः. १७. प्रसिद्धेश्च. १८. इतरपरामर्शात्स इति चेन्नासम्भवात्. १९. उत्तराच्चेदाविर्भूतस्वरूपस्तु. २०. अन्यार्थश्च परामर्शः. २१. अल्पश्रुतेरिति चेत्तदुक्तम्.]

[2] अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमित्यादि ॥

अत्र श्रुतः दहराकाशः किं भूताकाशः उतेश्वर इति संशये आकाशपदस्य भूताकाश एव रूढत्वात् स एवेति पूर्वपक्षे, अपहतपाप्मत्वादिधर्माणां श्रुतानां, तत्रान्वयासंभवात् ईश्वर एवेति सिद्धान्तः ॥

## ६. अनुकृत्यधिकरणम् ३८, ३३०–३३२.

[सू. २२. अनुकृतेस्तस्य च. २३. अपि च स्मर्यते.]

[3] न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादि वाक्यं विषयः ॥

---

[1] प्रश्नो. ५-५. [2] छा. ८-१-१. [3] कठो. ५-१५. मु. २-२-१०. श्वेता. ६-१४. गुह्यका. ४५.

अत्र श्रूयमाणं प्रकाशकं वस्तु तेजोविशेष एव वा ईश्वरो वेति संशये, प्रकाशकत्वं तेजस एव धर्म इति नेश्वरः इति पूर्वपक्षे, स्वयं प्रकाशत्वे सति सर्वावभासकत्वं ईश्वरे एवोपपन्नमिति स एवेति सिद्धान्तः ॥

## ७. प्रमिताधिकरणम् ३९, ३३३–३३४.

[सू. २४. शब्दादेव प्रमितः. २५. हृद्यपेक्षया तु मनुष्याधिकारत्वात्.]

[1] अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूत भव्यस्य न ततो विजुगुप्सते इत्यादिवाक्यं विषयः ॥

इहोक्तः अङ्गुष्ठपरिमाणः जीवो वा ईश्वरो वेति संशये, नियतपरिमाणनिर्देशात् जीव एवेति पूर्वपक्षे, ईश्वरासाधारणधर्मनिर्देशानुगुण्येन सर्वशक्तः ईश्वर एवेति सिद्धान्तः ॥

## ८. देवताधिकरणम् ३९, ३३५–३४४.

[सू. २६. तदुपर्यपि बादरायणः सम्भवात्. २७. विरोधः कर्मणीति चेन्नानेकप्रवृत्तेर्दर्शनात्. २८. शब्द इति चेन्नातः प्रभावात्प्रत्यक्षानुमानाभ्याम्. २९. अत एव च नित्यत्वम्. ३०. समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च, ३१. मध्वादिष्वसम्भवादनधिकारं जैमिनिः. ३२. ज्योतिषि भावाच्च. ३३. भावं तु बादरायणोऽस्ति हि.]

[2] ततो देवा रुद्रं नापश्यन्, ते देवा रुद्रं ध्यायन्ति, ततो देवा ऊर्ध्वबाहवस्स्तुन्वन्ति, ओम् इत्यादिवाक्यं विषयः ॥

देवानां ब्रह्मविद्यायामधिकारोऽस्ति नवेति संशये, अर्थित्वसामर्थ्याभावान्नेति पूर्वपक्षे, अर्थित्वाद्यभावे प्रमाणाभावादस्त्येवेति सिद्धान्तः ॥

## ९. अपशूद्राधिकरणम् ४०, ३४५–३४८.

[सू. ३४. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि. ३५. क्षत्रियत्वगतेश्च, उत्तरत्र चैत्ररथेन लिङ्गात्. ३६. संस्कार-

[1] कठो. ४–१२. [2] अथर्वशिरः (रुद्रो, शिवो) १.

परामर्शात्तदभावाभिलापाच्च. ३७. तदभावनिर्धारणे च प्रवृत्तेः. ३८. श्रवणाध्ययनप्रतिषेधात् स्मृतेश्च.]

[1] जानश्रुतिर्ह पौत्रायणः श्रद्धादेयः बहुदायी बहुपाक्य आस, सह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्तीति, अथ ह हंसा निशायामतिपेतुः, तद्धैवं हंसो हंसमभ्युवाद. होहोयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम्। तन्मा प्रसाङ्क्षीः, तत्त्वा मा प्रधाक्षीरिति। तमुह परः प्रत्युवाच, कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थेति, यो नु कथं सयुग्वा रैक्व इति, यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्सवेद स मयैतदुक्तः इति ॥

तदु ह जानश्रुतिः पौत्रायणः उपशुश्राव सह सञ्जिहास एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति, यो नु कथं सयुग्वारैक्व इति। यथाकृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति, यत्किंच प्रजाः साधुकुर्वन्ति यस्तद्वेद यत्सवेद स मयैतदुक्त इति। स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय, तं होवाच, यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति। सोधस्ताच्छकटस्य पामानं कषमाणं उपोपविवेश, तं हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताविदमिति प्रत्येयाय ॥

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे, तं हाभ्युवाद, रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथः, अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स इति। तमु ह परः प्रत्युवाच, अहहारेत्वा शूद्र तवैव सह गोभिरस्त्विति। तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कं अश्वतरीरथं दुहितरं तदादायप्रतिचक्रमे। तं हाभ्युवाद रैक्वं इदं सहस्रं गवां अयं निष्कः अयमश्वतरीरथः इयं जाया अयं ग्रामः यस्मिन्नास्सेन्वेव मा भगवःशाधीति। तस्याह मुखमुपोद्गृह्णन्नुवाच, आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा इति। तद्धैते-

[1] छां. ४-१-१.

रैक्वपर्णानाम महावृषेषु यत्रास्मा उवास स तस्मै होवाच। इति-वाक्यं विषयः ॥

शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति नवेति संशय, अर्थित्व-सामर्थ्ययोः सत्त्वात् अस्त्येवाधिकार इति पूर्वपक्षे, अध्यय-नाधिकाराभावात् सामर्थ्याभावेन नाधिकार इति सिद्धान्तः ॥

## १०. कम्पनाधिकरणम् ४०, ३४९.

[सू. ३९. कम्पनात्.]

[1]यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति इत्यादिवाक्यं विषयः ॥

अयं कम्पनहेतुः किं परं ब्रह्म उत भूतविशेषः इति संशये, सकलाभयप्रदातुः परब्रह्मणः भयकार्यकम्पनहेतुत्वानुपपत्तेः भूत-विशेष एवेति पूर्वपक्षे, शासकत्वात्, अतिक्रमे भयहेतुत्वोपपत्तेश्च स कम्पनहेतुः परं ब्रह्मैवेति सिद्धान्तः ॥

## ११. ज्योतिरधिकरणम् ४०, ३४९.

[सू. ४०. ज्योतिर्दर्शनात्.]

[2]अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि तद्य-थैतान्यमुष्मादाकाशात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभि-निष्पद्यन्त एवमेवैष सम्प्रसादः अस्माच्छरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यत स उत्तमः पुरुषः इत्यादिवाक्यं विषयः ॥

अत्र मुक्तप्राप्यं परं ज्योतिः परमेश्वरः उतान्य इति संशये, पुरुषोत्तमशब्दस्य शिवे रूढ्यभावात् अन्य एवेति पूर्वपक्षे, तेन शब्देन परशिवाभिधाने बाधकाभावात् तदनुगुणधर्मविशेषाणां श्रवणाच्च परमेश्वर एवेति सिद्धान्तः ॥

## १२. अर्थान्तरत्वाधिकरणम् ४०, ३५०.

[सू. ४१. आकाशोऽर्थान्तरत्वादि व्यपदेशात्.]

[3]आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि सहाहं यशसां यशः

---

[1] कठो. ६–२. [2] छां. ८–१२–२. [3] छां. ८–१४–१.

श्वेतमदत्कमदत्कं श्वेतं लिन्दुमाभिगां लिन्दुमाभिगाम्। इति वाक्यं विषयः॥

अत्र आकाशः ईश्वरो वा भूतविशेषो वेति संशये अवकाशप्रदातृत्वादिना अन्वर्थत्वात् भूतविशेष एवेति पूर्वपक्षे नामरूपभेदस्य आत्मत्वस्य च श्रवणात् ईश्वर एवेति सिद्धान्तः॥

## १३. सुषुप्त्यधिकरणम् ४०, ३५०–४२३.

[सू. ४२. सुषुप्त्युत्क्रान्त्योर्भेदेन. ४३. पत्यादिशब्देभ्यः.]

[1] कतम आत्मेति योऽयं विज्ञानमयः (पुरुषः) प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः इत्यादिवाक्यं विषयः॥

अत्र विज्ञानमयः शिवो वा अन्यो वेति संशये, उपक्रमोपसंहारादिषु शरीरसंबन्धस्य स्पष्टं प्रतिपादनात् जीव एव नेश्वरः इति पूर्वपक्षे, सर्वाधिपतित्वाद्युक्त्या उक्तसर्वज्ञत्वादिधर्माणामन्यत्रासंभवाच्च शिव एवेति सिद्धान्तः॥

अयमत्र सङ्ग्रहः—

द्युभ्वाद्याधार ईशः स्यात् भूमापि परमेश्वरः।
अक्षरश्चेशतेः कर्म तथा दहर एव च॥
सर्वावभासकोऽङ्गुष्ठपरिमाणोऽपि शङ्करः।
विद्याधिकारिणो देवाः न शूद्रा इति सम्मतम्॥
शिवः कम्पनहेतुः स्यात् परंज्योतिः शिवः स्मृतः।
आकाशविज्ञानमयौ शिवौ उक्ताः त्रयोदश॥

इति प्रथमे तृतीयः पादः

---

# अथ प्रथमे चतुर्थः पादः

## १. आनुमानिकाधिकरणम्. ४६, ४२४–४३३.

[सू. १. अनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च। सूक्ष्मं तु तदर्हत्वात्. ३. तदधीनत्वादर्थवत्. ४. ज्ञेयत्वावचनाच्च. ५. वदतीति चेन्न प्राज्ञो हि प्रकरणात्. ६. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च. ७. महद्वच्च.]

[1] बृह. ४–३–७.

[1] इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः। महतः परमव्यक्तं अव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः। इत्यादि-वाक्यं विषयः॥

अत्र महतः परत्वेनोच्यमानं किं साङ्ख्यसम्मतं प्रधानं उत शरीरमिति संशये, सांख्यमतप्रत्यभिज्ञानात् प्रधानमिति पूर्वपक्षे, [2] आत्मानं रथिनं इत्यादिरूपणानुसारेण शरीरमेवेति सिद्धान्तः॥

## २. चमसाधिकरणम् ४७, ४३४–४३६.

[सू. ८. चमसवदविशेषात्. ९ ज्योतिरुपक्रमा तु तथाह्यधीयत एके. १०. कल्पनोपदेशाच्च मध्वादिवदविरोधः.]

[3] अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपां। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः इत्यादि॥

अत्र अजाशब्देन किं प्रकृतिरुच्यते उत परः इत्याशङ्कायां, वर्णोपलक्षितगुणत्रया प्रकृतिरेवेति पूर्वपक्षे, उपक्रमाद्यानुगुण्येन पर एवेति सिद्धान्तः॥

## ३. सङ्ख्योपसङ्ग्रहाधिकरणम् ४८, ४३७–४३८.

[सू. ११. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च. १२. प्राणादयो वाक्यशेषात्. १३. ज्योतिषैकेषामसत्यन्ने.]

[4] यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः। तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् इत्यादि॥

पञ्च पञ्चजना इत्यत्र किं साङ्ख्याभिमततत्त्वानि विवक्षितानि उत श्रौतानीति संशये, पञ्चधागुणितपञ्चसङ्ख्याकाणां तत्त्वानां साङ्ख्य एव प्रसिद्धत्वेन तान्येवेति पूर्वपक्षे, पञ्चजनशब्दस्य इन्द्रियार्थकतया तन्निष्ठपञ्चत्वबोधकेनानेन पञ्चेन्द्रियाण्येवोच्यन्ते इति सिद्धान्तः॥

---

[1] कठो. ३-१०. गुह्यका, ४१. [2] कठो. ३–३. पैङ्गलो. ४-१. भवसं. २–१०. [3] महाना. ८–४. ना. पू. ता. ५-५. [4] बृ. ४–४–१७.

## ४. कारणत्वाधिकरणम् ४८, ४३९–४४०.

[सू. १४. कारणत्वेन चाकाशादिषु तथा व्यपदिष्टोक्तेः. १५. समाकर्षात्.]

[1] आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योन्नऽम्, अन्नात्पुरुषः, [2] तत्तेजोऽसृजत इत्यादिवाक्यं विषयः॥

वेदान्तवाक्यानि जगत्कारणत्वेन किं परं ब्रह्मैवाभिदधति उतान्यदेवेति संशये, अन्योन्यविरुद्धार्थाभिधायकपरस्सहस्रवाक्यसत्त्वात् परंब्रह्मैव जगत्कारणमिति वेदान्तैर्न सिद्ध्यतीति पूर्वपक्षे प्राबल्यदौर्बल्यपौर्वापर्यादिविमर्शे सति सर्वेषां वाक्यानां ब्रह्मकारणपरत्वांशे सामरस्यसम्भवात् नैव दोष इति सिद्धान्तः॥

## ५. बालाक्यधिकरणम् ४८, ४४१–४४२.

[सू. १६. जगद्वाचित्वात्. १७. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्. १८. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके.]

[3]गार्ग्यो ह वै बालाकिः अनूचानः संस्पष्ट आस नोऽयमुशीनरेषु सत्सु मत्स्येषु कुरुपाञ्चालेषु काशिविदेहेष्विति सदहाजातशत्रुं काश्यमेत्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं दद्मः एतस्यां वाचि जनको जनक इति ह वै जनाः धावन्तीति इत्युपक्रम्य [4]तत आह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुरेतावन्नु बालाका इति एतावाद्धीतिहोवाच बालाकिः तं होवाचाजातशत्रुः मृषा वै किल मासंवदिष्ठा ब्रह्म ते ब्रवाणीति सहोवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म सह्वैर्वेदितव्य इति तत उह बालाकिः प्रतिचक्राम इत्यादि वाक्यं विषयः॥

अत्र किं जीवादि वेदितव्यत्वेनोच्यते उत परमेश्वर इति संशये कर्ता इत्यादिना कर्मवत्त्वोक्त्या जीवादिरेवेति पूर्वपक्षे, ब्रह्म ते इत्याद्युपक्रमानुगुण्येन परमेश्वर एवेति सिद्धान्तः॥

---

[1] तै. उ. २–१–१. यो. चू. ७२. [2] छां. ६–२–३. [3] कौ. उ. ४–१.
[4] कौ. उ. ४–१८.

## ६. वाक्यान्वयाधिकरणम् ४८, ४४३–४४७.

[सू. १९. वाक्यान्वयात्. २०. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः २१. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः. २२. अवस्थितेरिति काशकृत्स्नः.]

[1] न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति इत्यारभ्य—[2] न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति॥ [3] आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेयि ! आत्मनि खलु दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवति इत्यादिवाक्यं विषयः। अत्र आत्मा, मैत्रेय्या जिज्ञासानुगुण्येन अमृतत्वाद्युक्त्या ईश्वर एव न जीव इति सिद्धान्तितम्॥

## ७. प्रकृत्यधिकरणम ४९, ४४८–४५१.

[सू. २३. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्. २४. अभिध्योपदेशाच्च. २५. साक्षाच्चोभयाम्नानात्. २६. आत्मकृतेः परिणामात्. २७. योनिश्च हि गीयते.]

[4] ब्रह्मविदाप्नोति परं, तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः॥ [5] द्यावाभूमी जनयन् देव एकः इत्यादिवाक्यं विषयः॥ ईश्वरे निमित्तोपादानकारणत्वे संभवतो वा न वेति संशये, एकस्मिन्नुभयासंभव इति लोकदृष्टान्तेन पूर्वपक्षे, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुगुण्येन सर्वशक्तौ परमेश्वरे उभयमपि सम्भवत्येति सिद्धान्तितम्॥

## ८. सर्वव्याख्यानाधिकरणम् ४९, ४५२–५९२.

[सू. २८. एतेन सर्वे व्याख्याता व्याख्याताः] कर्मप्रकरणपठितानां सर्वेषामपि वाक्यानां तात्पर्यलिङ्गसम्बन्धेन ब्रह्मपरत्वमेवेति अनेन निर्णीतम्॥

---

[1] बृह. २–४–५, ४–५–६. [2] बृह. २–४–५, ४–५–५. [3] बृह. २–४–५, ४–५–६. [4] तै. उ. २–१–१, भस्मजा. २–७. [5] श्वेता. ३–३.

अयमत्र सङ्ग्रहः—

महतः परमव्यक्तं देहोऽजा परमेश्वरः।
पञ्चपञ्चजनाः पञ्चेन्द्रियाण्युक्तानि नेतरे॥
ब्रह्मैव जगतां हेतुः कर्ता च परमेश्वरः।
आत्मा चेशोऽत्र तस्यैव चोपादाननिमित्तता॥
सर्वं व्याख्यातमेतेनेत्यष्टार्थाः प्रतिपादिताः।

॥ इति प्रथमे चतुर्थः समाप्तश्चाध्यायः॥

---

# अथ द्वितीयोऽध्यायः

## १. स्मृत्यधिकरणम् ६१, १–१२५.

[सू. १. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्. २. इतरेषां चानुपलब्धेः.]

प्रधानकारणवादिनीनां सांख्यादिस्मृतीनामनवकाशप्रसङ्गात् न वेदान्तानामीश्वरकारणपरत्वमिति शङ्कायां, तथा सति तद्विरुद्धानां बह्वीनां स्मृतीनां अनवकाशप्रसङ्गात् तदानुगुण्येन वेदान्तानां ब्रह्मकारणपरत्वमेव युक्तमिति सिद्धान्तितम्॥

## २. योगप्रत्युक्त्यधिकरणम् ७१, १२६–१४६.

[सू. २. एतेन योगः प्रत्युक्तः.]

अत्र सांख्यस्मृतिवत् श्रुतिस्मृतिशतविरोध्यर्थाभिधायिनी योगस्मृतिरपि निराकृतप्रायेत्युक्तम्॥

## ३. न विलक्षणत्वाधिकरणम् ७३, १४७–१६५.

[सू. ४. न विलक्षणत्वादस्य तथात्वं च शब्दात्. ५. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्. ६. दृश्यते तु. ७. असदिति चेन्न प्रतिषेधमात्रत्वात्. ८. अपी(पि)तौ तद्वत्प्रसङ्गादसमञ्जसम्. ९. न तु दृष्टान्तभावात्. १० स्वपक्षदोषाच्च ११. तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः.]

अस्य जगतः ईश्वरकारणकत्वं न संभवति, कार्यकारणयोस्सालक्षण्यनियमरूपव्याप्तिविरोधादिति पूर्वपक्षे, गोमयवृश्चिकादौ तादृशनियमभङ्गेन व्याप्तेरभावात् जगतः ईश्वरकार्यत्वे न दोषः इति सिद्धान्तितम् ॥

## ४. शिष्टापरिग्रहाधिकरणम् ७४, १६६.

[सू. १२. एतेन शिष्टापरिग्रहा अपि व्याख्याताः.]

एतेन साङ्ख्यादिदर्शनवत् केवलतर्कमूलत्वेनाप्रतिष्ठितः अक्षपादाद्यभिमतः परमाणुकारणत्ववादोऽपि निराकृतः इत्युक्तम् ॥

## ५. भोक्त्रापत्त्यधिकरणम् ७४, १६७-१६८.

[सू. १३. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्.]

एवं चिदचिच्छरीरकस्य ईश्वरस्य कारणत्वाङ्गीकारे सशरीरत्वप्रयुक्तसुखदुःखाद्यापत्तिरित्याशङ्क्य, सुखादिकं प्रति कर्मण एव निमित्तत्वात् कर्मानधीनस्यास्य सुखादिभोक्तृत्वप्रसङ्गः नास्त्येवेति समाहितम् ॥

## ६. आरम्भणाधिकरणम् ७५, १६९-१७२.

[सू. १४. तदनन्यत्वमारम्भण शब्दादिभ्यः १५. भावे चोपलब्धेः. १६. सत्त्वाच्चापरस्य. १७. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च. १८. पटवच्च. १९. यथा च प्राणादिः. २०. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१. अधिकं तु भेदनिर्देशात्. २२. अश्मादिवच्च तदनुपपत्तिः.]

उक्तं जगदीश्वरयोः कार्यकारणयोरनन्यत्वं अयुक्तं, बुद्धिशब्दान्तरादिभेदात् जीवाभेदप्रयुक्ताज्ञानानान्यथाज्ञानादिप्रसङ्गाच्च इति पूर्वपक्षे, मृद्घटादाविव अवस्थान्तरेणैव बुद्धिशब्दादिभेदोपपत्त्या अपृथग्भावरूपानन्यत्वे विश्वाधिकस्याज्ञानाद्यनापत्त्या च नोक्तमनन्यत्वं दोषायेति सिद्धान्तितम् ॥

## ७. उपसंहारदर्शनाधिकरणम् ७५, १७३.

[सू. २३. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि. २४. देवादिवदपि लोके.]

लोके सर्वस्यापि कार्यस्य अनेककारकसमूहसम्पन्नस्यैव दर्शनात्—एकमेवाद्वितीयं, द्यावापृथिवी जनयन् देव एकः इत्याद्युक्तं कारणैक्यं नैव युक्तमिति पूर्वपक्षे, क्षीरादीनामसहायानामपि दध्यादिकार्यकारणत्वदर्शनात् सर्वशक्तस्यैकस्येवेश्वरस्यस्योक्त कारणत्वे दोषगन्धोपि नास्तीति सिद्धान्तितम् ॥

## ८. कृत्स्नप्रसक्त्यधिकरणम् ७५, १७४–१८४.

[सू. २५. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा. २६. श्रुतेस्तु शब्दमूलत्वात्. २७. आत्मनि चैवं विचित्राश्च हि. २८. स्वपक्षदोषाच्च. २९. सर्वोपेता च तद्दर्शनात्. ३०. विकरणान्नेति चेत्तदुक्तम्.]

क्षीरादिदृष्टान्तेन कृत्स्नस्याप्येकस्येश्वरस्य जगदाकारपरिणामे ईश्वर एव न परिशिष्येत, नाप्यंशेन, सावयवत्वाभावात्, तथा च न युक्तं ब्रह्मकारणत्वमिति पूर्वपक्षे, शब्दैकप्रमाणके जगदीश्वरे विचित्रशक्तियुक्ते श्रुत्यानुगुण्येनैव सर्वस्याप्यर्थस्याङ्गीकार्यत्वेन न कस्या अपि शङ्काया अवकाश इति सिद्धान्तितम् ॥

## ९. लीलाकैवल्याधिकरणम् ७६, १८५.

[सू. ३१. न प्रयोजनवत्त्वात्. ३२. लोकवत्तु लीलाकैवल्यम्.]

पूर्णकामे नित्यतृप्ते ईश्वरे प्रवृत्तिसामान्यप्रयोजकीभूतफलाभिलाषाऽसम्भवात् जगत्सृष्टिप्रवृत्तिरेव न सम्भवतीति पूर्वपक्षे, सार्वभौमादिकर्तृककन्दुकक्रीडादिवत् लीलयैव जगत्सृष्टौ प्रवृत्तिः संभवत्येवेति सिद्धान्तितम् ॥

## १०. वैषम्यनैर्घृण्याधिकरणम् ७६, १८६–१९१.

[सू. ३३. वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति. ३४. न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च. ३५. सर्वधर्मोपपत्तेश्च.]

लीलया जगत्सृष्टौ वैषम्यस्य दुर्वारतेति पूर्वपक्षे, दृष्टस्य-वैषम्यस्य जीवकृतकर्मसापेक्षत्वेन नेश्वरस्य दोषभागित्वप्रसङ्गः इति सिद्धान्तितम् ॥

॥ इति द्वितीये प्रथमः पादः ॥

---

## अथ द्वितीये द्वितीयः पादः

### १. रचनानुपपत्त्यधिकरणम् ७७, १९२-२३९.

[सू. १. रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च. २. पयोम्बुवच्चेत्तत्रापि. ३. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्. ४. अन्यत्राभावाच्च न तृणादिवत्. ५. पुरुषाश्मवदिति चेत्तथापि. ६. अङ्गित्वानुपपत्तेश्च. ७. अन्यथानुमितौ च ज्ञशक्तिवियोगात्. ८. अभ्युपगमेऽप्यर्थाभावात्. ९. विप्रतिषेधाच्चासमञ्जसम्.]

प्रधाने यत्नसामान्यहेतुभूतज्ञानाद्यभावात् जगत्सृष्ट्यनुपपत्त्या, अचेतनं प्रधानं चेतनाधिष्ठितमपि नैव जगत्कारणं भवतीति सिद्धान्तितम् ॥

### २. महद्दीर्घाधिकरणम् ८१, २४०-३०८.

[सू. १०. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्. ११. उभयथापि न कर्मातस्तदभावः. १२. समवायाभ्युपगमाच्च साम्यादनवस्थितेः. १३. नित्यमेव च भावात्. १४. रूपादिमत्त्वाच्च विपर्ययो दर्शनात्. १५. उभयथा च दोषात्. १६. अपरिग्रहाच्चात्यन्तमनपेक्षा.]

द्व्यणुकादिगतह्रस्वत्वादीनां स्वविजातीयधर्मारम्भकत्वस्यैव वैशेषिकादिमतेऽङ्गीकारेण, कारणगुणानां कार्ये स्वसमानजातीयगुणारम्भकत्वनियमाभावात्, एवं परमाणुषु अचेतनेषु निर्निमित्तक्रियाऽसंभवेन परमाणुकारणतावादस्याप्ययुक्तत्वात् वैशेषिकमतमप्ययुक्तमिति सिद्धान्तितम् ॥

## ३. समुदायाधिकरणम् ८७, ३०९–३८८.

[सू. १७. समुदाय उभयहेतुकेऽपि तदप्राप्तिः. १८. इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्. १९. उत्तरोत्पादे च पूर्वनिरोधात्. २०. असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा. २१. प्रतिसंख्याप्रतिसंख्याप्राप्तिरविच्छेदात्. २२. उभयथा च दोषात्. २३. आकाशे चाविशेषात्. २४. अनुस्मृतेश्च]

कारणानां क्षणिकत्वाङ्गीकारे कार्यारम्भस्यैवानुपपत्त्या अविद्यादीनां सङ्घातभावं प्रत्यनिमित्तत्वाच्च एतादृशविरुद्धार्थाभिधायिवैभाषिकादिमतमपि हेयमेवेत्युक्तम् ॥

## ४. दृष्टत्वाधिकरणम् ९४, ३८९–४०४.

[सू. २५. नासतो दृष्टत्वात्. २६. उदासीनानामपि चैवं सिद्धिः.]

सर्वेषां पदार्थानां ज्ञानानुमेयत्ववादः अभावाद्भावोत्पत्तिवादश्चायुक्तः, तन्मतानुसारेण अर्थानां क्षणिकत्वेनानुमानासंभवात्। नष्टमृत्पिण्डादेः घटादिजनकत्वादर्शनाच्च इति निर्णीतम् ॥

## ५. उपलब्ध्यधिकरणम् ९५, ४०५–४५४.

[सू. २७. नाभाव उपलब्धेः २८. वैधर्म्याच्च न स्वप्नादिवत्. २९. न भावोऽनुपलब्धेः.]

घटमहं जानामीत्यादिना ज्ञानकर्मत्वेन कर्तृत्वेन च ज्ञानातिरिक्तपदार्थस्योपलम्भात्, कारणदोषाद्यभावेन मिथ्यात्ववचनस्यायुक्तत्वात् अर्थशून्यज्ञानस्यासंभवाच्च विज्ञानातिरिक्तबाह्यार्थापलापोऽयुक्त इति सिद्धान्तितम् ॥

## ६. सर्वथानुपपत्त्यधिकरणम् १००, ४५५–४६३.

[सू. ३०. क्षणिकत्वाच्च. ३१. सर्वथानुपपत्तेश्च.]

सत्त्वासत्त्वादीनां वस्तुधर्मत्वात् असदिति प्रतिज्ञायामन्यथा-

प्रतिज्ञायां वा सर्वशून्यत्वासंभवात् माध्यमिकोक्तः सर्वशून्यत्ववादः न युक्तः इति सिद्धान्तः कृतः ॥

## ७. एकस्मिन्नसंभवाधिकरणम् १००, ४६४–४९८.

[सू. ३२. नैकस्मिन्नसंभवात्. ३३. एवं चात्माकार्त्स्न्यम्. ३४. न च पर्यायादप्यविरोधो विकारादिभ्यः. ३५. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः.]

एकस्मिन् वस्तुनि अस्तित्वनास्तित्वादीनां परस्परविरुद्धधर्माणामसंभवेन, जीवस्य देहपरिमाणत्वे विकारित्वादिप्रसंगाच्च एतदङ्गीकर्तृजैनमतमप्ययुक्तमित्युक्तम् ॥

## ८. पत्यधिकरणम् १०१, ४९९–५१५.

[सू. ३६. पत्युरसामञ्जस्यात्. ३७. अधिष्ठानानुपपत्तेश्च. ३८. करणवच्चेन्न भोगादिभ्यः ३९. अन्तवत्त्वमसर्वज्ञता वा.]

शैवागमैकदेशिभिः लौकिककुलालादिदृष्टान्तेन उक्तं ईश्वरस्य केवलनिमित्तकारणत्वं अयुक्तं, सर्वशक्तविषये हीनलौकिकदृष्टान्तस्याकार्यकरत्वात् श्रुतिन्यायविरोधाच्च इति सिद्धान्तितम् ॥

## ९. उत्पत्त्यसम्भवाधिकरणम् १०५, ५१६–५३०.

[सू ४०. उत्पत्त्यसंभवात्. ४१. न च कर्तुः करणम्. ४२. विज्ञानादिभावे वा तदप्रतिषेधः. ४३. प्रतिषेधाच्च.]

पाञ्चरात्रोक्तं सङ्कर्षणादिजीवोत्पत्त्यादिकं युक्तं न वेति संशये, भगवदुक्तत्वात् युक्तमेवेति पूर्वपक्षे, जीवानामुत्पत्त्यसंभवात् तथा सति अनित्यत्वादिमहानर्थप्रसङ्गाच्च नैव युक्तमिति सिद्धान्तितम् ॥

॥ इति द्वितीये द्वितीयः पादः ॥

———

## अथ तृतीयः पादः

### १. वियदधिकरणम् १०७, ५३१–५३८.

[सू. १. न वियदश्रुतेः. २. अस्ति तु. ३. गौण्यसम्भवात् शब्दाच्च. ४. स्याच्चैकस्य ब्रह्मशब्दवत्. ५. प्रतिज्ञाहानिरव्यतिरेकात्. ६. शब्देभ्यः. ७. यावद्विकारं तु विभागो लोकवत्.]

[1]तत्तेजोऽसृजत इत्यादिसृष्टिप्रकरणे आकाशोत्पत्तेरश्रवणात् आकाशः नोत्पद्यत एवेति पूर्वपक्षे, आत्मादाविव [2]न जायत इत्यादि निषेधाश्रवणात् [3]तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः इत्यादिवचनदर्शनाच्च आकाशोऽप्युत्पद्यत एवेति सिद्धान्तितम् ॥

### २. मातरिश्वाधिकरणम् १०८, ५४०.

[सू. ८. एतेन मातरिश्वा व्याख्यातः.]

वायुः उत्पद्यते न वेति संदेहे[4] "सैषानस्तमिता यद्वायु"रिति निषेधात् नोत्पद्यते इति पूर्वपक्षे, स्पष्टतयैव [5]"आत्मन आकाशः सम्भूतः, आकाशाद्वायुः इति वायूत्पत्तिश्रवणात् वायुरप्युत्पद्यत एवेति सिद्धान्तितम् ॥

### ३. असम्भवाधिकरणम् १०८, ५४१–५४२.

[सू. ९. असम्भवस्तु सतोऽनुपपत्तेः.]

[6]असद्वा इदमग्र आसीत्, ततो वै सदजायतेति श्रुतेः पूर्वमसतः कारणात् सद्रूपं ब्रह्म जायते इति पूर्वपक्षे, [7]सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं; [8]यदा तमस्तत्र दिवा न रात्रिः न सन्नचासच्छिव एव केवलः इत्याद्यनेकश्रुत्यानुगुण्येन परब्रह्मणः शिवस्य सर्वकारणत्वानुत्पत्ती सिद्धान्तिते ॥

---

[1] छा. ६-२-३. [2] गी. २-२०. [3] तै. उ. २-१-१. [4] बृ. १-५-२२. [5] तै. उ. २-१-१. [6] तै. उ. २-७. [7] छा. ६-२-१. [8] श्वेता. ४-१८.

## ४. तेजोऽधिकरणम् १०८, ५४६.

[सू. १०. तेजोऽतस्तथा ह्याह. ११. आपः. १२. पृथिवी. १३. अधिकाररूपशब्दान्तरेभ्यः. १४. तदभिध्यानादेव तु तल्लिङ्गात्सः.]

वाय्वादिरूपं सर्वमपि कार्यं स्वस्वपूर्वकारणादेवोत्पद्यते न परस्मात् शिवादिति पूर्वपक्षे, [1]तेज ऐक्षत [2] आप ऐक्षन्तेत्यादिषु ईक्षणादिश्रवणात् तत्तच्छरीरकः परमात्मा शिव एव सर्वकारणमिति सिद्धान्तितम् ॥

## ५. विपर्ययाधिकरणम् १०९, ५४७-५५३.

[सू. १५. विपर्ययेण (पारंपर्येण) क्रमोऽत उपपद्यते च. १६. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्. ]

पूर्वोक्ताकाशाद्युत्पत्तिक्रमः नाविचलः, तद्विरुद्धतया मुण्डकाथर्वशिखादिषु व्युत्क्रमेणाक्रमेण च सृष्टिश्रवणात् इति पूर्वपक्षे, भौतिकानां प्राणादीनां भूतोत्पत्त्यनन्तरकालिकत्वस्य न्याय्यतया तदनुसारेण मुण्डकादिपाठक्रमस्योपेक्षणीयत्वेन पूर्वोक्त एव सृष्टिक्रमः न्याय्यः, इति सिद्धान्तितम् ॥

## ६. चराचरव्यपाश्रयाधिकरणम् १०९, ५५४-५५६.

[सू. १७. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्.]

अत्र सर्वे शब्दाः ब्रह्मणि मुख्यवृत्त्या वर्तन्त इति सिद्धान्तितम् ।

## ७. आत्माधिकरणम् ११०, ५५७-५६०.

[सू. १८. नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः.]

आकाशादिन्यायेन जीवोऽपि ब्रह्मणः उत्पद्यत एव, [3]शिव एव केवलः इति सृष्टेः पूर्वं सर्वस्याप्यभावश्रवणादिति पूर्वपक्षे, [4]न

[1] छा. ६-२४. [2] छा. ६-२४. [3] श्वेता. ४-१८. [4] गी. २-२०.

जायते म्रियते वा इत्यादिना जीवस्यापीश्वरवत् नित्यत्वश्रवणात् नैव तस्योत्पत्तिरिति सिद्धान्तितम् ॥

## ८. ज्ञाधिकरणम् ११०, ५६१–५६२.

[सू. १९. ज्ञोऽत एव.]

[1]ज्ञाज्ञौ द्वावजावीशनीशाविति अनीशस्य जीवस्य अज्ञत्वश्रवणात् अस्य स्वाभाविकं ज्ञानधर्मित्वं नास्तीति पूर्वपक्षे [2]अथ यो वेदेदं जिघ्राणीति स आत्मा इत्यादौ गन्धादिवेदनस्यैव आत्मनो लक्षणत्वेन प्रतिपादनात् तदानुगुण्येन स्वाभाविकमेव ज्ञानधर्मित्वमिति सिद्धान्तितम्। अज्ञत्वोक्तिस्तु संसारदशायां सार्वज्ञ्यानभिव्यक्तिपरेति भावः ॥

## ९. उत्क्रान्त्यधिकरणम् ११०, ५६३–५८७.

[सू. २०. उत्क्रान्तिगत्यागतीनाम्. २१. स्वात्मना चोत्तरयोः २२. नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्. २३. स्वशब्दोन्मानाभ्यां च. २४. अविरोधश्चन्दनवत्. २५. अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि. २६. गुणाद्वा लोकवत्. २७. व्यतिरेको गन्धवत्तथा च दर्शयति २८. पृथगुपदेशात्. २९. तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्. ३०. यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्. ३१. पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्. ३२. नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा.]

एवं ज्ञातृत्वेन सिद्धः आत्मा विभुरणुर्वेति संशये [3]स वा एष महानज आत्मा इत्यादिना विभुत्वोक्तेः विभुरेवेति पूर्वपक्षे, उत्क्रान्तिगत्यादिबोधकश्रुत्यादिप्रामाण्यादणुरेवेति सिद्धान्तितम्।

## १०. कर्त्रधिकरणम् ११३, ५८८–६०३.

[सू. ३३. कर्ता शास्त्रार्थवत्त्वात्. ३४. उपादानाद्विहारोपदेशाच्च. ३५. व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः.

---

[1] श्वेता. १-९. [2] छा. ८-१२-४. [3] बृह. ४-४-२४.

३६. उपलब्धिवदनियमः. ३७. शक्तिविपर्ययात्. ३८. समाध्यभावाच्च. ३९. यथा च तक्षोभयथा ]

आत्मनि कर्तृत्वमेव नास्ति, प्रकृत्यादिगतं कर्तृत्वमेव आत्मगतत्वेन प्रतिभातीति पूर्वपक्षे, विधिनिषेधादिसर्वशास्त्रवैयर्थ्यप्रसङ्गादिना, तत्र तत्र स्पष्टमेव कर्तृत्वव्यपदेशाच्च, आत्मनि कर्तृत्वं वर्तत एवेति सिद्धान्तितम् ॥

## ११. परायत्ताधिकरणम् ११५, ६०४–६०६.

[सू. ४०. परात्तु तच्छ्रुतेः ४१. कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः]

[1]य आत्मानमन्तरो यमयतीत्यादिना आत्मनः कर्तृत्वसामान्यमीश्वरायत्तमित्युक्त्वा, तत्तत्कृतानादिकर्मप्रवाहाधीनतत्तत्प्रवृत्तिषु ईश्वरः अनुमन्तैव भवतीति न विधिनिषेधशास्त्रवैयर्थ्यं नापि भगवतः वैषम्यादिदोषभाजनत्वं च इति सिद्धान्तितम् ।

## १२. अंशाधिकरणम् ११५, ६०७-६२४.

[सू. ४२. अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके. ४३. मन्त्रवर्णाच्च. ४४. अपि च स्मर्यते. ४५. प्रकाशादिवत्तु नैवं परः. ४६. स्मरन्ति च. ४७. अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्. ४८. असन्ततेश्चाव्यतिकरः. ४९. आभासा एव च. ५०. अदृष्टानियमात्. ५१. अभिसन्ध्यादिष्वपि चैवम्. ५२. प्रदेशादिति चेन्नान्तर्भावात्.]

यदधीना जीवस्य प्रवृत्तिरुच्यते स एवेश्वरः यत्किञ्चिदुपाध्यवच्छेदेन कल्पितभेदस्सन् जीवपदवाच्य इति नेश्वराद्भिदो जीवस्येति पूर्वपक्षे, न तयोरभेदः [2]य आत्मनीत्यादि श्रुतेः, किन्तु ईश्वरातिरिक्तः जीवः ईश्वरशरीरत्वेन विशिष्टैकदेशपदवाच्य इति सिद्धान्तितम् ॥

॥ इति द्वितीये तृतीयः पादः ॥

---

[1] बृ. ३-७-१९. [2] बृ. ३-७-१९.

## अथ [1]द्वितीये चतुर्थः पादः

### १. प्राणोत्पत्त्यधिकरणम् ११७, ६२५–६२८.

[सू. १. तथा प्राणाः. २. गौण्यसम्भवात् तत्प्राक्छ्रुतेश्च. ३. तत्पूर्वकत्वाद्वाचः]

इन्द्रियाणामुत्पत्तिरस्ति न वेति संशये [1]'ऋषयो वाव ते अग्रे सदासन् तदाहुः केते ऋषय इति प्राणा वा ऋषयः' इति ऋषिप्राणादिशब्दवाच्यानां इन्द्रियाणां ईश्वरवत् नित्यसत्त्वोपपादनात् इन्द्रियाणि नित्यान्येवेति पूर्वपक्षे, [2]'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' [3]'सदेव सौम्य' इत्यादि प्रमाणबलात् इन्द्रियाण्युत्पद्यन्त एवेति, पूर्वश्रुतौ ऋषिप्राणादिशब्दवाच्यः ईश्वर एवेति च सिद्धान्तितम् ॥

### २. सप्तगत्यधिकरणम् ११७, ६२९.

[सू. ४. सप्तगतेर्विशेषितत्वाच्च. ५. हस्तादयस्तु स्थितेऽतो नैवम्.]

इन्द्रियाणि सप्तैवेति पूर्वपक्षे, [4]'इन्द्रियाणि दशैकञ्च' इत्यादिप्रामाण्येन उपकरणत्वाविशेषाच्च एकादशेति सिद्धान्तितम्॥

### ३. प्राणाणुत्वाधिकरणम् ११८, ६३०.

[सू. ६. अणवश्च.]

चक्षुरादिभिः इन्द्रियैः अतिदूरदेशगतवस्तूनामपि ग्रहणात् इन्द्रियाणां विभुत्वं सयुक्तिकमिति पूर्वपक्षे, सर्वेषामिन्द्रियाणां प्राणमनूत्क्रान्तिश्रवणात् विभुत्वे गत्यसंभवात् अणून्येवेति सिद्धान्तितम् ॥

### ४. श्रैष्ठ्याधिकरणम् ११८, ६३०–६३४.

[सू. ७. श्रेष्ठश्च. ८. न वायुक्रिये पृथगुपदेशात. ९. चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः. १०. अकरणत्वाच्च न दोषः तथा हि दर्शयति. ११. पञ्चवृत्तिर्मनोवद्व्यपदिश्यते.]

---

[1] बृ. २-२-३. [2] मुण्ड. २-१-३. [3] छां. ६-२-१. [4] गीता.

अत्र–प्राणो न नित्यः नापि भूतवायुरूपः [1] 'एतस्माज्जायते' इत्यादिना प्राणोत्पत्तिश्रवणात्, तत्रैव [2] 'खं वायुः' इति पार्थक्येन वायुग्रहणाच्च इति सिद्धान्तितम् ॥

## ५. अणुत्वाधिकरणम् ११८, ६३४.

[सू. १२. अणुश्च.]

[3] 'प्राणमुत्क्रामन्तं' इत्यादिप्रामाण्येन मुख्यप्राणोऽपि अणुरेव न विभुरिति सिद्धान्तितम् ॥

## ६. ज्योतिराद्यधिष्ठानाधिकरणम् ११८, ६३५–६४०.

[सू. १३. ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवताशब्दात्. १४. तस्य च नित्यत्वात्.]

आदित्यादीनामभिमानिदेवतानां जीवस्य च प्राणाधिष्ठातृत्वं [4] 'य आदित्यमन्तरो यमयती'त्यादि प्रामाण्येन परमेश्वरायत्तमेवेति सिद्धान्तितम् ॥

## ७. इन्द्रियाधिकरणम् ११८, ६४०–६४३.

[सू. १५. त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्. १६. भेदश्रुतेर्वैलक्षण्याच्च.]

[5] 'प्राणो मनः सर्वेन्द्रियाणि च' इत्यादि पृथङ्निर्देशानुगुण्येन मुख्यप्राणस्य इन्द्रियत्वं नास्तीति सिद्धान्तितम् ॥

## ८. संज्ञामूर्त्यधिकरणम् ११९, ६४४–६४९.

[सू. १७. संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्. १८. मांसादिभौमं यथाशब्दमितरयोश्च. १९. वैशेष्यात्तु तद्वादस्तद्वादः.]

अत्र–नामरूपव्याकरणं हिरण्यगर्भादिजीवकर्तृकं इत्याशङ्कानिरसनपूर्वकं परमेश्वरकर्तृकमेवेति सप्रमाणमुपपादितम् ॥

इति द्वितेये चतुर्थः पादः अध्यायश्च समाप्तः.

---

[1] मुण्ड. २-१-३. [2] मुण्ड. २-१-३. [3] बृ. ४-४-२. [4] बृ. ३-७-९. [5] मु. २-१-३.

# अथ तृतीये प्रथमः पादः

## १. तदन्तरप्रतिपत्त्यधिकरणम् १२१, १–२०.

[सू. १. तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्. २. त्र्यात्मकत्वात्तु भूयस्त्वात्. ३. प्राणगतेश्च. ४. अग्न्यादिगति श्रुतेरिति चेन्न भाक्तत्वात्. ५. प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः. ६. अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः. ७. भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति.]

[1] श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय, तं ह प्रवाहणो जैबलिरुवाच, कुमारानुत्वाशिषत्पितेति, अनु हि भगव इति' इत्यारभ्य, [2] इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' त्यादि वाक्यम् ॥

अत्र जीवः लोकान्तरगतागतसमये देहान्तरप्राप्तिहेतुभूतैः भूतसूक्ष्मैः वेष्टित एव वर्तते इति सिद्धान्तितम् ॥

## २. कृतात्ययाधिकरणम् १२३, २१–२५.

[सू. ८. कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च. ९. चरणादितिचेन्न कार्ष्णाजिनिः. १०. आनर्थक्यमिति चेन्न तदपेक्षत्वात्. ११. सुकृतदुष्कृते एवेति बादरिः.]

[3] तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते तद्य इह रमणीयचरणाः अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणाः अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं चण्डालयोनिं वा इत्यादि वाक्यम् ॥

अमुष्माल्लोकादिमं लोकमवतरन् जीवः सकर्मशेष एवावतरति न तु निःशेषभुक्तकर्मा इति सिद्धान्तितम् ॥

## ३. अनिष्टादिकार्यधिकरणम् १२४, २६–४३.

[सू. १२. अनिष्टादिकारिणामपि च श्रुतम्. १३. संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्. १४. स्मरन्ति

---

[1] छां. ५-३-१. [2] छां. ५-९-१. [3] छां. ५-१०-५.

च. १५. अपि च सप्त. १६. तत्रापि च तद्व्यापारादविरोधः. १७. विद्याकर्मणोरिति तु प्रकृतत्वात्. १८. न तृतीये तथोपलब्धेः. १९. स्मर्यतेऽपि च लोके. २०. दर्शनाच्च. २१. तृतीयशब्दावरोधः संशोकजस्य.]

[1] ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति इत्यादिवाक्यम् । अत्र–चन्द्रगमनं इष्टापूर्तादिकारिणामेव न तु तदन्येषां पापकारिणामपि इति सिद्धान्तितम् ॥

## ४. तत्स्वाभाव्यापत्त्यधिकरणम् १२६, ४४.

[सू. २२. तत्स्वाभाव्यापत्तिरुपपत्तेः.]

[2] अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशं आकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति इत्यादि वाक्यम् ॥ अत्रोक्तः जीवस्याकाशादिभावः आकाशादिसादृश्यापत्तिरेव न तु तद्रूपतापत्तिः इति सिद्धान्तितम् ॥

## ५. नातिचिराधिकरणम् १२६, ४५–४८.

[सू. २३. नातिचिरेण विशेषात्.]

[3] त इह व्रीहियवाःओषधिवनस्पतयः तिलमाषाः जायन्ते-अतो वै खलु दुर्निष्पपतरम् इत्यादि वाक्यम् ॥

इमं लोकमवरोहतः जीवस्य व्रीह्यादिभावानन्तरमेव विलम्बः न तु ततः प्राक् इति सिद्धान्तितम् ॥

## ६. अन्याधिष्ठिताधिकरणम् १२६, ४९–५६.

[सू. २४. अन्याधिष्ठिते च पूर्ववदभिलाभात्. २५. अशुद्धमिति चेन्न शब्दात्. २६. रेतस्सिग्योऽथ. २७. योनेः शरीरम्.]

[4] त इह व्रीहियवाः ओषधिवनस्पतयः तिलमाषाः जायन्ते इत्यादि वाक्यं विषयः ॥ अत्र जीवस्य व्रीह्याद्यात्मना जननं न श्रुतिसम्मतम्, किन्तु व्रीह्यादिसंश्लेषमात्रमेव इति सिद्धान्तितम् ॥

इति तृतीये प्रथमः पादः

---

[1] कौ. त. १-२. [2] छां. ५-१०-५. [3] छां. ५-१०-६. [4] छां. ५-१०-६.

## अथ तृतीये द्वितीयः पादः

### १. सन्ध्याधिकरणम् १२७, ५७–६४.

[सू. १. सन्ध्ये सृष्टिराह हि. २. निर्मातारं चैके पुत्रादयश्च ३. मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्. ४. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ. ५. देहयोगाद्वा सोऽपि. ६. सूचकश्च हि श्रुतेराचक्षते हि तद्विदः.]

[1] न तत्र रथाः न रथयोगाः न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते न तत्रानन्दाः मुदः प्रमुदो भवन्ति अथानन्दान् मुदः प्रमुद सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्तान् पुष्करिणीः स्रवन्ती सृजते स हि कर्ता इत्यादि वाक्यं विषयः ॥ अत्र परमेश्वर एव तत्तत्कालावसानान् तत्तत्पुरुषमात्रानुभाव्यान् स्वाप्नान् पदार्थान् सृजते न जीवः इति सिद्धान्तितम् ॥

### २. तदभावाधिकरणम् १२८, ६५–७१.

[सू. ७. तदभावो नाडीषु तच्छ्रुतेः आत्मनि च ८. अतः प्रबोधोऽस्मात्.]

[2]तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति ॥ [3] अथ यदा सुषुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यः द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते ॥ [4] यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति इत्यादिवाक्यं विषयः ॥ अत्र सुषुप्तिकाले जीवः नाडीपुरीतत्प्रवेशद्वारा परमात्मन्येव शेते इति समुच्चयः सिद्धान्तितः ॥

### ३. कर्मानुस्मृत्यधिकरणम् १२९, ७२–७३.

[सू. ९. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः.]

[5] उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति. यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो

---

[1] बृ. ४-३-१०, [2] छा. ८–६–३. [3] बृ. उ. २–१–१९. [4] छां. ६-८ १.
[5] छां. ६-८-१.

भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति इत्यादिवाक्यं विषयः ॥ अत्र उक्तप्रकारेण ब्रह्मण्येव सुप्तोऽप्ययं जीवः स्वीयाग्रिमसंसारनिमित्तयोः पुण्यपापयोः स्वरूपतो नाशाभावात् प्रतिबद्धः सन् ततः उत्तिष्ठतीति सिद्धान्तितम् ॥

## ४. मुग्धाधिकरणम् १२९, ७४–७९.

[सू. १०. मुग्धेऽर्धसम्पत्तिः परिशेषात्.]

अत्र सुषुप्त्यादेः भिन्ना, चिकित्साद्यभावे मरणपर्यवसायिनी मरणावस्थाऽर्धसम्पत्तिः मूर्छावस्था इति सिद्धान्तितम् ॥

## ५. उभयलिङ्गाधिकरणम् १३०, ८०–१००.

[सू. ११. न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि. १२. भेदादिति चेन्न प्रत्येकमतद्वचनात्. १३. अपि चैवमेके. १४. अरूपवदेव हि तत्प्रधानत्वात्. १५. प्रकाशवच्चावैयर्थ्यात्. १६. आह च तन्मात्रम. १७. दर्शयति चाथो अपि स्मर्यते. १८. अतएव चोपमा सूर्यकादिवत्. १९. अम्बुवदग्रहणात्तु न तथात्वम्. २०. वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च.]

[1] सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविशत्, यः पृथिव्यां तिष्ठन् इत्यादि वाक्यं विषयः ॥ सर्वास्ववस्थासु सर्वान्तर्यामितया स्थितिमतोऽपि परमेश्वरस्य अपहतपाप्मेत्यादिश्रुत्यनुसारेण न तत्तद्दोषदुष्टत्वप्रसङ्गः इति सिद्धान्तितम् ॥

## ६. प्रकृतैतावत्त्वाधिकरणम् १३२, १०१–१२४.

[सू. २१. प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः. २२. तदव्यक्तमाह हि. २३. अपि संराधने प्रत्यक्षानुमानाभ्याम्. २४. प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्. २५. अतोऽनन्तेन तथा हि लिङ्गम्. २६. उभयव्यपदेशात्त्वहिकुण्डलवत्. २७. प्रकाशाश्रयवद्वा तेजस्त्वात्. २८. पूर्ववद्वा. २९. प्रतिषेधाच्च.]

---

[1] अ. शिर. १-१.

[1] द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यं च, इत्यारभ्य, [2] तस्य हैतस्य पुरुषस्य रूपं माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपः यथाग्न्यर्चिः यथा पुण्डरीकं यथा सकृद्विद्युत्तं यथा सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं इत्यादि वाक्यम् ॥ अत्र नेति नेतीत्यादि श्रुत्युक्तः निषेधः नोभयलिङ्गादिविषयकः, किन्तु तदधिकगुणाभावविषयक एवेति सिद्धान्तितम् ॥

## ७. पराधिकरणम् १३५, १२५–१२८.

[सू. ३०. परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः. ३१. सामान्यात्तु. ३२. बुद्ध्यर्थः पादवत्. ३३. स्थानविशेषात् प्रकाशादिवत्. ३४. उपपत्तेश्च.]

अत्र परमेश्वरादपि परं वस्तु नास्त्येवेति सिद्धान्तितम् ॥

## ८. अन्यप्रतिषेधाधिकरणम् १३५, १२९.

[सू. ३५. तथान्यप्रतिषेधात्. ३६. अनेन सर्वगतत्वमायामशब्दादिभ्यः.]

अत्र परमेश्वरसदृशमपि वस्त्वन्तरं नास्तीति सिद्धान्तितम् ॥

## ९. फलाधिकरणम् १३५, १३०–१३८.

[सू. ३७. फलमत उपपत्तेः. ३८. श्रुतत्वाच्च. ३९. धर्मं जैमिनिरत एव. ४०. पूर्वं तु बादरायणो हेतुव्यपदेशात्.]

अत्र उक्तः परमेश्वर एव सर्वकर्मणां तत्तद्देवतारूपेण स्वरूपेण च फलदाता भवतीति निरूपितम् ॥

इति तृतीये द्वितीयः पादः

---

[1] बृह. २-३-१. [2] बृ. २-३-६.

# अथ तृतीये तृतीयः पादः

## १. सर्ववेदान्तप्रत्ययाधिकरणम् १३७, १३९–१४४.

[सू. १. सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्. २. भेदादिति चेन्नैकस्यामपि. ३. स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः. ४. दर्शयति च.]

सर्वेषु वेदान्तेषु श्रूयमाणानां दहराद्युपासनानां ऐक्यमेव न तु भेदः, चोदनाद्यविशेषात् इति सिद्धान्तितम् ॥

## २. उपसंहाराधिकरणम् १३७, १४५–१४६.

[५. उपसंहारोऽर्थाभेदात् विधिशेषवत्समाने च.]

उक्तरीत्या विद्यैक्ये सिद्धे तत्तच्छाखास्वनाम्नातानामपि शाखान्तरगतानां गुणानां तत्तदुपासनसम्बन्धिनां सर्वत्र उपसंहारः युक्त इति सिद्धान्तितम् ॥

## ३. अन्यथात्वाधिकरणम् १३८, १४७–१५२.

[सू. ६. अन्यथात्वं शब्दादिति चेन्नाविशेषात्. ७. न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्. ८. संज्ञातश्चेत्तदुक्तमस्ति तु तदपि. ९. व्याप्तेश्च समञ्जसम्.]

[1] अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति तथेति तेभ्यः एष प्राण उद्गायत् ॥ [2] अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासांचक्रिरे इत्यादिवाक्यम् ॥

एतत्प्रकरणद्वयोक्तयोः उद्गीथविद्ययोः नैक्यं, प्रकरणभेदात् इति सिद्धान्तितम् ॥

## ४. सर्वाभेदाधिकरणम्, १३८, १५२.

[सू. १०. सर्वाभेदादन्यत्रेमे.]

[3] यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा ज्येष्ठश्च श्रेष्ठश्च ॥ [4] अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति, अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं

[1] बृह. १–३-७. [2] छा. १–२–७ [3] छा०. ५-१-१. [4] छा०. ५-१-१३.

तत्प्रतिष्ठासीति, अथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत्सम्प-दसीति, अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतन-मसीति इत्यादिवाक्यम् ॥

कौषीतक्यादिशाखास्वनुक्ताः अपि वसिष्ठत्वादिगुणाः अन्य-त्रोक्ताः प्राणोपासने उपसंहर्तव्या एवेति सिद्धान्तितम् ॥

## ५. आनन्दाद्यधिकरणम् १३८, १५३-१५८.

[सू. ११. आनन्दादयः प्रधानस्य. १२. प्रियशिरस्त्वाद्यप्राप्ति-रुपचयापचयौ हि भेदे. १३. इतरे त्वर्थसामान्यात्. १४. आध्या-नाय प्रयोजनाभावात्. १५. आत्मशब्दाच्च. १६. आत्मगृही-तिरितरवदुत्तरात्. १७. अन्वयादिति चेत् स्यादवधारणात्.]

परशिवब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते ते सर्वेऽपि सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः इति सिद्धान्तितम् ॥

## ६. कार्याख्यानाधिकरणम्.

[सू. १८. कार्याख्यानादपूर्वम्.]

[1] तस्मादेवंवित् अशिष्यन्नाचामेत् अशित्वाचाचामेत् एतमेव तदनमनग्नं कुरुते इत्यादिवाक्यम् ॥

आचमनस्य स्मृत्याचारप्राप्तत्वेन नास्यात्र विधेयत्वं, किन्तु आचमने प्राणवासस्त्वस्यैवेति सिद्धान्तितम् ॥

## ७. समानाधिकरणम् १३९, १५९.

[सू. १९. समान एवं चाभेदात्.]

[2] आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पं आकाशात्मानम् ॥ [3] मनोमयोऽयं पुरुषः भास्सत्यः तस्मिन्नन्त-र्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्व-स्याधिपतिः सर्वमिदं प्रशास्ति इत्यादि ॥ एतदुभयत्राप्युक्तानां धर्माणां अभेदात् तत्रोक्तायाः शाण्डिल्यविद्यायाः ऐक्यमेवेति सिद्धान्तितम् ॥

---

[1] बृ. ६-१-१४. [2] माध्यन्दिनशाखायाम्. [3] बृ. ५-६-१.

## ८. सम्बन्धाधिकरणम् १३९, १५९–१६०.

[सू. २०. सम्बन्धादेवमन्यत्रापि. २१. न वा विशेषात्.]

[1] य एष एतस्मिन् मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन् इत्युपक्रम्य [2] तस्योपनिषदहः इत्याधिदैवतम्, [3] तस्योपनिषदहमित्यध्यात्मम् इत्युक्तम् ॥

अत्र अहः अहं इति उपनिषदौ रहस्यनामनी उभयत्रापि नोपसंहार्ये, आदित्याक्षिस्थानविशेषसम्बन्धित्वेनोपास्यभेदात् विध्यैक्याभावादित्युक्तम् ॥

## ९. मण्डलविद्याधिकरणम् १३९, १६०.

[२२. दर्शयति च.]

[4] य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः ॥ [5] य एषोऽन्तरादित्ये हिरण्मयः—इत्यारभ्य [6] सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु इत्युक्तम् ॥

छान्दोग्यतैत्तिरीययोराम्नाता मण्डलविद्या न भिन्ना, 'अन्तरादित्य' इति उभयत्रापि स्थानैक्यनिर्देशात् इति सिद्धान्तितम् ॥

## १०. सम्भृत्याधिकरणम् १३९, १६१.

[सू. २३. सम्भृति द्युव्याप्त्यपि चातः]

[7] ब्रह्मज्येष्ठा वीर्या सम्भृतानि। ब्रह्माग्रे ज्येष्ठं दिवमाततान। ऋतस्य ब्रह्म प्रथमोत जज्ञे। तेनार्हति ब्रह्मणा स्पर्धितुं कः इत्यादि वाक्यम् ॥

अत्रोक्तवीर्यसम्भृति द्युव्याप्त्योः सर्वासु परविद्यासु नोपसंहारः, किन्तु अल्पस्थानव्यतिरिक्तासु वैश्वानर विद्यादिष्वेवोपसंहारः इत्युक्तम् ॥

---

[1] बृह–५-४-३. [2] बृह. ५-४-३. [3] बृह. ५-४-४. [4] छा. ४-१५-१. [5] महाना. १०-१. [6] महाना. १०-११. [7] तै. ब्रा. २-४-७.

## ११. पुरुषविद्याधिकरणम् १४०, १६२–१६४.

[सू. २४. पुरुषविद्यायामपि चेतरेषामनाम्नानात्.]

[1] पुरुषो वा व यज्ञः, तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातः सवनम् ॥ [2] तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिः इत्यादि वाक्यम् ॥

अत्र छान्दोग्यतैत्तिरीयकयोः आम्नाता पुरुषविद्या भिन्नैवेति सिद्धान्तितम् ॥

## १२. वेधाद्यधिकरणम् १४०, १६५.

[सू. २५. वेधाद्यर्थभेदात्.]

[3] शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओम् शान्तिः शान्तिः शान्तिः ॥

[4] सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि-नावधीतमस्तु मा विद्विषावहै । ओम् शान्तिश्शान्तिश्शान्तिः ॥ इत्यादि वाक्यम् ॥

अत्र इमौ मन्त्रौ न विद्याङ्गभूतौ इति सिद्धान्तितम् ॥

## १३. हानोपायनाधिकरणम् १४०, १६६–१७३.

[सू. २६. हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युप-गानवत्तदुक्तम्.]

अत्र पुण्यपापहानौ तदुपायनसमुच्चयः निर्णीतः ॥

## १४. साम्परायाधिकरणम् १४१, १७४-१७८.

[सू. २७. साम्पराये तर्तव्याभावात् तथा ह्यन्ये. २८. छन्दत उभयाविरोधात्. २९. उपपन्नः तल्लक्षणार्थोपलब्धेर्लोकवत्. ३०. गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः.]

---

[1] छा. ३-१६-१. [2] महाना. १८-१. [3] तै. उ. १-१. [4] तै. उ. आ.

अत्र जीवानां देहवियोगकाले यथा पापानां विनाशः, एवं विरजातिक्रमणकालेऽपीति सिद्धान्तितम् ॥

## १५. आधिकारिकाधिकरणम्.

[सू. ३१. यावदधिकारमवस्थितिराधिकारिकाणाम्.]

अत्र अधिकारपुरुषाणां देहपातादूर्ध्वमपि आप्रारब्धाधिकार हेतुकर्मविनाशात् फलान्तरानुभव एव, न मुक्तिरिति सिद्धान्तितम् ॥

## १६. अनियमाधिकरणम् १४१, १७९-१८१.

[सू. ३२. अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्.]

अत्र सर्वेषामुपासकानां अर्चिरादिगतिर्नियतैवेति सिद्धान्तितम् ॥

## १७. अक्षरध्यधिकरणम् १४२, १८१-१८५.

[सू. ३३. अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यां औपसदवत्तदुक्तम्. ३४. इयदामननात्.]

अत्र अस्थूलादिनिषेधानां परविद्यासु सर्वासूपसंहारः न्याय्यः इति सिद्धान्तितम् ॥

## १८. अन्तराभूतग्रामाधिकरणम् १४२, १८६-१८८.

[सू. ३५. अन्तराभूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्. ३६. व्यतिहारो विशिंषन्ति हीतरवत्.]

[1] अथ हैनमुषस्तः चाक्रायणः पप्रच्छ, याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व इत्येव त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तरः एष त आत्मा सर्वान्तरः ॥ स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्या-

---

[1] बृह. ३-४-२,

चक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः। न दृष्टेः द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेः विज्ञातारं विजानीयाः एष त आत्मा सर्वान्तरः अतोऽन्यदार्तं ततो हौषस्तश्चाक्रायण उपरराम ॥

[1] अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरः योऽशनाया पिपासे शोकं जरां मोहं जरां मृत्युमत्येति इत्यादिवाक्यं विषयः ॥

अत्र उषस्तिप्रश्नप्रतिवचनत्वेन कहोळप्रश्नप्रतिवचनत्वेन च निर्दिष्टा एकैव विद्या, न तु विद्याभेदः इति सिद्धान्तितम् ॥

## १९. सत्याधिकरणम् १४३, १८९.

[सू. ३७. सैव हि सत्यादयः.]

उक्तन्यायेन सद्विद्यापि न प्रश्नभेदेन भिन्ना किन्तु एकैवेति सिद्धान्तितम् ॥

## २०. कामाधिकरणम् १४३, १८९-१९०.

[सू. ३८. कामादयस्तत्र चायतनादिभ्यः.]

[2] यदिदमस्मिन् पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः ॥ [3] दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ॥ [4] य एषोन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ॥ [5] हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्। इत्यादिवाक्यं विषयः ॥

अत्र आसु छान्दोग्य-तैत्तिरीय-वाजिशाखा-कैवल्योपनिषत्सु श्रूयमाणा दहरविद्या अभिन्नैव इति सिद्धान्तितम् ॥

## २१. अलोपाधिकरणम् १४३, १९०.

[सू. ३९. आदरादलोपः.]

श्रुत्युक्तानां सत्यज्ञानानन्दत्व-अपरिच्छिन्नस्वरूपत्व-सर्वज्ञत्व-नित्यतृप्तत्व-स्वतन्त्रत्व—अनादिप्रकाशत्व—अनन्तालुप्तशक्तिकत्व-

---

[1] बृह. ३-४-३. [2] छान्दो. ८-१-१, २. [3] महाना. ८-१६. [4] बृह. ४-४-२२. [5] कैवल्य. ६.

आत्मारामत्व-अन्तरनुभवैकविषयपरमानन्दत्व-उपशान्तत्व-अमृतत्व नीलकण्ठत्व—विरूपाक्षत्व—उमासहितत्व—सर्वात्मकत्वादिधर्मेषु कस्यापि धर्मस्य परे ब्रह्मणि लोपाभावः सिद्धान्तितः ॥

## २२. तद्वचनाधिकरणम् १४३–१९१.

[सू. ४०. उपस्थितेऽतस्तद्वचनात्.]

अत्र सगुणमेव ब्रह्म मुक्तप्राप्यमिति सिद्धान्तितम् ॥

## २३. तन्निर्धारणाधिकरणम् १४३, १९२–१९३.

[सू. ४१. तन्निर्धारणानियमः तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्.]

उद्गीथादिकर्माङ्गावबद्धानां उपासनानां कर्मस्वनियतत्वं सिद्धान्तितम् ॥

## २४. प्रदानाधिकरणम् १४३, १९३.

[सू. ४२. प्रदानवदेव तदुक्तम्.]

परविद्योपास्यवस्तुन ऐक्येऽपि चिन्तनीयगुणभेदात् विद्याभेदस्य न्याय्यत्वं समर्थितम् ॥

## २५. लिङ्गभूयस्त्वाधिकरणम् १४३, १९४.

[सू. ४३. लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि.]

[1] सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमं हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः । इत्यादिषु सर्वात्मत्वेन उमापतित्वेन च श्रूयमाणं परं ब्रह्मैव सर्वास्वपि परविद्यासु उपास्यमिति निर्णीतम् ॥

## २६. पूर्वविकल्पाधिकरणम् १४३, १९४–१९९.

[सू. ४४. पूर्वविकल्पः प्रकरणात् स्यात् क्रियासमासवत्. ४५. अतिदेशाच्च. ४६. विद्यैव तु निर्धारणाद्दर्शनाच्च. ४७. श्रुत्यादि बलीयस्त्वाच्च न बाधः. ४८. अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत्

---

[1] महाना, १०–११,

दृष्टश्च तदुक्तम्. ४९. न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः. ५०. परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः.]

[1]षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् मनोमयान् मनश्चितः इत्यादिवाक्यम् ॥ अत्र मनश्चिदादिगणस्य विद्यामयक्रत्वङ्गत्वं निर्णीतम् ॥

## २७. शरीरे भावाधिकरणम् १४४, २००–२०३.

[सू. ५१. एक आत्मनः शरीरे भावात्. ५२. व्यतिरेकस्तद्भावभावित्वात् न तूपलब्धिवत्.]

परविद्यासु शिवस्य प्रत्यगात्मत्वेनानुसन्धानं युक्तमेवेति सिद्धान्तितम् ॥

## २८. अङ्गावबद्धाधिकरणम् १४४, २०४–२०५.

[सू. ५३. अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्. ५४. मन्त्रादिवद्वाऽविरोधः.]

भस्मोद्धूलनादयः उपासनाङ्गावबद्धाः सर्वैरपि ब्रह्मोपासकैः कार्या एवेति सिद्धान्तितम् ॥

## २९. क्रतुज्यायस्त्वाधिकरणम् १४४, २०५–२०६.

[सू. ५५. भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति.]

अनेन वैश्वानरविद्यायां समस्तोपासनस्यैव मुख्यत्वं निर्णीतम् ॥

## ३०. नानाशब्दाद्यधिकरणम् १४५, २०७.

[सू. ५६. नानाशब्दादिभेदात्]

अत्र ब्रह्मणः स्वरूपैक्येऽपि गुणभेदात्, अनन्तश्रुतिबोध्यानां अनन्तानां विद्यानां एकीकृत्यानुष्ठानायोगात् विद्याभेदः युक्त एवेति सिद्धान्तितम् ॥

## ३१. विकल्पाधिकरणम् १४५, २०७.

[सू. ५७. विकल्पोऽविशिष्टफलत्वात्.]

अत्र एकस्मिन् उपासके सर्वासां परविद्यानां विकल्प एव, एकेनैवोपासनेन प्रयोजनसिद्धौ उपासनान्तरस्यानावश्यकत्वादिति सिद्धान्तितम् ॥

---

[1] शतपथे अग्निरहस्ये, ५-३.

## ३२. यथाकामाधिकरणम् १४५, २०८.

[सू. ५८. काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्.]

अत्र काम्यविद्याविषये समुच्चयः सिद्धान्तितः ॥

## ३३. यथाश्रयाधिकरणम् १४५, २०९-२१२.

[सू. ५९. अङ्गेषु यथाश्रयभावः. ६०. शिष्टेश्च. ६१. समाहारात्. ६२. गुणसाधारण्यश्रुतेश्च. ६३. न वा तत्सहभावाश्रुतेः ६४. दर्शनाच्च.]

अत्र उद्गीथाद्यङ्गावबद्धोपासनानां स्वातन्त्र्यं निर्णीतम् ॥

इति तृतीये तृतीयः पादः

---

# अथ तृतीये चतुर्थः पादः

## १. पुरुषार्थाधिकरणम् १४५, २१३-२५२.

[सू. १. पुरुषार्थोऽतश्शब्दादिति बादरायणः. २. शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः. ३. आचारदर्शनात्. ४. तच्छ्रुतेः. ५. समन्वारम्भणात्. ६. तद्वतो विधानात् ७. नियमात्. ८. अधिकोपदेशात्तु बारायणस्यैवं तद्दर्शनात्. ९. तुल्यं तु दर्शनम् १०. असार्वत्रिकी. ११. विभागः शतवत्. १२. अध्ययनमात्रवतः. १३. नाविशेषात्. १४. स्तुतयेऽनुमतिर्वा. १५. कामकारेण चैके. १६. उपमर्दं च. १७. ऊर्ध्वरेतस्सु च शब्दे हि.]

अत्र ज्ञानस्यैव प्राधान्येन मोक्षहेतुत्वं समर्थितम् ॥

## २. परामर्शाधिकरणम् १४८, २५३-२७१.

[सू. १८. परामर्शं जैमिनिरचोदनाच्चापवदति हि. १९. अनुष्ठेयं बादरायणः साम्यश्रुतेः. २०. विधिर्वा धारणवत्.]

अत्र गृहस्थाद्याश्रमवत् सन्न्यासाश्रमस्याप्यनुष्ठेयत्वं, तत्र अग्न्युद्वासनदोषाभावश्च प्रतिपादितः ॥

## ३. स्तुतिमात्राधिकरणम् १५०, २७२.

[सू. २१. स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्. २२. भावशब्दाच्च.]

[1] ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम् । एषां भूतानां पृथिवीरसः पृथिव्या आपो रसः अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः वाचः ऋग्रसः ऋचस्सामरसः साम्न उद्गीथो रसः। स एषः रसानां रसतमः परमः पराध्योऽष्टमो यदुद्गीथः इत्यादि वाक्यम् ॥

अत्र उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव, न स्तुतिमात्रमिति निरूपितम् ॥

## ४. पारिप्लवाधिकरणम् १५०, २७३-२७४.

[सू. २३. पारिप्लवार्था इति चेन्न विशेषितत्वात्. २४. तथा- चैकवाक्यतोपबन्धात्.]

[2]प्रतर्दनो ह वै दैवोदासिः इत्याद्याख्यायिकाः न पारिप्लवार्थाः, किन्तु विद्यार्थाः इति निर्णीतम् ॥

## ५. अग्नीन्धनाधिकरणम् १५०, २७५-२७६.

[सू. २५. अत एव चाग्नीन्धनाद्यनपेक्षा.]

अत्र सन्न्यासिनां कर्मानपेक्षत्वं सिद्धान्तितम् ॥

## ६. सर्वापेक्षाधिकरणम् १५०, २७७.

[सू. २६. सर्वापेक्षा च यज्ञादिश्रुतेः अश्ववत्.]

अत्र गृहिणां विद्या यज्ञादिकर्मसापेक्षैवेति निर्णीतम् ॥

## ७. शमदमाद्यधिकरणम् १५१, २७८-२७९.

[सू. २७. शमदमाद्युपेतः स्यात्तथपि तु तद्विधेस्तदङ्गितया तेषामप्यवश्यानुष्ठेयत्वात्.]

[3]शान्तो दान्तः उपरतः तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मनं पश्येत्। श्रद्धाभक्तिध्यानयोगादवेहि । इत्यादि वाक्यम ॥

---

[1] छां. १-१-१. [2] कौ. ३-१-१. [3] बृ. ४-४-२३.

